श्रीमन्मूलरामो विजयते　　　　　　　　　　　　　　　　　　श्रीमत्परिमळाचार्यः प्रसीदतु



श्रीमदानन्दतीर्थीय सच्छास्त्रामृतवर्षकः ।
श्रीमत्परिमळोनाम भाति प्रकटनालयः ॥
मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते ।
राजराजायते रिक्तो राघवेन्द्रं तमाश्रये ॥

सुविदितमेवैतत् प्रेक्षावतां नैजसुखानुभूतिं कामयमानानां यत् निखिलनिगमगेगीयमानमहिमाकरस्य वन्दिताशेष-वन्द्योरुवृन्दारकस्य कृपापारावारस्य लक्ष्मीजानेः प्रसादमन्तरेण नैजसुखं नानुभूयते । स च प्रसादः तदपरोक्षज्ञानादृते न भवति । तच्च शास्त्रजन्यपरोक्षज्ञानं विहायेति च ॥

तादृशं च शास्त्रं कलिमलकलुषितमानुषानां सज्जनानामुद्दिधीर्षया चतुर्मुखमुखबर्हिर्मुख मुखरैरभ्यर्चितस्य भगवतो नारायणस्य अनुज्ञया भूषितभूतलैः अज्ञानादिदोषविधुरैः प्रसादमात्रेण स्वभक्ताशेषसंशयनिवर्तकैः पावनैः पावनैः श्रीमदानन्द तीर्थेत्यन्वर्थकनामविभूषितैर्देशिकवरैः विरचितमेव ॥

तच्छास्त्रमपि गुरुमुखत अधीतमेव तादृक् परिज्ञानायालम् । तदर्थं गुरुप्रसादोप्यवश्यं मुमुक्षुणा संपादनीयः अत एवोक्तं "न स्यादीशप्रसादो गुरुवरकरुणामन्तरेणे" ति, "मुकुन्दभक्त्यै गुरुभक्तिजायै" इति च । "यस्य प्रसादात्, यस्य देवे परा भक्ति" रित्यादि श्रुतिरपि अमुमेवार्थं प्रतिपादयति । ते च गुरवः पूर्वोक्तगुणगणमण्डिताः रमाव्यतिरिक्तपूर्वप्रसिद्धव्यतिरिक्तानन्तवेदप्रतिपाद्याः श्री सर्वज्ञाचार्याः तच्छिष्य तत्परंपरागत श्रीमत्पद्मनाभतीर्थ श्रीटीकाकृत्पाद श्रीपादराज श्रीमच्चन्द्रिकाचार्य श्रीमद्विजयीन्द्रतीर्थ श्रीमद्वादिराज श्रीमत्सुधीन्द्र श्रीमत्परिमळाचार्य श्रीमत्सुमतीन्द्रतीर्थ श्रीवादीन्द्रतीर्थ श्रीपादप्रमुखा देशिकभरवः ॥

एतेषां प्रसादमन्तरेण तत्वशास्त्रं यथातत्तया वेदितुं न शक्यते । एवमेव एतेषां संस्थानविद्यासाम्राज्य पदमधिरूढानां गुरूणां प्रसादोपि अवश्यं संपादनीयः । अधुना तादृशगुरुसार्वभौमानां द्वैतवेदान्तविद्यासाम्राज्यदिग्विजय विद्यासिंहासने विराजमानानां शमदमादिगुणगणविभूषित वदान्यवरेण्य सन्ततसत्सिद्धान्त प्रवचनपरितोषित श्रीबादरायणानुकंपाऽऽसादितामलयशश्चन्द्रिकाराराजिताशामुख प्रतिवादिमत्तेभपञ्चास्य श्रीमत्सुव्रतीन्द्रतीर्थ वरकुमारक श्रीमत्सुयमीन्द्रतीर्थ पूज्यपादानां द्वादशवर्षीयपट्टाभिषेक महोत्सवसमये तेषां सविधे समर्पणीयं महार्हं ग्रन्तरत्नमेकमिति मनीषया नैकशास्त्रपाथोधिपारंगतान् अभ्यर्थ्य सिद्धान्त परमप्रमेय न्याय व्याकरण मीमांसा शास्त्रसंग्रह श्रीसुधीन्द्रकविताकौशल्य सदाचार आयुर्वेद योगप्रमुख विषयावेदकानि तेषां गीर्वाणभाषामयलेखनानि तथा लौकिकविद्यापारदृश्वनां महाशयानां आंग्लकर्णाटभाषामयानि लेखनानि च संगृह्य पुस्तकमेकं तद्गुरूणां पादपद्मजयोः सविनयप्रणामपूर्वकं समर्पितमिदं अधुना मुद्रयित्वा श्रीमद्गुरुसार्वभौमानां भक्तजनमोदाय प्रकटीक्रियते ॥

वाचकमहाशया आमूलाग्रं ग्रन्थमिममवलोक्य यदाऽऽनन्दभरिता भवेयुः तदैव अस्माकीनोद्यमोयं सफल इति जाने । एतत् ग्रन्थसमर्पणेन समुदितमनसः श्रीचरणाः अस्माकं इतोप्यधिकतया सच्छास्त्रग्रन्थप्रकटीकरणसामर्थ्यं वितरेदिति श्रीमत्परिमळाचार्योपासितचरणनलिन श्रीभारतीशान्तर्गत श्रीमूलरघुपतिवेदव्यासदेवौ संप्रार्थयन्तु इति तान् प्रणामपूर्वकं सप्रश्रयमभ्यर्थये । वाचकमहाशयाः समग्रग्रन्थममुं सादरं समवलोक्य अस्मान् प्रोत्साहयन्तीति विश्वसिमि । अचिरादेव श्रीमद्विजयीन्द्रतीर्थ श्रीपादविरचितं 'उपसम्हारविजया' ख्यं ग्रन्थरत्नं प्रकटीक्रियते इति निवेदयितुं मोमुदीति मन्मन इति शम् ॥

दुर्मुख मार्गशीर्ष शुक्ल ७. रविवासरः　　　　　　　　　　विद्वदनुचरः,
महासदनम्　　　　　　　　　　　　　　　　　　　　　राजा. श्री गुरुराजाचार्यः
नञ्जनगूडु　　　　　　　　　　　　　　　　　　　　　संपादकः, प्रकाशकश्च.



कर्णाटक विद्या सिम्हासनाधीश्वराः
श्रीमच्चन्द्रिकाकृत्पादाः

# PREFACE

It is a fact well known to the public that "The Parimala Publishing House" came in to existance twelve years ago with the sole purpose of bringing to light great works of well-known scholars covering the vast field, of Philosophy, Religion, Culture and Haridasa literature. Yet, the first and foremost purpose of our Publishing House has been, to bringforth the 104 great, works of Sree Vijayeendra, the unconquered Scholar of the philosophical world. We have already presented to the lovers of Philosophy, three works of Sree Vijayeendra.

About twelve years ago, when Sri, Sri (108)Suyameendra Thirtha Sreepadangalu, occupying the holy Digvijaya Simhasanam of Nanjangood Sree Raghavendra Swami Mutt, the Mukhya Samstanam of Sree Jagadguru Madhvacharya, and the Royal patron of our Publishing House, completed twelve years of his holy ministry, we had intended to publish a volume to commemorate the happy occasion. With that intention, we had collected articles of various interest in Sanskrit, English and Kannada by leading scholars of the day and got them printed. But we feel sorry, that due to unavoidable circumstances we could not publish the volume in time. But another such happy occasion has now approached viz, that Sri, Sri Suyameendra Thirtha Sreepadangalu has completed sixty years of his holy life. We are glad to inform the public, that we are now publishing the volume mentioned above called "Sattatva Ratnavali (Aspects of Dwaita Philosophy) to celebrate the sixtyeth birthday of our beloved Swamiji.

In advance we request the readers to excuse for the printing errors that might have crept in the volume.

We feel happy to inform the readers that hereafter we will publish regularly, the great and ancient works of weell-known authors. As a first step, we are bringingforth "Upasamhara Vijayam" of Sree Vijayeendra within a short time. We expect from the public all possible support to our publications.

We will only be very much satisfied if the present volume "Sattatva Ratnavali" attracts the attention and interest of the reading public.

9-12-1956
"Big House"
Nanjangud.

Raja, S. Gururajacharya
Editor and Publisher
Parimala Publishing House



चतुःषष्टि कला पारंगताः
श्रीमद्विजयीन्द्रतीर्थ श्रीमच्चरणाः



कलियुग कल्पतरवः

श्रीमद्राघवेन्द्र गुरुसार्वभौमाः

# ನಮ್ಮ ಮಾತು

ತತ್ವಶಾಸ್ತ್ರ, ಧರ್ಮ, ಸಂಸ್ಕೃತಿ, ಕರ್ನಾಟಕ ಹರಿದಾಸ ಸಾಹಿತ್ಯಾದಿ ಗ್ರಂಥಗಳ ಪ್ರಕಟನೆಗಾಗಿ ಪರಿಮಳ ಗ್ರಂಥ ಪ್ರಕಾಶನ ಮಂದಿರವು ಜನ್ಮತಾಳಿ ಇಂದಿಗೆ ಹನ್ನೆರಡು ವರ್ಷಗಳಾದ ವಿಚಾರ ಸರ್ವರಿಗೂ ತಿಳಿದ ವಿಷಯ.

ವೇದಾಂತಾದಿ ಶಾಸ್ತ್ರ ಪ್ರಕಟನೆಯೇ ನಮ್ಮ ಉದ್ದಿಶ್ಯವಾದರೂ ಮುಖ್ಯವಾಗಿ ತತ್ವಪ್ರಪಂಚದಲ್ಲಿ ಅಜಯ್ಯರೆನಿಸಿ ನೂರಾನಾಲ್ಕು ಗ್ರಂಥಗಳನ್ನು ರಚಿಸಿ ದಿಗಂತ ವಿಶ್ರಾಂತ ಕೀರ್ತಿಯಿಂದ ರಾರಾಜಿಸಿದ ಶ್ರೀ ವಿಜಯೀಂದ್ರ ತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರ ಅಮೂಲ್ಯವಾದ ಅಪ್ರಕಾಶಿತ ಗ್ರಂಥಗಳನ್ನು ಪ್ರಕಟಿಸುವುದೇ ನಮ್ಮ ಮುಖ್ಯ ಧ್ಯೇಯವಾಗಿದೆ.

ಈವರಿಗೆ ಶ್ರೀ ವಿಜಯೀಂದ್ರ ತೀರ್ಥರ ಮೂರು ಗ್ರಂಥಗಳನ್ನು ಪ್ರಕಟಿಸಿ ವಿದ್ವತ್ಪ್ರಪಂಚಕ್ಕೆ ನೀಡಿರುವೆವು.

ಶ್ರೀಮನ್ಮಧ್ವಾಚಾರ್ಯರ ಮುಖ್ಯ ಸಂಸ್ಥಾನಾಧೀಶ್ವರ ಜಗದ್ಗುರು ಶ್ರೀ ರಾಘವೇಂದ್ರ ಸ್ವಾಮಿಗಳವರ ಮತೀಯ ದಿಗ್ವಿಜಯ ವಿದ್ಯಾ ಸಿಂಹಾಸನಾಧೀಶ್ವರರೂ, ನಮ್ಮ ಪ್ರಕಾಶನ ಮಂದಿರದ ಸಾಮ್ರಾಟ್ ಪೋಷಕರೂ ಆದ ಶ್ರೀಮತ್ಪೂಜ್ಯ ೧೦೮ ಶ್ರೀಮತ್ಸುಯಮೀಂದ್ರತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರು ಶ್ರೀಮದಾಚಾರ್ಯರ ಮಹಾ ಪೀಠದಲ್ಲಿ ಪಟ್ಟಾಭಿಷಿಕ್ತರಾದ ದ್ವಾದಶ ವರ್ಷಗಳ ಜ್ಞಾಪಕಾರ್ಥವಾಗಿ, ಒಂದು ಗ್ರಂಥರತ್ನವನ್ನು ಅರ್ಪಿಸಲು ಯೋಚಿಸಿ ಸಂಸ್ಕೃತಾಂಗ್ಲ ಕರ್ಣಾಟಕ ಭಾಷಾಕೋವಿದರುಗಳಿಂದ ಅಮೂಲ್ಯ ಲೇಖನಗಳನ್ನು ಬರೆಸಿ ಗ್ರಂಥ ವನ್ನು ಮುದ್ರಿಸಿ ಸುಮಾರು ಹನ್ನೆರಡು ವರ್ಷಗಳಾದವು. ಅನೇಕ ಅಡಚಣೆಗಳಿಂದ ಪ್ರಕಟಿಸಲಾಗದ "ಸತ್ತತ್ತ್ವ ರತ್ನಾವಳಿ" ಎಂಬ ಆ ಗ್ರಂಥವನ್ನು ಈಗ ಶ್ರೀಪಾದಂಗಳವರ ಷಷ್ಟ್ಯಬ್ದಪೂರ್ತಿ ಮಹೋತ್ಸವದಲ್ಲಿ ಪ್ರಕಟಿಸಿ ಶ್ರೀಪಾದಂಗಳವರ ಚರಣ ಸನ್ನಿಧಿಯಲ್ಲಿ ಅರ್ಪಿಸಲು ಬಹಳ ಹರ್ಷಿಸುತ್ತೇವೆ. ಬಹು ಜಾಗರೂಕತೆಯಿಂದ ಮುದ್ರಿಸಿದರೂ ಕೆಲವು ಮುದ್ರಣ ದೋಷಗಳು ಉಳಿದಿವೆ. ಅದನ್ನು ಸಜ್ಜನರು ಮನ್ನಿಸುವರೆಂದು ನಂಬಿದ್ದೇವೆ.

ಇನ್ನು ಮುಂದೆ ಸಕ್ರಮವಾಗಿ ಪ್ರಾಚೀನ ಗ್ರಂಥಗಳನ್ನು ಪ್ರಕಟಿಸಿ ವಿದ್ವತ್ಪ್ರಪಂಚಕ್ಕೆ ಅರ್ಪಿಸುತ್ತೇವೆಂದು ತಿಳಿಸಲು ಸಂತೋಷಿಸುತ್ತೇವೆ. ನಮ್ಮ ಮುಂದಿನ ಪ್ರಕಟನೆ ಶ್ರೀ ವಿಜಯೀಂದ್ರತೀರ್ಥ ಶ್ರೀಪಾದಂಗಳವರಿಂದ ರಚಿತವಾದ "ಉಪಸಂಹಾರ ವಿಜಯ".

ಪ್ರಾಚೀನ ಗ್ರಂಥ ಪ್ರಕಟನೆಗಾಗಿ ಶ್ರಮಿಸುತ್ತಿರುವ ಪರಿಮಳ ಪ್ರಕಾಶನ ಮಂದಿರಕ್ಕೆ ಸಜ್ಜನರು ಸಂಪೂರ್ಣ ಸಹಾಯ ನೀಡುವರೆಂದು ನಂಬಿದ್ದೇವೆ.

ಈಗ ಪ್ರಕಟಿಸಿರುವ "ಸತ್ತತ್ತ್ವ ರತ್ನಾವಳಿ" ಗ್ರಂಥವನ್ನು ನೋಡಿ ವಿದ್ವಾಂಸರು ಮೋದಗೊಂಡಲ್ಲಿ ನಮ್ಮ ಶ್ರಮ ಸಾರ್ಥಕವೆಂದು ಭಾವಿಸುವೆವು.

ದುರ್ಮುಖಿ ಸಂ॥ ಮಾರ್ಗಶಿರ
ಶುಕ್ಲ ಸಪ್ತಮಿ
ನಂಜನಗೂಡು.

ವಿದ್ವದನುಚರಃ
**ರಾಜಾ ಶ್ರೀ ಗುರುರಾಜಾಚಾರ್ಯ**
ಸಂಪಾದಕ ಮತ್ತು ಪ್ರಕಾಶಕ



श्रीमन्मूलरामार्चनरताः

श्रीमत्सुयमीन्द्र तीर्थ पूज्यपादाः

श्रीमन्मध्वाचार्य मुख्य संस्थानाधीश्वराः
श्रीमत्सुधर्मेन्द्र तीर्थ श्रीमच्चरणाः



शास्त्राटवी सञ्चलनप्रमोदी दुर्वादि मत्तेभ विदारणक्षमः ।
वेदान्त साम्राज्य गुहाप्रविष्टो राजत्ययं श्री सुधर्मेन्द्र केसरी ॥

# सत्तत्त्वरत्नावलिः

॥श्रीः॥

श्रीमत्परमहंस-
परिव्राजकाचार्यवर्य-
पदवाक्यप्रमाणपारावार-
पारङ्गत सर्वतन्त्रस्वतन्त्र-
यमनियमासन प्राणायामप्रत्या-
हार ध्यानधारणाध्यष्टाङ्गयोगानुष्ठान-
गरिष्ठ श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापना-
चार्य षड्दर्शनाचार्य निखिलविद्याचक्रवर्ति
श्रीमन्मूलरघुपतिदेव दिव्यश्रीपाद-
पद्माराधक जगद्गुरु श्रीमन्मध्वा-
चार्य मुख्यमहासंस्थानाधीश्वर
कामिताशेषकल्याणकल्पना-
कलुषितकल्पपादप
चतुःषष्टिकला-
परिपूर्ण
वेदत्रयादि
विवरणजनिता-
मोघामलयशोबाभाषिता-
शामुखकर्मन्दिवर्यवृन्दनुतपदपाथोजनि
श्रीमद्राघवेन्द्रगुरुसार्वभौममठीय दिग्विजय
विद्यासिंहासनाधीश्वर श्रीमत्सुशीलेन्द्रतीर्थश्रीपाद-
करकमलसञ्जात श्रीमत्सुव्रतीन्द्रतीर्थश्रीपादवरकुमारक
श्रीमत्सुयमीन्द्रतीर्थश्रीपादवरेण्यानां द्वादशवार्षिकमहोत्सवे
तेषां सन्निधौ
समर्पितोयं उपहाररूपः कृतिप्रवरः

समर्पयितारः

कवितिलकाः, साहित्यालङ्काराः,
विद्यावैभवाः, वेदान्तशिरोमणयः
राजा. श्री॥ गुरुराजाचार्याः

वेदान्तरत्नं
हु॥ कृ॥ वेदव्यासाचार्याः

# विषयानुक्रमणिका

# English Section

## Contents



## ಕನ್ನಡ ವಿಭಾಗ: ಪರಿವಿಡಿ

# ತಪ್ಪು-ಒಪ್ಪೋಲೆ

1) ಸಂಸ್ಕೃತ ವಿಭಾಗದಲ್ಲಿ 40-41 ನೇ ಪುಟಗಳಿಗೆ 70-71 ಎಂದು ತಪ್ಪಾಗಿ ಮುದ್ರಿತವಾಗಿದೆ. ಅದನ್ನು 40-41 ಎಂದು ತಿದ್ದಿಕೊಳ್ಳಬೇಕು.

2) 46 ಪುಟವಾದ ಮೇಲೆ ಪುನಃ 45-46 ಎಂದು ಮುದ್ರಿವಾಗಿದೆ. ಅದನ್ನು 46 ಕ 46 ಖ ಎಂದು ತಿದ್ದಿಕೊಳ್ಳಬೇಕು.

3) 132 ನೇ ಪುಟವಾದ ಮೇಲೆ ಪುನಃ: 129, 130, 131, 132, 133, 134, 135 136 ಎಂದು ತಪ್ಪಾಗಿ ಮುದ್ರಿತವಾಗಿದೆ. ಅದನ್ನು 133, 134, 135, 136, 137 138, 139, 140 ಎಂದು ತಿಳಿಯಬೇಕು.

4) ಕನ್ನಡ ವಿಭಾಗದಲ್ಲಿ: 8 ನೇ ಪುಟವಾದ ಮೇಲೆ 9 ನೆಯ ಪುಟಕ್ಕೆ 13 ಎಂದು ಬಿದ್ದು ಅದ ರಂತೆಯೇ ಮುಂದುವರಿದಿದೆ. ನಾಲ್ಕು ಪುಟ ಮುಂದುರಿದು ಪ್ರಿಂಟಾಗಿದ್ದರೂ ವಿಷಯ ಮಾತ್ರ ಸರಿಯಾಗಿದೆ.

5) ಹರಿಕಥಾಮೃತಸಾರ 44 ನೇ ಪುಟವಾದ ಮೇಲೆ 49, 50, 51, 52 ಎಂದು ತಪ್ಪಾಗಿ ಮುದ್ರಿತವಾಗಿದೆ. ಅದನ್ನು 45, 46, 47, 48 ಎಂದು ತಿದ್ದಿಕೊಳ್ಳಬೇಕಾಗಿ ವಿನಂತಿ.

# ॥ श्रीमन्मध्वमतम् ॥

म ॥ शा ॥ प्र ॥ वे ॥ पण्डिताः वेंकटराघवेन्द्राचार्याः

श्रीराघवेन्द्र स्वामिनां मठः नंजनगूडु

श्रीराघवेन्द्रतीर्थ श्री चरणाऽमरभूरुहम् ।
कामिताशेषकल्याण कलनो न्मुखमाश्रये ॥

इह खलु निखिल कुलोत्तमस्य दैतेयजनमोहनाय न्यायनयकृतो महर्षे गौतमस्य शापेन द्वापरे परिप्लुतनत्त्वबोधे सुजनस्तोमेऽनुजिघृक्षुभि ब्रह्मरुद्रपुरस्सरै रमर वरेण्यैस्तत्त्वनिर्णयायार्थितो भगवान्नारायणो सत्यवत्यां पराशराद्वतीर्योत्सन्नान्वेदान्बहुधा विभज्य तदर्थनिर्णयाय तदितिकर्तव्यताभूतन्यायनिबन्धनात्मकं चतुःषष्ठ्याधिकपञ्चशत संख्याकं, [ ५६४ ] सूत्रात्मकंब्रह्ममीमांसाशास्त्रं प्रणिनाय ॥

तदुक्तम्—"नारायणाद्विनिष्पन्न" मित्यादिना । तदिदमनतिस्फुटाशयं ब्रह्ममीमांसाशास्त्रं निर्विशेषब्रह्मविषयकतयाऽन्ये व्याचख्युः । श्रीमदानन्दतीर्थभगवत्पादाचार्यास्तु—समस्तचेतनाचेतनविलक्षणं सत्याखिलजगज्जन्मादिकारणं अनन्तापरिमितकल्याणगुणाकरं, वन्दिताशेषवन्द्योरुवृन्दारकं यद्विष्णुरूपं परं ब्रह्म तत्परतया योजयामासुः । तत्र पौरुषागमस्याप्त्यादि मूलत्वेन प्रामाण्यं तदुक्तम्—'आप्त वाक्यतया तेन श्रुतिमूलतया तथा । युक्तिमूलतया चैव प्रामाण्यं त्रिविधं मह' दिति । तदेतत्प्रामाण्यप्रयोजकस्याप्त्यादिमूलत्वस्य श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित भाष्यादावेवेति तदेव व्याससूत्रतात्पर्यविषयीभूतार्थे प्रमाणतमं भवति॥ एतदभिप्रेत्यैव 'श्रीमन्मध्व मत' मित्यभिहितम् ॥

मध्वस्य मतं मध्वमतं । श्रीमच्च तत् मध्वमतंच श्रीमन्मध्वमतमिति व्युत्पत्या श्रीमत्वं मते विशेषितं भवति तथापि धर्मिपारतन्त्र्यान्वयेन मध्वाचार्येष्वप्यन्वेति । तथाच श्रीमान्यो मध्वः तस्य यत् श्रीमन्मतमिति पर्यवसितार्थः एतदेवाभिहितं 'नव्यदुरुक्ति शिक्षायां' 'भाष्यप्रामाण्य निर्णीत आप्तोक्तत्वादिहेतुभिः । तेषु त्वानन्दतीर्थीयं भाष्यमेवोक्तहेतुमत् ।' इति। आचार्येषु श्रीमत्वंच निगमगेगीयमान महामहिमोपेत श्री पवमानांशत्वमेव । तच्च श्रुतिस्मृतिप्रमुखप्रमाणप्रसिद्धम् । तथाहि — "तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्तयोषणः', 'मध्वो वोनाममरुतो यजत्राः प्रजज्ञेषुशवसंवदेति', 'तदस्यप्रियमभिपाथो अस्यां नरो देवयवोमदन्ति', "उरुक्रमस्य सहिबन्धुरित्था विष्णोः पदे परमे मध्व उत्सः' इत्यादि श्रुतयः एतेषां वायोस्तृतीयावतारत्वप्रतिपादिकाः । 'हरिवंशे—वायोःर्दिव्यानि रूपाणि पद्मत्रय युतानि च । त्रिकोटि मूर्ति संयुक्तो त्रेतायां राक्षसान्तकः । हनुमानितिविख्यातो रामकार्यधुरंन्धरः । सवायुर्भीमसेनोऽभूद्वापरान्तेकुरूद्वहः ॥ कृष्णंसम्पूजयामास हत्वा दुर्योधनादिकान् । द्वैपायनस्यसेवार्थं बदर्यान्तु कलौयुगे ॥ यतिरूपधरो वायुर्भविष्यति न संशयः' ॥ इति ॥ कूर्मपुराणेश्रीमुष्णमाहात्म्ये पञ्चमेऽध्याये—'एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे । देवैः विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति ॥ उद्धरस्व महाबाहो मम धर्मान् सनातनान् । इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति ॥ मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति । गीतायाश्चोपनिषदां भाष्याणि च

करिष्यति ॥' इत्यादि ॥ तथा स्कान्दे—'कलौ पाषण्डभूयिष्ठे धर्मलेशविवर्जिते। वैवस्वतेऽन्तरे प्राप्तेऽत्यष्टाविंशे कलौयुगे।' इत्यारभ्य—'तदासंप्रार्थितोदेवैर्भगवान्हरिरीश्वरः। तत्कर्मदक्षंविनतं मातरिश्वानमादिशत् ॥ वायुस्तु यतिरूपेण जनिष्यति कलौयुगे। स दशःप्रमतिर्भूत्वा कलौ धर्मान्वदिष्यति ॥ कृत्वा सच्छास्त्रसन्दर्भं स्थापयिष्यति सत्पथः' मित्याद्यन्तमभिहितम् ॥

ब्रह्मपुराणेपि—'यतिरूपोमातरिश्वाऽष्टाविंशतिमे कलौ। अवतीर्यवसत्यत्र मध्वनामा वरं विभोः ॥' इति ॥ स्कान्देपि—'विष्ण्वाज्ञान्मर्त्यलोके जनिष्यञ्ज्ञानसिद्धये। मातरिश्वाम्बुधौ मग्नां प्रतिमां तां महामतिः॥ महानुभावो विज्ञाय समानीय दयान्वितः। नागासनस्य निकटे विधिना स्थापयिष्यति ॥ सयोगी मातरीश्वांशो मध्वो ध्वस्तदुरागमः ॥ नवम्यां दातरं वासौ माघे मकरगे रवौ॥ प्रतिपेदे बदरिकां शुक्लपक्षे सतां गतिः।' इति। विस्तरस्तु श्रीमद्विजयीन्द्र पूज्यपाद विरचित 'कण्टकोद्धारे', श्रीमद्वादीन्द्रतीर्थ पूज्यविरचित 'नव्यदुरुक्तिशिक्षा' यां च द्रष्टव्यः ॥ एवमेव मतेपि श्रीमत्वं च अप्रामाण्यकारणानाप्ति मूलकत्वा भावादिक-मेव तत्र पूर्वोक्त गुणगणभूषितं चायं विरचितत्वेनाप्तिमूलकत्वस्य, स्वोक्तार्थे तत्रतत्र श्रुतिस्मृत्यादि संवाद-प्रदर्शनेन श्रुतिमूलकत्वस्य, स्वाभिमतार्थे परैरारोपितदोषोद्धरणादिना युक्तिमूलकत्वस्य च सूचनेन दोषकलङ्करहितत्वस्यावेदनात् ॥

एवं व्यासदेवाभिमतार्थप्रकाशकत्व, सकलदोषदूरत्व, अनन्तपुरुषार्थप्रदत्व, व्यर्थाक्षरराहित्यम्, निखिलभाष्यलक्षणलक्षितत्वादिकत्वं च श्रीमत्वम्। तच्चास्मदीयाचार्यविरचितप्रबन्धेष्विति तस्यैव श्रीमत्वम्। एतच्च मध्वविजये प्रतिपादितं नवमे सर्गे। पूर्वोक्त व्यासदेवाभिमत प्रकाशकत्वादिगुणमणि मयत्वमस्य शास्त्रस्य सुधायां शङ्काकृद्भिः—'प्रतिसूत्रं प्रकाश्येते घटनाघटने मया। स्वीयान्यपक्षयोस्सम्यग्विदां कुर्वन्तुसूरय' इत्यनेनचन्द्रिकायां श्रीव्यासतीर्थ पूज्यपादैः, कण्ठकोद्धारादिषु कुम्भकोण श्रीपादैः 'नव्यदुरुक्ति-शिक्षायां च श्रीवादीन्द्रपूज्य पादैश्च निपुणतरं निरूपितम्। ग्रन्थ गौरवभिया नात्र विस्तरः क्रियते ॥ एतादृश मते प्रतिपादितानि नव विषयरत्नानि। प्रथमं, हरिसर्वोत्तमत्वम्, द्वितीयं जगत्सत्यत्वम्, तृतीयं भेदपारमार्थि-कत्वम्, चतुर्थं हरेः कैङ्कर्यं, पञ्चमस्तरतम भावः (रमाब्रह्मादि सव चेतनेषु) षष्ठं मुक्तिस्वरूपम्, सप्तमं तत्साधन प्रतिपादनम्, अष्टमं प्रमाणत्रयकथनम्, नवम निखिलनिगमवेद्यत्वं हरेरिति ॥ एवमादि विषयकलापो पबृम्हितसत्सिद्धान्तप्रवचनादिना जनितपरोक्षज्ञानजापरोक्षदृअन्यभक्त्याप्रीतः परम पुरुषो नारायणः सुप्रीतो मोक्षभागिनमिमं जनं करोतीतिशम ॥

॥ श्रीकृष्णार्पणमस्तु ॥

# ॥ हरिः परतरः ॥

म ॥ शा ॥ प्र ॥ वे ॥ " विद्वद्भूषणम् "

दुर्गं भीमाचार्याः महिशूर आस्थान विद्वांसः

श्रीराघवेन्द्र स्वामिनां मठीयास्थान धर्माधिकारिणश्च नंजनगूडु

यत्पदं वेद संवेद्यं कटाक्षेणापि वीक्षितुम् ।
न क्षमन्ते कुमतयः तमुपासे श्रियःपतिम् ॥
यद्ग्रन्थैरनघै र्वाचः प्राचामुपचयं गताः ।
धीर श्री राघवेन्द्रार्यं दैशिकं तमुपास्महे ॥

भगवत्कृपापात्रै रखिलाऽविद्याद्यवद्यविधुरै स्सल्लोक कृपालुभिः, सर्व जीवोत्तमैः पवमानांशसम्भूतै श्रीमदाचार्यवर्यैः, स्वप्रणीत प्रबन्धेषु देवदेवस्य विष्णोस्सर्वोत्तमत्व एव सर्वागमानां महातात्पर्यं, तज्ज्ञानस्यैव परमपुरुषार्थ प्रयोजकत्वमिति च प्रतिपादितम्। तत्र विचारः सर्वोत्तमत्वं खलु चेतनाचेतनात्मका त्प्रपञ्चा दुत्तमत्वं विवक्षितम्, अद्वैतागमानुसारेण ब्रह्मातिरिक्त चेतनस्यैवाभावात् सर्वस्यापिघटपटात्मका चेतनस्य मिथ्यात्वात्पदार्थान्तराभावेन तत्सापेक्षं सर्वोत्तमत्वं कथं विष्णो स्सम्भवति, तेन हि स्वग्रन्थे—'स आत्मा तत्त्वमसि, नेहनानास्ति किञ्चन, एकमेवाद्वितीयं ब्रह्म' इत्यादि श्रुतिभिः, विमता आत्मनः, परमात्मनः, परमार्थतो न भिद्यन्ते, आत्मत्वात् परमात्मवदित्याद्यनुमानेन जीवेश्वरयो रभेदस्य, तथा—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' इत्याद्यागमेन विमतं, मिथ्या, दृश्यत्वात्सम्मतवदित्याद्यनुमानेन च जगतः मिथ्यात्वस्य साधितत्वात्, तस्माद्ब्रह्मभिन्नजीवस्य सत्यभूत जगतोऽभावेनासिद्धं सर्वोत्तमत्वमिति चेदुच्यते। न ताव 'त्तत्त्वमसी' त्यादि श्रुतिभिः जीवात्मैक्यं साधयितुं शक्यते। नासां 'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि। सादृश्ये चैक्य वाक्सम्यक् सावकाशा यथेष्टतः' इत्यादि वचनेन सावकाशत्व प्रतिपादनात्। नहि सावकाशेन 'तत्त्वमस्या' दि श्रुति शतेनापि जीव ब्रह्मणोरैक्यं साधयितुं शक्यम्?। अनुमानेनापि नात्मैक्य सिद्धिः, परैर्णैवखल्वात्मत्वं स्वप्रकाशत्वं, न जातिविशेष इत्युक्तम्, तत्र स्वविषय प्रकाशत्वं स्वप्रकाशत्वं च कर्तृ कर्म विरोधेन परेण नाङ्गी क्रियत इति प्रमाणान्तरावेद्यत्वं वाच्यम्। तच्च मांप्रत्यसिद्धमित्यन्यतरासिद्धो हेतुः यद्यवाच्यत्वं तर्हि देहादे स्स्वरूपेणावाच्यत्वाङ्गीकाराद्व्यभिचार इत्यात्मत्वानुमानं दुष्टमिति जीवब्रह्मणोरभेदस्या प्रामाणिकत्वा न्न विरोधः ॥

तथा श्रुत्यादिना जगतो मिथ्यात्वसाधनमपि न सम्भवति। वाचारम्भणशब्दस्य मिथ्येत्य श्रुतार्थकल्पना प्रसङ्गात्; तथा पिण्डमण्यादि शब्दानां वैयर्थ्य प्रसङ्गाच्च। नापि दृश्यत्वानुमाने न जगन्मिथ्यात्वसिद्धिः

तस्य 'सन् घटः' इत्यादि प्रत्यक्षेण बाधित विषयकत्वात्। वृत्तिव्याप्यत्वं दृश्यत्वं चेद्ब्रह्मणः वेदान्त जन्यचरमवृत्ति विषयस्वात्तत्रमिथ्यात्वाभावाद्व्यभिचारः, अन्यथा ब्रह्मपराणां वेदान्तानां ब्रह्मज्ञानार्थं श्रवणादिविधेश्च वैय्यर्थ्यम्। ब्रह्मविचारयतोर्गुरुशिष्ययोर्मौनं मौढ्यं च स्यात्। ब्रह्मजिज्ञासा, ब्रह्मज्ञानमित्यादौ कर्मणि षष्ठी 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्य' इत्यादौ तव्यप्रत्ययश्च न स्यात्। सर्व प्रत्ययवेद्ये चेत्यादिस्ववचनविरोधश्च स्यात्, अतोऽनुमानेनमिथ्यात्वासिद्धेः विश्वमिथ्यात्वं निर्मूलमिति नास्त्येव तद्विरोधो विष्णुसर्वोत्तमत्वस्य। किञ्च 'नित्यो नित्यानां चेतनश्चेतनानां, द्वे ब्रह्मणी वेदितव्ये, विश्वं सत्यं, यथा तथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः' 'जीवेश्वरौ, भिन्नौ, विरुद्धधर्माधिकरणत्वाद्दहनतुहिनवत्'; विश्वं, सत्यं, अर्थ क्रियाकारित्वाद्ब्रह्मवत्', 'सन्घटः, सन्पट' इत्यादि जीवेश्वरभेद जगत्सत्यत्वसाधक बहुप्रमाणसद्भावेन सत्य पदार्थान्तरसत्त्वाद्धरेस्सर्वोत्तमत्वं निष्प्रत्यूहम्। तथापि 'मानाधीना मेयसिद्धि' इतिन्यायात् भगवत्सर्वोत्तमत्वे श्रुतिसूत्रपुराणेतिहासादि बहुप्रमाणान्युपन्यस्यन्ते॥

तथाहि—'न ते महित्वमन्वश्नुवन्ति न ते विष्णो जायमानो नजातो देव महिम्नः परमन्तमाप, अजस्यनाभावध्येकमर्पितं यस्मिन्विश्वा भुवनानि तस्थुः, यस्मिन्द्यौः पृथिवीचान्तरिक्षमोतं मनस्सहप्राणैश्च सर्वैः, यं कामये तन्तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां, मम योनिरप्स्वान्तस्समुद्रे, यतः प्रसूता जगतः प्रसूती, अन्तस्समुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद्दशहोतारमर्णे, समुद्रेऽन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः; यस्याण्डकोशं शुष्ममाहुः, विश्वं नारायणं देवमक्षरं परमंपदं, विश्वतः परमान्नित्यं विश्वं नारायणं हरिं, अग्निर्वै देवानामवमो विष्णुः परमः' एवमाद्याः श्रुतयः कालत्रये केनाप्यप्राप्य जगत्सर्जनादि महामहिमत्व–सकलभुवनाधारपद्मनाभत्व– द्युभ्वदिसर्वलोकाश्रयत्व – रमाब्रह्मादिसर्वजगत्कर्तृत्व – समुद्रान्तस्थत्व – ब्रह्माण्डवीर्यत्व–ब्रह्म तपोलभ्यत्वाद्यसाधारणधर्मान्प्रतिपादयन्त्यः भगवतो वासुदेवस्य सर्वोत्तमत्वं निरूपयन्ति, अन्त्ये श्रुती साक्षादेव सर्वोत्तमत्वं प्रतिपादयतः, कठोपनिषदि 'इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः महतः परमोऽव्यक्तमव्यक्तात्पुरुषःपरः पुरुषान्न परं किञ्चित्सा काष्ठ सा परा गतिः' इति देवतातारतम्यकथनद्वारा विष्णोस्तारतम्यावधित्वमुक्त्वा सर्वोत्तमत्वं प्रतिपादितम्। तथाहि श्रोत्रादीन्द्रियाद्यभिमानिदेवेभ्यः इन्द्रादिभ्य अर्थाभिमानिन्यः सौपर्णी वारुण्युमा चोत्तमाः, तदपेक्षया मनोभिमानिदेवता रुद्रादयः श्रेष्ठाः, रुद्राद्यपेक्षया बुद्धितत्वाभिमानिनी सरस्वत्युत्तमा, ततो महत्तत्वाभिमानी चतुर्मुखः परः, महत्तत्वाभिमनिविरञ्च्याद्यपेक्षया सत्वादिगुणत्रयात्मकाव्यक्ततत्वाभिमानिनी साक्षाद्रमोत्तमा, अव्यक्ततत्वापेक्षया पूर्णषड्गुणवत्वेन पुरुषशब्दवाच्यो भगवान्नारायणः परः, तदपेक्षया उत्तममन्यन्नास्त्येवेति। एवञ्च उदाहृत श्रुत्यर्थ पर्यालोचने साक्षाद्वा सर्वोत्तमत्वज्ञापकधर्मप्रतिपादनद्वारा वा श्रीमन्नारायणस्य सर्वोत्तमत्वं सिध्यति॥

ब्रह्ममीमांसाशास्त्रेऽपि, विष्णो स्सर्वोत्तमत्वमेव न्यरूपि। तथा हि—सज्जनानुकम्पायुतैर्ब्रह्मादि गीर्वाणगणैः प्रार्थितो भगवान्नारायणो सत्यवत्यां पराशराद्व्यासत्वेनावतीर्य कालबलेनापपाठादिना तिरोहितान्वेदानृगादिभेदेन व्यञ्जयन् तदर्थनिर्णयाय ब्रह्मसूत्रसन्दर्भात्मकं शास्त्रं प्राणिनां हिताय प्रणिनाय। तदुक्तम 'ऋचस्स ऋच उध्धृत्य ऋग्वेदं कृतवान्प्रभुः। यजूंषिनिगदाश्चैव तथा सामानि सामतः' इति च तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार इति च इदं च शास्त्रमध्यायचतुष्टयात्मकं, तत्र पूर्वाध्यायेऽन्यत्रोभयत्रान्यत्रैव प्रसिध्दानां नामलिङ्गभेदेन द्विविधानां शब्दानां समन्वयः कृतः। द्वितीयाध्याये उक्तार्थे युक्तिसमय श्रुतिन्यायोपेतश्रुतिविरोध-

चतुष्टयः परिहृतः तृतीयेतु वैराग्यभक्ति उपासनाज्ञानरूपसाधनानि निरूपितानि। तुरीयाध्याये कर्मक्षयोत्क्रान्तिमार्गभोगरूपफलानि निगदितानि। एवं क्रमः॥ तत्रादिमं सूत्रं। 'ॐ अथातो ब्रह्मजिज्ञासेति, तदर्थस्तु, अथाध्ययनशमदमादिरूपाधिकारसम्पत्यनन्तरं, अतः जिज्ञासाजन्यज्ञानजन्यप्रसादजन्य मोक्षाख्य फलवत्वात्, ॐ गुणपूर्णस्य, ब्रह्मणोर्विष्णोर्जिज्ञासा श्रवणादिरूपविचारः कर्तव्यः इति। यद्यपि ब्रह्मशब्दश्च विष्ण्वावेवेति भगवत्पादैरुक्तं, तदनुपपन्नं, ब्रह्मशब्दस्यजातिजीवकमलासन शब्दराशिषु वृद्धप्रयोग सिद्धत्वात्। भगवत्यपि ब्रह्मशब्दो प्रयोगादिसिद्धएव, तथाप्यनेकार्थेषु शक्तियुक्तस्य विवक्षाज्ञापकप्रमाणं विना भगवत्परत्वावधारणायोगादितिचेन्न। यथानेकार्थोपि गोशब्दः प्रकरणवशादर्थविशेषपरोऽवधार्यते, तथानेकार्थोऽपि ब्रह्मशब्दः सूत्रकृत विष्णुविषय एव प्रयुक्त इति प्रकरणवशादवज्ञायते। अत एवोक्तं श्रीमदनुव्याख्याने, 'स्वयं भगवताविष्णुर्ब्रह्मेत्येतत्पुरोदितामिति, तदुपर्याशङ्का। अथातो ब्रह्मजिज्ञासेत्येत देवादिमंसूत्रं'। अस्मादपि पूर्वसूत्रस्य विद्यमानत्वे तदादित्वेन व्याख्यानप्रसङ्गात्, अन्यथा प्रथमातिक्रमे कारणाभावादकुशलाः सर्वेव्याख्यातारः प्रसज्येरन्, अतो सूत्रकृता विष्णुर्ब्रह्मेति पुरा कथमुक्तं इति। तदुपपन्नं। विंशल्लक्षणिकं मीमांसाशास्त्रं तत्र द्वादशलक्षण्यां पूर्वमीमांसायां धर्माधर्मविवानुष्ठानोपयोगितया विचारितौ'। अध्याय चतुष्टयात्मकं दैवीमीमांसाशास्त्रं। तदुक्तं। 'आद्यन्तं देवशास्त्रस्य स्वयं भगवता कृत मध्ये तदाज्ञया शेषपैलाभ्यां कृतमंजसेति'। तस्यान्ते 'सविष्णुराहहि' 'तं ब्रह्मेत्याक्षते'ति सूत्रद्वयेन विष्णुर्ब्रह्मेति कथितं। तदनन्तरमेवाथातोब्रह्मजिज्ञासेति सूत्रितत्वात् पुरोदितत्वं ज्ञायते। तथाच प्रकरणवशाद्विष्णु पर एव ब्रह्मशब्दः। नारायणशब्द समानार्थकत्वाद्ब्रह्मशब्दस्य विष्णवर्थकत्वं सम्भवति। गुणपूर्णत्वमेव नारायण शब्दार्थः। तथाहि अराः दोषाः तद्विरुद्धत्वान्नाराः गुणाः तदयनत्वान्नारायणः इति। ब्रह्मशब्दार्थस्तु गुणपूर्णत्वमेव 'बृहबहिवृद्धा'विति शब्विकरणे पठितस्यबृहधातोः मनिन्प्रत्यये इरिग्रहणसामर्थ्याद्धातोरमागमश्चेति ब्रह्मेतिरूप योग्यतया। 'अथकस्मादुच्यते ब्रह्मेति बृहन्तोह्यस्मिन्गुणा' इत्यादि श्रुत्यन्तरबलाद्वा गुणानां सम्बन्धः। तथा च गुणपूर्णत्वं ब्रह्मशब्दार्थः अतो ब्रह्मशब्देन नारायणस्यैव प्रस्तुतत्वात् नारायण एव परंब्रह्म एवं च मोक्षादि फलप्रदनारायणजिज्ञासा कार्येति नारायणस्य सर्वोत्तमत्वं सिध्यति॥

तथा भूमाधिकरणे।नामवाऽङ्मनस्संकल्पचित्तध्यानविज्ञानबलान्नापतेजआकाशस्मराशाशाद्वितान स्वाहापर्जन्यमित्राग्निवरुणविधुप्रवहानिरुद्धप्राणेन्द्रोमारुद्रवाणीरूपदेवान्नारदसनत्कुमारप्रश्नोत्तराभ्यां उत्तरोत्तरातिशयत्वेनोक्त्वा तदुपरि पूर्णसुखत्वादि हेतुभिः भूमशब्दवाच्यस्य विष्णोरुत्तमत्वाभिधानात्सर्वोत्तमत्वं कंठतएवोक्तं भवति। तथा 'ॐ मुक्तोपसृप्यव्यपदेशात् ॐ'। इत्यत्रामृतस्यैष सेतुरित्यादिनोक्तं मुक्तप्राप्यत्वं "नारायणं महाज्ञेयं विश्वात्मानं परायणं, मुक्तानां परमागतिः, एतमानन्दमयमात्मानमुपसंक्रामति, बहुनात्र किमुक्तेन यावच्छ्रुवेतं न गच्छति। योगीतावन्नमुक्तः स्यादेषशास्त्रस्य निर्णय' इत्यादि श्रुतिस्मृतिभिः विष्णोरेव प्रतीयते। अतो मुक्तप्राप्यत्वेन हेतुना सर्वोत्तमत्वं विष्णोस्सिध्यति। तेन विष्णो सर्वोत्तमत्वमेव प्रतिपादितम्॥

श्रीमद्भागवते। 'नूनं तपोयस्य न मन्युनिर्जयः ज्ञानं क्वचित्तस्य न सङ्गवर्जितं। कश्चिन्महान्तस्य न कामनिर्जयः स ईश्वरः किं परतोव्यपाश्रयः॥ धर्मः क्वचित्तस्य न भूतसौहृदं त्यागः क्वचित्तस्य न मुक्तिकारणं। वीर्यं च पुंसोत्स्यजवेगनिष्कृतं नहि द्वितीयो गुणसङ्गवर्जितः॥ क्वचिच्चिरायुर्नचशील मङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः। यत्रोभयं कुत्र च सोप्यमङ्गलः सुमङ्गलः कश्चन कांक्षते मां॥ एवं विमृश्याव्यभिचारि सद्गुणं पदं निजैकाश्रयि सद्गुणाश्रयं॥ वव्रे परं सर्वगुणैरपेक्षितं रमा मुकुन्दं

निरपेक्षमीप्सितम् ॥ इति कानिचित्पद्यानि श्रूयन्ते, पद्यार्थविमर्शे कृते भगवतोवैशिष्ट्यं सिध्यति। तथाहि लक्ष्मीस्तावत्सर्वमान्या, सा च प्रार्थयतोपीतरान्परित्यज्य भगवच्चरणौ यद्याश्रिता तदेतेन समोनास्ति, तथा अधिकोपि नास्तीति सिध्यति, यदिकश्चन एतेन समस्स्यात्तदातत्परित्यागेनैतस्य चरणानुसरणानुपपत्तिः। अधिकसद्भावेत्वेतस्य स्वीकरणस्यैवानुपपत्तिः। एतदेव कथं। अनादिकालत एवहरिः रमायाः पतिः मङ्गलदेवता हरेर्द्वितीयेति आविपाल गोपाल प्रसिद्धिः। सति चैवं अन्यान्परित्यज्य तत्पाणिमेवजग्राहेति कथं वक्तुं शक्यं अत एव न हृदयङ्गममित्यतः अस्त्येवानयोरनादित एव भार्याभर्तृभावः। तथापि कारण विशेषेण कालविशेषे समुद्रोद्भूतया पद्मया नूतनस्त्रीव विडम्बनं कुर्वन्त्या एवं कृतमित्याह नूनमिति। यस्य तपो अस्ति तस्य मन्युर्निर्जयो नास्ति। अनेन दूर्वासादिः प्रतिषिद्धः। सह्यम्बरीषे राज्ञि क्रोधकर्तेति सुप्रसिद्धः। क्वचित्पुरुषे ज्ञानं विद्यते तच्च विषयसङ्गेन रहितं न भवति अनेन बृहस्पत्यादयो वारिताः। कश्चिन्महानस्ति तस्य कामजयो नास्ति अनेन परमेष्ठी व्यावर्तितः स हि स्वदुहितरमेव कामयामासेति प्रसिद्धम्। ईश्वरपदवाच्यो भवः भस्मासुरभयात्पलायितो बटुरूपिणा हरिणारक्षित इति सोपि प्रतिषिद्धः। क्वचित्पुंसि धर्मोऽस्ति तस्यभूतेषु दयैव नास्ति। अनेन यमोवारितः क्वचित्त्यागोऽस्ति तदपि नमुक्तिप्रापकं तेषां मुक्तिदानसामार्थ्याऽभावात् अपेक्षित दानस्य त्यागिदोषत्वात्। अनेन बल्यादयो दैत्येन्द्राः प्रतिषिद्धाः। तेजस्वित्वातिवेगित्वलक्षणगुणवन्तौ दिवाकरनिशाकरौ कालचक्रवेगेन जिताविति निराकृतौ, चिरायुः शेषोप्युग्रत्वादितज्जातिस्वभावधर्मेण निराकृतः। साधुस्वभावाः राजानः आयुषो विषये विचार्याः नेतिवारिताः। अत्रेत्थमाख्यायिका। रैवतो नाम राजा स्वतनूजायाः वरान्मनसा सम्भाव्य ब्रह्माणं प्राप्तुकामः सत्यलोकंगतः तं पृष्ट्वा यदा भुवमागतः तन्मध्ये एव सर्वे राजप्रवराः पञ्चत्वमापन्ना इति। एवं विमर्शमाना रमा कदाप्यनपगतदोषा समानाधिकरण ज्ञानादिसद्गुणाश्रयं यथामनसेप्सितं विद्यमानं मुक्तिप्रदं अत एव सर्वोत्तमं हरिमेव स्वीचकरोति। अत्र हरेस्सर्वोत्तमत्वं स्पष्टमेवनिरूपितम् ॥

'स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं कृपया मुनिना कृतमि'त्यादि वचनादवगतासम्भावेन भगवता बादरायणेन प्रणीते श्रीमन्महाभारते मोक्षधर्मपर्वणि। 'तत्वं जिज्ञासमानानां हेतुभिस्सर्वतोमुखैः। तत्वमेको महायोगी हरिर्नारायणः पर' इति श्रूयते। अत्र तत्वपदं जगत्कारण परतत्वपरं। पूर्वश्लोके कारणवाक्यानां सर्वेषां नारायण एव तात्पर्यपर्यवसानभूमिरितिप्रतिज्ञाय तस्यैवार्थस्योपपादनाय प्रवृत्तत्वादस्य श्लोकस्य। पूर्वत्रहि, प्रधानं कारणं येषां पुरुषश्चापि कारणं। स्वभावश्चैव-कर्माणि दैवं येषां च कारणं। पञ्चकारणसंख्यातो निष्ठा सर्वत्रवै हरिरिति श्लोके, कारणवाक्यानां सर्वेषां नारायण एव तात्पर्यपर्यवसानभूमिरिति प्रतीयते। अयं भावः। यज्जगत्कारणं तदेवपरतत्वं। कारणवाक्यानामनेकविधत्वादिदमेव जगत्कारणमिति न निश्चयितुं शक्यते। तथाहि। जगत्कारणवाक्येषु कानिचिदनुवादरूपाणि। कानिचित्साधारणशब्दैः कारणवस्त्वभिधायीनि। कानिचित्पुनश्चेतनविशेषेषु प्रसिद्धैश्शब्दैस्तद्वाचीनि। तद्यथा। यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेत्यादीन्यनुवादरूपाणि। यज्जन्मादिकारणंतद्ब्रह्मेति कारणमनूद्य ब्रह्मत्वविधायकत्वात्तेषां। 'ब्रह्म वा इदमग्र आसीत्'। 'आत्मा वा इदमेक एव अग्र आसीत्'। इत्यादीनि साधारणशब्दैः कारणवस्त्वभिधायीनि ब्रह्मात्मादिशब्दानां बह्वर्थेषु प्रयुज्यमानत्वात्। सर्वाणिहवा इमानि भूतान्याकाशादेव समुत्पद्यन्तेत्यादीन्यचेतनविशेषे भूताकाशादौ प्रसिद्धैराकाशादिशब्दैः कारणवस्त्वभिदधति। 'हिरण्यगर्भस्समवर्तताग्रे भूतस्यजातः पतिरेव आसीत्'। 'यदातमस्तन्नदिवानरात्रिर्नसन्नचास-

च्छिवएव केवल' इत्यादीनि चतुर्मुख शिवादौ रूढैः हिरण्यगर्भ शिवरुद्रादिपदैः कारणवस्तुब्रुवते। एको हवै नारायण आसीन्नब्रह्मा न च शङ्कर इत्यादीनि पुनर्देवताविशेषासाधारणेन नारायण शब्देन जगत्कारणमुपदिशन्ति। एवं च कारणवाक्यानामनेकरूपतया कथं नारायणे तात्पर्यपर्यवसानभूमित्व-मितिचेत्। उच्यते। यतोवेत्याद्यनुवादकवाक्ये तद्ब्रह्मेति ब्रह्मशब्दश्रवणात्। ब्रह्मशब्दस्य तदेव ब्रह्मपरमं कवीनामिति विद्वद्रूढ्या विष्णुपरत्वेन विष्णोरेव जगत्कारणत्वं सिध्यति। यानिहवेत्यादि वाक्यानि तत्ररूढ्यर्थपरिग्रहे आकाशादेरचित्संसृष्ट चेतनकारणत्वाद्यनुपपत्या आकाशाधिकरणन्यायेन आसमन्तात्काश्यमानत्वरूप गुणानुवादमुखेन विष्णोरेव जगत्कारणत्वं प्रतिपादयन्ति। यच्चोक्तं। हिरण्यगर्भस्सम-वर्तताग्रे। यदा तमस्तन्नदिवानरात्रिरित्याद्युपनिषद्वाक्यबलाच्चतुर्मुखशिवयोरपि जगत्कारणत्वप्रतीतिरिति तदनुपपन्नम्। 'योब्रह्माणं विदधातिपूर्वं योवैवेदांश्चप्रहिणोतितस्मै'। अथ पुनरेव नारायणस्सोन्यत्कामो मनसाध्यायत तस्य ध्यानान्तस्य ललाटात्र्यक्षः शूलपाणिः पुरुषोजायत। नारयणाद्रुद्रोजायत इत्यादिना सृज्यत्वेन अवगतयोर्हिरण्यगर्भशिवयोः परमकारणत्वायोगात् हरेरेव जगत्कारणत्वमुपपद्यते॥ यदि सृज्यत्वेन हेतुना ब्रह्मशिवयोर्नजगत्कारणत्वं तर्हि सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वेसंप्रसूयन्ते इत्यथर्व शिखावाक्येन कार्यत्वे चाविशेषेण श्रूयमाणे नारायणे कारणवाक्यानां कथं पर्यवसानमितिचेन्न। पुरुषोहवै नारायणोकामयत प्रजास्सृजेयेति नारायणात्प्राणोजायते। मनस्सर्वेन्द्रियाणि च खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद्ब्रह्माजायते। नारायणाद्रुद्रोजायते। नारायणादिन्द्रोजायते। इत्यादिश्रुत्या ब्रह्मादीनामुत्पत्तिः कर्मकृतैवेति जायते। सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्संप्रसूयन्ते इत्यादिश्रुत्युक्ता विष्णो-रुत्पत्तिस्स्वैच्छकी विष्णोरुत्पत्तेरकर्मकृतत्वं श्रुत्यैवस्पष्टीकृतं। अजायमानोबहुधाविजायते तस्यधीराः परिजानन्तियोनिमिति अत्र भगवज्जन्मनोनिषेधोविधिश्चश्रूयते तत्र एकस्मिन्विधिनिषेधयोरयोगेन लोकप्रसिद्धजन्मनोनिषेधःतद्विरुद्धस्य विधिः तद्विरुद्धं जन्म जनदृग्विषयत्वमेव। तथा च सर्वकारण वाक्यानां नारायणे तात्पर्यपर्यवसानत्वाङ्गीकारे नाकाप्यनुपपत्तिरिति जगत्कारणत्वप्रतिपादनमुखेन हरेस्सर्वोत्तमत्वं महाभारतेपि प्रतिपादितम्॥

भारतपारिजातमधुभूतायां भगवद्गीतायां सर्वोत्तमत्वे ज्ञानिप्रत्यक्षयुक्तिस्ववाक्यानि प्रदर्शितानि तथाहि एकादशाध्याये। पश्यादित्यान्वसून्रुद्रानश्विनौमरुतस्तथा॥ बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारतेत्यादिना सर्वज्ञतमेन श्रीकृष्णेन रुद्रादिसर्वदेवाधारं मे रूपं पश्येत्युक्तं। तथा ज्ञानिगणेषु गणितेन पार्थेन पश्यामि देवान्स्तव देव देहे सर्वान्स्तथाभूतविशेषसन्धान् ब्रह्माणमीशं कमलासनस्थं इत्यादिना ब्रह्मरुद्रादिसर्वाधारं ते रूपं पश्यामीत्युक्त्वा परंब्रह्म परं धाम पवित्रं परमं भवान्। पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं। आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा। भूतभावनभूतेश देवदेव-जगत्पते। पितासि लोकस्य चराचरस्य त्वमस्य पूज्यस्य गुरुर्गरीयान्। नत्वत्समोस्त्वभ्यधिकः कुतोन्यो लोकत्रयेऽप्यप्रतिमप्रभावेत्यादिना स्तुतं च। अनेन सर्वोत्तमत्वे ज्ञानिप्रत्यक्षं प्रमाणमित्युक्तं भवति॥

युक्तयस्तु। न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन। नानवाप्तमवाप्तव्यं इत्यादिना पूर्णा-नन्दत्वं। तस्य कर्तारमपि मां विध्यकर्तारमव्ययं। मत्तस्सर्वं प्रवर्तते इत्यादिना स्वातन्त्र्यं। बहूनि मे व्यतीतानि जन्मानि तव चार्जुन। तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप। वेदाहं समती-तानि वर्तमानानि चार्जुन इत्यादिना सार्वज्ञं। अहं कृत्स्नस्य जगतः प्रभवः। अहं सर्वस्य प्रभवः। अव्यक्ताद्व्यक्तयस्सर्वः प्रभवन्त्यहरागमे भवाप्ययौहि भूतानां श्रुतौ विस्तरशो मया। पितासि लोकस्य

चराचरस्य। चातुर्वर्ण्यं मयासृष्टं इत्यादिना सृष्टिकर्तृत्वं, मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव सर्वस्य धातारं, मत्स्थानि सर्वभूतानि, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। इत्यादिना सर्वाधारत्वं एवमाद्याः प्रदर्शिताः। तासु पूर्णानन्दत्वं आनन्दमयाधिकरणे भगवतस्समर्थितं। यस्सर्वज्ञ ससर्ववित्। इत्यादिना सार्वज्ञं जन्माद्यस्य यतः अनेन सृष्टिकर्तृत्वं। द्युभ्वाधिकरणन्यायेन सर्वाधारत्वं भगवत एवेति हरेस्सर्वोत्तमत्वसाधका भवन्ति। स्ववाक्यानि तु अग्रे प्रदर्शयिष्यन्ते। तथाहि विष्णुरेव कृष्ण इत्यत्र न विवादः। अथवा हृषीकेशं तदावाक्यमिदमाह महीपते। किन्नो राज्येन गोविन्द, का प्रीतिस्स्याज्जनार्दन, धृतिं न विन्दामि शमं च विष्णो। इत्यादिवाक्यैः श्रीकृष्णः विष्णुरेवेति सिध्यति। वक्ष्यमाणपद्येषु कृष्णोत्तमत्वं स्पष्टं प्रतीयते। सर्वलोकमहेश्वरं ज्ञात्वा मां शान्तिमृच्छति। चेतनाचेतनात्मकसर्वजगतः ईश्वरं मां ध्यात्वा मुक्तिं प्राप्नोतीति अस्यार्थः। भूमिरापोनलोवायुः खं मनोबुद्धिरेव च। अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे परां। जीवभूतां महाबाहो ययेदं धार्यते जगत्। एतद्योनीनि भूतानि सर्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रळयस्तथा। मत्तः परतरं नान्यत्किंचिदस्ति धनंजय इति। एषां पद्यानां तात्पर्यस्तु भूः, जलं, वह्निः, वायुः, आकाशः, मनः, बुद्धितत्वं, महत्तत्वसहितमहंकारतत्वं, एवं प्रकारेण मदधीना प्रकृतिः अष्टप्रकारा। इयं जडप्रकृतिरवरा। एभिः भिन्ना चित्प्रकृतिः यया चित्प्रकृत्या चेतनाचेतनात्मकं जगद्धार्यते तादृशा सर्वजीवदेहेषु स्थित्वा तदीयान्प्राणान् तत्तद्देहेषु धारयतीति जीवेत्युक्ता महालक्ष्मीः उपलक्षणया मुक्तानां ग्रहणं। तथाच श्रियं मुक्तांश्च परानुत्तमान् मदधीनांश्च विद्धि। सर्वेन्द्रियविषयलक्षणकार्यसहितानि जीवजातरूपभूतानि सर्वाण्येतद्योनीनि। जडाजडप्रकृतिकारणानि विद्धि। जन्मस्थितिलयास्तु प्रकृत्यधीना एव नेशाधीनाः इति प्रतीतिनिरासायाऽह। अहं कृत्स्नस्येति। हे धनंजय अहं सर्वस्य चराचरात्मकप्रपंचस्य उत्पत्तिकर्ता लयाकर्ता चेति विद्धि। ननु परावरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्यावरत्वस्य परत्वस्य चायोगात्। परतरत्वशब्दितं सर्वोत्तमत्वं तव प्राप्तमित्यस्तु। जगत्पितृत्वं॥ तद्वत्सर्वोत्तमान्तरस्यापि जगत्पितृत्वाद्युपपत्तेः कथं अहमेव कृत्स्नस्येत्याद्युक्तिरुपपद्यते इत्यत आह। मत्तः परतरं नान्यदिति। मत्तोऽन्यत्परतरशब्दितं सर्वोत्तमं किंचिन्नास्ति येन अहमेवेत्युक्तिरयुक्तास्यात् तथा चोक्तदिशालब्धस्यापि परतरत्वस्यात्रोक्तिः। अपरतत्वं भूम्यादि भेदेनानेक विधं। यथा परतत्वं श्रीदेवी मुक्त भेदेनानेकं तथा परतरमपि अनेक विधं उत एकमेवेति जिज्ञासायां अहमेक एवेति ज्ञापयितुं नान्यदस्तीत्युक्तं। तथा च एवमादि कृष्णवाक्येषु अन्यस्य सर्वोत्तमत्वं प्रतिषिध्य हरेरेव सर्वोत्तमत्वं उच्यते। एतं च श्रुति सूत्रपुराणेतिहासेषु विस्तरेणोक्तं। हरिसर्वोत्तमत्वं मद्बुद्ध्यनुसारेण यत्किंचिन्निरूपितं। इत्थं च व्यासमुनीन्द्रपूज्यचरणैः श्रीमन्मध्वमते हरिःपरतरः इत्यत्रोक्तं हरेः परतरत्वं साधितमिति सर्वं सुवचं॥ पूर्वापरीकारमथापरंवा क्षाम्यन्तु मे हन्तमुहुर्महान्तः॥

# ॥ सत्यं जगत् ॥

म ॥ श ॥ प्र ॥ वे ॥ "न्यायविशारदाः"
विजयीन्द्राचार्याः
निवृत्तन्यायशास्त्रप्रधानाध्यापकाः तिरुवादि



यः स्मृतः शरणार्थिभ्यः कल्पद्रुमइवेष्टदः ।
राधालिङ्गितवामार्धः स कृष्णः शरणं हि नः ॥ १ ॥
नमोऽगणितकल्याणगुणपूर्णाय विष्णवे ।
सत्याऽशेषजगज्जन्मपूर्वकर्त्रे मुरद्विषे ॥ २ ॥

अयि भोः गीर्वाणवाणीप्रसरणपरायणाः अनवद्यविद्यानिकषोपलनिशातधिषणाः विचक्षणाश्च, सत्वादिगुणयोगेन सृष्ट्यादिकार्यव्यापृतः भगवान् करुणार्णवः समग्रमिदमवनिमण्डलं जीवानां देहयात्रौ-पार्थकसमस्तवस्तुजालपरिपूर्णमेव ससर्जेति सार्वजनीनमेतत्पण्डितमण्डलमण्डनानाम् ॥ स्वादिष्टफल-गर्भितानोकहनिवहधराः भूधराः प्रसन्नशीतलमधुरपयस्विन्यः श्रोतस्विन्यः संपन्नतरसस्याः केदाराः सर्वानेवालंकुर्वते देशान् । तादृशप्रात्यक्षिके इह जगति नानाविधदुःखसंकटदुर्गमे संसारकान्तारे निमग्नानामल्पाऽस्थिरसुखखद्योतिकासु द्योतमानास्वपि मनः प्रसादमनासादयतामधिकारिणां दुःख-निवृत्तये परमानन्दावाप्तये च, श्रुतीतिहासपुराणानां तदुपकरणीभूतब्रह्ममीमांसायाश्च सकलपुरुषार्थो-त्तममोक्षप्रदश्रीकमलाजानेस्स्वरूपज्ञानार्थं प्रवृत्तिरितितत्वम् ॥ "यमेव विदित्वेति श्रुतेः" ॥ तच्चोपासनैक साध्यमिति श्रवणमननादिरूपो ब्रह्मविचारः कर्तव्यः "आत्मा वा रे द्रष्टव्यः श्रोतव्य" इति श्रुतेः ॥

तत्र चानादिवासनामलिनचित्तानां विषयवैराग्यमन्तरा प्रवृत्त्यनुदयात् तदर्थं च विषयाऽनित्यत्व मुपदिश्यमानमपि नितरां न चेतसि प्रतिभाति । यावन्नतन्मालिन्यमपसरतीत्यतः अन्तःकरणशुद्धिमपेक्षते दर्पणस्यैवेति, नित्यनैमित्तिककर्मविधयः प्रवृत्ताः । कर्मणा चान्तःकरणमालिन्ये निवृत्ते शास्त्रार्थोपदेशः प्रतिफलति शुद्धादर्शेव । "कर्मणा ज्ञानमातनोती" ति श्रुतेः । ब्रह्मविचारादौ च कर्मणा प्रक्षालितान्तः करणमल एव पुमान् निष्कण्टकं प्रवर्तते । अभिहितं च लक्षणत्वेन विष्णोः गुणपरिपूर्णत्वं अथातो ब्रह्मजिज्ञासेत्यादिमसूत्रेण । प्रतिपादितं च जिज्ञासाहेतुभूतगुणपरिपूर्णत्वस्य संभावकतया जन्माद्यस्येति, द्वितीयसूत्रेण जगज्जन्मादिकर्तृत्वलक्षणम् । तच्च नोपपद्यते विना व्यवस्थापनं जगत्सत्यत्वस्य । तच्च सत्यत्वं जगतः न परोदीरितजगन्मिथ्यात्वप्रमाणानामाभासताव्युत्पादनेन विना युज्यते । अतो आपद्यते च जगतस्सत्यत्वसमर्थनम् । असहिष्णवः जगत्सत्यत्वं, तथा विश्वकर्तृत्वं च कमलाजानेः सर्वं मायिक-मिति मन्वानो गुणाऽनभिज्ञाः मायावादिनः । विमतं मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वात् । इत्यादिहेतुभिः जगतो मिथ्यात्वं व्युत्पादयन्तः जगतः सत्यत्वं प्रतिक्षिपति । तदेतदापातरमणीयम् । यथा वा प्रतिज्ञांशः दोषकबलितः तथा हेत्वंशोऽपि । तथाहि—ननु किमिदं दृश्यत्वं ? दृग्विषयत्वं, अस्वप्रकाशत्वं,

वा । आद्ये चापि पक्षे दृग्वृत्तिरूपं, चिद्रूपं वा । नाद्यः आत्मनि अनैकान्त्यात् । आत्मनोऽपि वेदान्तजनित-वृत्तिविषयत्वात् । चिद्रूप च दृग्विषयत्वं घटादौ नास्माभिरंगीक्रियते इति भागाऽसिद्धिरपि । स्व-प्रकाशत्वं च निर्वक्तव्यम् । यदभावो दृश्यत्वं वेद्यत्वमिति चेत्तर्हि वेद्यत्वं दृश्यत्वमित्युक्तं भवेत् । किंच दृश्यत्वं प्रमाणतो भ्रान्त्यावा नोभयमपि अन्यतराऽसिद्धेः । किंच दृश्यत्वस्य सन्मात्रवृत्तित्वाद्विरुद्धता च । न वाच्यं शुक्तिरजतं दृश्यमिति ॥ तत्र शुक्तिकाया एव दृश्यत्वात् । परमात्मनोपि दृश्यतया व्यभिचारा-निस्तारात् । आत्म वृत्तिव्याप्यत्वेपि फलव्याप्यत्वाभात्वात् न दृश्यत्वमिति नैवं शंकनीयम् । फलं ज्ञातता, व्यवहारो, वेति विकल्प्य दूषितत्वात् आत्मनः दृग्विषयत्वाभावेऽपि वेदान्तवाक्यजनिताऽपरोक्षज्ञनस्या-कारसमर्पकतया व्यावर्तकत्वमगीक्रियतएव । तेनात्माऽविषयकमपि आत्माकारं ज्ञानं तदज्ञानं निवर्त-यिष्यतीति नकोप्यतिप्रसंगः ॥

अनुमानश्रुत्यादीनां च तत्परतयोपपत्तेश्च न च तदविषयत्वे तदाकारत्वं कथमितिवाच्यम् । शशश्रृंगशब्दात् तदविषयकस्याऽपि तदाकारस्य ज्ञानस्योत्पत्तेः । तथेहापि वेदान्तवाक्यरूपकरणसामर्थ्या देव आत्माऽविषयस्यापि तदाकारस्योत्पत्तौ बाधकाभावेन नात्मनो दृश्यत्वमिति नव्याभिचारोऽव काशपदमादधाति ॥ विचारागोचरत्वात् । तथाहि—आत्माकारमित्यस्य कोवार्थः । आत्मा आकार एव आकारः यस्येति वा, आत्मा, आकारः यस्येति वा, आत्माकारइव आकारः यस्येति वा । नाद्यः । ज्ञान ज्ञेययोरेकाकारताऽनुपलंभात् । न द्वितीयः । अत्यन्तसादृश्यस्यानुपलंभात् । किंचित्सादृश्यस्य चाप्रयोज-कत्वात् । तृतीयेऽपि नात्मा, साक्षात्ज्ञानस्याकारः संभवति । आधाराधेयभावस्यनुपलंभात् । अतः परिशेषात् विषयता व्यावर्तकत्वेनेच्च आत्मा, ज्ञानस्य आकार इवेति वक्तव्यम् । तदेव च विषयत्वमिति यत्किंचिदेतत् । न जडत्वहेतुरपि निगादितदूषणगणलंघने जङ्घालः । किमिदं जडत्वं नाम ? ज्ञानाना-धारत्वं वा, अनात्मत्वं वा, अज्ञानरूपत्वं वा, अस्वप्रकाशत्वं वा । नाद्यः विशिष्टात्मनि अन्तःकरणा-वच्छिन्नस्यैव अहंशब्दितस्यात्मनो ज्ञातृत्वेन मिथ्यात्वेन त्वदभिमते तत्र ज्ञातृत्वाभावरूप हेतोरसत्वेन भागाऽसिद्धेः । न द्वितीयः । तवाऽसिद्धेः । न तृतीयः वृत्तिज्ञानभागेऽसिद्धत्वात् । नापि चतुर्थः स्वकर्मप्रकाशत्वस्य आत्मन्यपि तवाभावात् । परिच्छिन्नत्वरूपहेतुरपि न साध्यसाधकतामध्यास्ते । तथाहि—परिच्छिन्नत्वं नाम देशतः, कालतो वा, अन्योन्यभावाधिकरणत्वं वा ! नाद्यः—कालाकाशादि-भागेऽसिद्धेः । अत एव न द्वितीयतृतीयौ । नेति नेतीत्यादिना ब्रह्मण्यपि जगदन्योन्याभावाधिकरणतायाः श्रुतत्वात् । सन्घट इति प्रत्यक्षेण बाधितविषयत्वात् । एवमादिहेतुभिः पूर्वोक्तानुमानस्य मिथ्यात्व-साधकता न संभवति ॥

अस्त्वनुमानमेव बाधकं प्रत्यक्षस्येति न शंकनीयत् । तस्य अनुमानाद्यगृहीतरेखोपरेखा-दिविशेषविषयत्वेन, तदनिर्वर्तितदिङ्मोहादिनिवर्तकत्वेन, जात्यनुमानापेक्षितपक्षलिंगव्याप्त्यादिग्राहि-त्वेन, विशेषदर्शनजन्यसमानविषयक ज्ञानान्तररूप सजातीय संवादरूपपरीक्षासद्ध्रीचित्वेन च प्रबलतया तद्बाधितस्य मिथ्यात्वानुमानस्य कुतस्तन्निरोधकत्वम् । कुतस्तमां च प्रत्यक्षस्याऽप्रामाण्यम् । तात्विक विषयत्वेनानुमानस्य बाधकत्वे दहनशैत्यानुमापि तदुष्णताऽवगाहिप्रत्यक्षबाधकत्वेन प्रमाणं प्रसज्येत । विश्वं सत्यमित्यागमविरोधश्च मिथ्यात्वसाधकानुमानस्य भवत्येव । तथाहि "विश्वं सत्यं मघवानायु-वोरिदापश्चन प्रमिनंति व्रतं वामिति श्रुतेरेवमर्थः । हे मघवानौ धनवन्तौ युवयोः संबन्धि; इदं विश्वं सकोचकाभावात् । प्रत्यक्षादिसिद्धं सर्वं सत्यं, ब्रह्मवदबाध्यम् । अत एव तादृशविश्वान्तर्गतत्वादेव वां व्रतं तदर्थं कर्मविशेषं आपश्चन, अभिमान्यो देवतापि प्रमिनंति प्रतीत्या विषयीकुर्वतइति । आदिपदेन

यच्चिकेत सत्यमिति तन्नमोघं, वसुस्पर्हओजोतोतद्यता यथातथ्यतोऽर्थान् व्यद्धात् शाश्वतीभ्यः समाभ्यः सत्यः सोऽस्य महिमा, अथैनमाहुस्सत्यकर्मेति । सत्यह्येवेदं विश्वमसौ सृजते कथमसतो सज्जायते इत्यादि श्रुतयः जगतस्सत्यत्वं निरर्गलं निरूपयन्ति । नागमबाधो अनुमानस्याभिन्नविषयत्वेनाऽविरोधित्वात् । अनुमानं हि तात्विकत्वाभावमवगाहते । श्रुत्यादिकं व्यावहारिकसत्वमावेदयतीति कथमागमस्यानुमानबाधकत्वमिति चेन्न । व्यावहरिकसत्यत्वकल्पनाया मिथ्यात्वसिद्ध्युत्तरकालिनत्वेन अद्यापि तद्सिध्या कल्पकाभावात् । किंच व्यर्थं च प्रपंचे व्यावहरिकसत्यत्वप्रतिपादनं न हि कश्चित् लौकिको वैदिको वा व्यावहारिकसत्यतां प्रपंचे नाभ्युपैति । तस्मात् वादिाभिद्रुमिथ्यात्वनिषेधेन पारमार्थिक सत्वमेव अप्राप्तेशास्त्रमर्थविदितिन्यायात् । नेह नानेत्यादिश्रुतिनिषेध्यसमर्पकतया अनुवदति विश्वसत्यतावाक्यं इति चेन्न । तथा सति विश्व सत्य इत्यादिवचनविधानसिध्यर्थं नेह नानेत्यनुवाद इति प्रसंगात् किंच असत्यमप्रतिष्ठं जगदाहुरनीश्वरं ताऽसुरास्वयं नष्टाः इति निरवकाशश्रुत्या मायिनां निन्दनात् श्रुतिविरोधोऽपि मिथ्यात्वानुमानस्य संभवत्येव । किंच विप्रतिपन्नं, सत्यं, प्रमाणदृष्टत्वात् ब्रह्मवत्, इत्यादि प्रपञ्चसत्यताग्राहि अनुमानस्य जागरूकत्वेन अनुमानात् मिथ्यात्वसिद्धि कपोणिगुडायते । अपि च अर्थक्रियाकारित्वाच्च जगतः सत्यत्वसाधनं सुघटमेव ॥

ननु स्वाप्नरंभासंभोगादौ धातुविसर्जनरूपार्थक्रियाकारित्वे विद्यमानेऽपि न तत्र सत्यत्वमिति अनुमानस्य दोषः संभवत्येवेति न मन्तव्यम् । तस्यापि पक्षसमत्वात् । नहि पक्षे, पक्षसदृशे वा व्यभिचारः संभवति । ननु स्वाप्ने व्यभिचाराभावेऽपि रज्जावारोपितस्य भुजंगत्वस्य असत्यस्य भयकंपादिरूपार्थक्रियाकारित्वदर्शनात् व्यभिचारः स्यादिति न शंकनीयम् । तज्ज्ञानस्यैव भयकंपादिजनकत्वात् । ननु ज्ञानमात्रमेव भयकंपादिज्ञानजनकं, अर्थविशेषितं वा, आद्ये सकलज्ञानानां भयकंपादिजनक प्रसंगः । द्वितीयेऽपि सर्पस्यापि तज्जनकत्वमायातमिति चेन्न । सर्पतया ज्ञातरज्जोरेव विशेषणत्वेन व्यभिचाराभावात् सर्वाऽजन्यत्वात् । आत्मनः अर्थक्रियाकारित्वं नास्तीति चेन्न । तस्य यतो वा इमानि भूतानि जायन्ते द्यावाभूमी जनयन् देवएकः, सत्यस्सोस्यमहिमा, सत्यकर्मा महात्मा, यथातथ्यतः अर्थान् व्यदधात् इत्यादिश्रुतिभिः जगत्कारणत्वागमात् । किंच विमतं, सत्यं, आत्मवत्, इत्यनुमानान्तराच्च जगतः सत्यत्वं सम्यक् वज्रलेपायते । अपि च जगदिदं यदि भ्रान्तिकल्पितं भवेत् तर्हि कल्प्यमानां जगत्सदृशसत्याधिष्ठानप्रधानपूर्वकमंगीकार्यं प्रसज्येत । न च सत्यजगद्वयांगीकारो युक्तः पिण्याकयाचनार्थं गतस्य खारितैलप्रदानप्रतिज्ञेव, अधिकापातात् । एकस्य मिथ्यात्वं प्रसादयतः तव सत्यजगद्द्वयांगीकारापेक्षया अस्यैव जगतः सत्यत्वाभ्युपगमो गरीयान् । तथाचैतत्प्रपञ्चः न कदापि भ्रान्ति कल्पितः, अपितु सत्यमेवेति सुविशदं सत्यमार्गपदवीमाटीकते ॥

इति श्री गुरुराजार्पणमस्तु ॥

# ॥ तत्वतो भेदः ॥

म ॥ शा ॥ प्र ॥ वे ॥ "विद्यारत्नं" "न्याय शिरोमणयः"
"न्यायविद्वान्सः" महिशूरु अस्थान विद्वांसः
वेङ्कोबाचार्याः
न्यायशास्त्रप्रधानाध्यापकाः
श्रीगुरुसार्वभौमसंस्कृत महापाठशाला, मन्त्रालय

विदितमेव सर्वेषां यत्स्वरूपानन्दाविर्भावात्मकपरमपुरुषार्थसाधनभगवत्प्रसादजनकापरोक्ष ज्ञाननिदानं शास्त्रजनितं परोक्षज्ञानं, तच्चशास्त्रं भगवतो लक्ष्मीजानेस्सर्वोत्तमतायाः जगत्सत्यत्वभेद पञ्चकपारमार्थिकतादि परमप्रमेयस्य च प्रतिपादकमेव भवेत् । तथाविधं च परमपुरुषस्य अपार कृपापारावारस्य श्रीमन्नारायणस्यादेशमौलिमणिं शिरसा धारयन् निखिलवृंदारकवृंदयाञ्चामुक्ताकलापं हृदाबिभ्रत् । कुमतजनिताविद्यापटलपिहितनयनानां सज्जनानामुद्धर्दीर्षयाऽस्यां भारतभूमाववतीर्य, एक-विंशतिकुभाष्यदूषकोक्तप्रमेयप्रतिपादकश्रीमद्ब्रह्मसूत्रभाष्यादिप्रबन्धप्रवरप्रणेतॄणां पावनानां पावमनानां श्रीमत्पूर्णप्रबोधगुरुवरेण्यानामेवेति । एतद्राद्धान्तसङ्ग्राहकं पठनमात्रेणाघौघविनाशकं पद्यमेकं तात्पर्य चन्द्रिकादिग्रन्थरत्ननिर्मातृभिः प्रथितप्रभावैः श्रीव्यासरायतीर्थपूज्यचरणैर्व्यरचि। तत्र तृतीयप्रमेये "तत्वतो भेदे" किंचिल्लेखनीयमिति श्रीपरिमळप्रकाशनमन्दिराधिकारिभिः प्रचोदितउद्युक्तोस्मिन्लेखने। यद्यप्यत्र बहवो दोषाः संभवेयुः ते सर्वेपि मदीयाज्ञानमूलका एव गुणलेशस्तु श्रीगुरुकृपाकटाक्षविलसितः अनया मदीयया कृत्या श्रीमत्परिमळाचार्यसमर्चितचरणसरोजनिः मन्थनधरश्रीगोपालकिशोरः सुप्रीतो भवतु इत्यर्थयिता ॥

प्रायःप्रागन्यदीया तनुतरविवृतिग्रन्थवासोविहीना ।
ह्रीणानादर्शि धीरैरपि किल युवतिर्भाष्यटीकाभिधाना ॥
अद्य श्रीराघवेन्द्रव्रतिकृतविवृतिप्रौढकौशेयवासः ।
स्वाभिप्रेतं वसानाविहरतिसुधियामग्रतःस्वैरिणीव ॥
शेषोयस्य यतीशतुः प्रवचनासंश्रृत्य मूकायते ।
मन्दारः श्रितकामितार्थकलनां काष्ठायते पाण्डितीम् ॥
वागीशोक्षिपदानिलागममुखे तन्त्रे च छात्रायते।
सोयं प्रस्तुतकौशलं वितरादिन्द्रः सुशीलादिमः ॥
श्रीमन्मूलरघूद्वहांघ्रिनलिनद्वंद्वाद्विरेफायितः ।
पूर्णप्रज्ञमतांबुधामहिमगुर्विद्वत्सुरानोकहः ॥
विद्या वारिजचण्डभाःपरिमळाचार्यानुकम्पाकरः ।
जीयाच्छ्रीसुयमीन्द्रसंयमिमणिर्वेदान्तराज्येचिरम् ॥

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् । प्रपञ्चाद्वस्तुतोत्यन्तभिन्नं श्रीनृहरिं भजे ॥
श्रीमदानन्दतीर्थार्यपादपङ्कजमुत्तमम् । शर्वादिसर्वगीर्वाणवन्द्यं वन्दे पुमर्थदम् ॥
सत्पद्मबन्धवो यस्य गावो विश्वतमोनुदः । तस्यास्तत्वप्रकाशाय जयतीर्थरविर्मम ॥
वृन्दारवनमन्दारमकरन्दसहोदरी । विश्रुता विजयं दद्याद्व्यासतीर्थार्यभारती ॥
यो व्यासमुनिसंप्रोक्तग्रन्थत्रितयदुर्गतः । अजेयेन्द्रान्विजिग्ये तं विजयीन्द्रगुरुं भजे ॥
मूकोपि यत्प्रसादेन मुकुन्दशयनायते । राजराजायते रिक्तो राघवेन्द्रं तमाश्रये ॥
न्याये नो निपुणो न पाणिनिनये नो पावने पावने । रा (सि) द्धान्ते न च चन्द्रिकादि विवृतौ नो वेदचर्चासु च ॥ ख्यातश्रीगुरुराघवेन्द्रचरणः किंचिद्ब्रुवे तत्वतो भेदे प्रत्नवचो विचार्य विबुधाः कुर्वन्तु मन्दे दयाम् (मयि) ॥

ननु सर्वजीवजडात्मकात्प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नमितिश्रीनृहरिस्तवनमयुक्तं भेदस्वरूपस्यैव दुर्निरूपत्वात् । तथाहि विभागो वा पृथुकत्वं वा वैलक्षण्यं वा अन्योन्याभावो वा वस्तुस्वरूपं वा भेदः ? गुणादौगुणानङ्गीकारेण तयोर्गुणादावसंभवात् जीवेशयोर्विभुत्वेन विभागासम्भवात् नाद्यद्वितीयौ तयोः प्रतियोगिप्रत्यक्षाधीनप्रत्यक्षविषयत्वात् ईश्वरस्याप्रत्यक्षत्वेन तन्निरूपितयोस्तयोः प्रत्यक्षायोगाच्च-तृतीयः तद्धि विविधलक्षणवत्वं वा विरुद्धलक्षणवत्वं वा । न प्रथमः एकस्यामेव पृथिवीव्यक्तौ गन्धादि-विविधलक्षणसत्वात् । नान्त्यः भिन्नाधिकरणकलक्षणवत्वलक्षणस्य तस्य भेदज्ञानाधीनतयाऽन्योन्याश्रयात् । न चतुर्थः । तत्प्रतियोगिप्रमाणयोरसंभवात् । नतावदन्योन्याभावस्य घटः प्रतियोगी अभेदस्य भेदविरोधिनस्तदभावरूपतया भेदप्रतियोगिकत्वेन घटप्रतियोगिकत्वासंभवात् । न च घटादिरेवाभेदः, घटाधिकरणे भेदाभावप्रसङ्गात् । न च घटत्वस्यैव घटतादात्म्यरूपत्वेन घटत्वात्यंताभाव एव घटभेद इति न दोष इति वाच्यम् । घटत्वस्य स्वाधिकरणत्वासंभवेन घटत्वे घटभेदो न स्यात् । विषयावैलक्षण्यात् नेह घटत्वं नायं घट इति प्रतीत्योर्वैलक्षण्यं न स्यात् न चेदमिह नेत्यन्ताभावबुद्धौ प्रतियोग्यारोपः कारणं इदमिदन्नेत्यन्योन्याभावबुद्धौ प्रतियोगितावच्छेदकारोपः कारणमिति कारणवैलक्षण्यात्प्रतीतिवैलक्षण्यमिति वाच्यम् । प्रत्यक्षानुमानजनितैकाभावबुद्धौ वैलक्षण्यस्य परमतेप्यभावेन विषयवैलक्षण्यादृते प्रतीतिवैषम्यासंभवात् प्रतीतेर्वैलक्षण्यग्रहमन्तरा तत्र विलक्षणारोपजन्यत्वस्य दुर्ग्रहत्वेन परस्पराश्रयत्वात् । अधिकरणग्रहप्रतियोगिस्मरणप्रतियोग्यनुपलम्भादिनाऽन्यथासिद्धतया चोक्तारोपस्य कारणत्वासंभवात् । किं चान्योन्याभावःधर्मिप्रतियोगिभ्याममभिन्न उत भिन्नः ? नाद्यः सप्रतियोगिकस्य भेदस्य निष्प्रतियोगिधर्मिप्रतियोगिस्वरूपत्वानुपपत्तेः । नद्वितीयः । प्रतियोगिप्रतियोगिकभेदधर्मिकभेदः धर्मिभेदस्वरूपः उत न ? न प्रथमः । स्वस्य स्वेन संबन्धाभावेन धर्मधर्मिभावानुपपत्तेः । न चाभेदेन धर्मधर्मिभावोपपत्तिः । रूपं रूपीत्यादिव्यवहाराभावेन अविशिष्टधीसाधारण्येन तस्य विशिष्टधीनियामकत्वरूप संसर्गत्वासंभवात् विषयावैषम्याद्भेदः भेदो भिन्न इति धियोरवैलक्षण्यप्रसङ्गात् । आधाराधेयभावस्य भेदनियतत्वेन भेदो भिन्नइति विशेषणविशेष्याभावावगाहिप्रतीतिर्न स्यात् । न द्वितीयः । उभयोर्भेदयोरेकघटप्रतियोगिकत्वेन व्यापकीभूतप्रतियोगिभेदाभावेन तयोर्भेदानुपपत्तेः । न च प्रतियोगिभेदाभावेपि अधिकरणभेदेन तद्भेदः संभवतीतिवाच्यम् । अधिकरणभेदमात्रस्याभावभेदाप्रयोजकत्वात् । इत्याद्यनेकावद्यगुम्भितत्वादन्योन्याभावो न भेदः । नापि स्वरूपमिति पञ्चमः यदि भेदः धर्मिस्वरूपः तदा व्यापकस्याधाराधेयभेदस्याभावेनाधाराधेयभावो न स्यात् । सप्रतियोगिकभेदस्य निष्प्रतियोगिकघटादिस्वरूपत्वानुपपत्तेः । तस्माद्भेदस्वरूपस्यैव दुर्निरूपत्वेन पूर्वोक्तस्तवनमयुक्तमितिचेदुच्यते । यद्भेदस्वरूपं निराकृतं तद्-

तीव हास्यास्पदम् । तवापि भेदाङ्गीकारावश्यकत्वात् । अन्यथाभेदनिराकरणं नसङ्घटते निषेधे प्रतियोगिज्ञानस्यकारणत्वात् । भेदनिषेधप्रतिपत्यै श्रवणादौ प्रवृत्त्तिर्नस्यात् । "अन्यावाचोविमुंचथ" "नान्यः पन्था अयनाय विद्यते" "नान्यच्छ्रेयोदयंतेप्रमूढाः" "इतरेणतुजीवंतियस्मिन्नेतावुपाश्रितौ"। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" । "भेदव्यपदेशाच्चान्यः," "पृथुगुपदेशात्," "चार्थेद्वंद्वः" इत्यादिश्रौतस्मार्तसर्वव्यवहारोच्छेदप्रसंङ्गात् । भेदसामान्यालीकत्वे तद्विशेषकर्मभेदप्रमाणतया शब्दान्तरादेर्जैमिनिमहर्षिणःरूपन्यासासाङ्गत्यापत्तेश्च । दूष्यदूषणयोः प्रमाणतदाभासयोः निगमनिगमाभासयोरज्ञानज्ञयोः सुरापयसो र्मातृकलत्रयो र्भेदाभावेन बहुविप्लवापत्तेश्च । तदुक्तं "स्नुषाचभार्या भार्याच माता गौश्च शुनीबुधः। मत्तएवेति तच्छास्त्रस्यादुन्मत्तस्य जल्पितम् । गम्यागम्यविभागश्च स्वरूपैक्येकथंवदेति" । न च वयं भेदसामान्यं निषेधयामः । स च भेदः बिम्बप्रतियोगिकप्रतिबिम्बानुयोगिकभेदवन्मायिकएवेत्यभ्युपगच्छामः । तेन सर्वाव्यवस्थाःसंभवन्तीतिवाच्यम् । मायिकपदार्थस्य व्यवस्थापकत्वासंप्रतिपत्तेः । उक्तबिंबप्रतिबिंबभेदस्य स्वाभाविकत्वात् । न च तत्स्वरूपं दुर्निरूपं विभागो वा पृथुक्त्वं वा स इत्यङ्गीकारात् । तत्र प्रत्यक्षस्य प्रामाण्यासंभवेपि श्रुत्यनुमानयोस्तद्विषयीकारित्वेन प्रामाण्यसंभवात् । अस्तुवावैलक्षण्यं भेदः परस्पराभावरूपत्वतद्व्याप्यत्वरूपवैलक्षण्यस्य भेदनियतत्वेपि तद्ग्रहाधीनग्रहविषयत्वेप्रमाणाभावात् । न ह्यश्वभेदव्याप्यअश्वत्वाभावस्तद्ग्रहाधीनग्रहविषयः तथा च क्वान्योन्याश्रयः । वैलक्षण्यमेव भेद इति वदन्तं प्रति वैक्षण्यस्य भेदग्रहाधीनग्रहविषयत्वोक्त्ययोगाच्च । अन्योन्याभावोवाभेदप्रतीतिविषयः। नतत्प्रतियोगिप्रमाणयोरसंभवदुक्तिकतातन्नघटादेःप्रतियोगित्वस्य प्रत्यक्षादेः प्रामाण्यस्य च संभवात् नचाभेदविरुद्धतया प्रतीतभेदस्याभेदप्रतियोगिकत्वमेव युक्तं घटत्वविरुद्धतयाप्रतीततत्प्रतियोगिक घटत्वान्यताभाववदितिवाच्यम् ।मेयसिद्धेर्मानाधीनतयापटो घटो नेति भेदे घटप्रतियोगिकत्वतदभेदविरोधित्वयोरनुभवेन भेदे घटप्रतियोगिकत्वाद्यङ्गीकारात् । न च घटः पटइति प्रतीतिविषयाभेदस्यैव नञ् समभिव्यहारेप्रतियोगित्वं भासते न घटादेरितिवाच्यम् ।भूतले न घट इति प्रतीतेर्घटादि संसर्ग प्रतियोगित्वावगाहनसंभवेन घटादेस्तन्नस्यात् । किंच नेह नानास्ति किंचनेति श्रौतनिषेधप्रतियोगित्वस्य प्रपञ्च संसर्ग एवेति प्रपञ्चमिथ्यात्वासिद्धेश्च । न च संसर्गेणाऽरोप्यस्य घटादेः संसर्गाभावप्रतियोगित्वमिति न नो हानिरितिवाच्यम् । अभेदेनारोप्यस्यघटादेरन्योन्याभावप्रतियोगित्वसंभवात् । अस्तुवाऽभेदस्य तत्प्रतियोगित्वं घटादेरवाभेदरूपतया भेदस्यतत्प्रतियोगिकत्वाक्षतेः । प्रमेयत्वं प्रमेयं अभिधेयत्वमभिधेयं, घटाभावोघटो न मिथ्यात्वंमिथ्येति व्यवहारेणाभेदेप्याधाराधेयभावोपपत्या घटो घटाभिन्न इति प्रतीत्युपपत्तेः । भेदभेदस्याधिकरणरूपतावादिभिर्नैयायिकैः पटो घटभेदो नेति प्रतीतेः अधिकरणातिरिक्ताभावमनङ्गीकुर्वद्भिर्मीमांसकैरपि भूतले घटो नेति व्यवहारादेश्चाङ्गीकाराच्च नचोक्तदोषः । नहिभेदस्याभेद सामानाधिकरण्यं विरुद्धं किंतु तत्स्वरूपवृत्तित्वमित्यदोषात् । नचान्योन्याभावस्य घटादिप्रतियोगिकत्वे आभावत्वस्यप्रतियोग्यसामानाधिकरण्यव्याप्यत्वेन घटाधिकरणे भूतले तद्भेदासंभवेन भूतले घटो नेत्यननुभवप्रसङ्ग इति वाच्यम् । अन्योन्याभावस्य प्रतियोग्यवृत्तित्वमेवाङ्गीकुर्मः ननु प्रतियोग्यसामानाधिकरण्यमिति निरुक्तव्याप्तेरसिद्धेः । न च भेदस्य प्रतियोगिसामानाधिकरण्ये अभावमर्यादोल्लङ्घनप्रसङ्गः । संयोगाभावप्रागभावप्रपञ्चघटकमिथ्यात्वाभाववत्तदुपपत्तेः । न चैकावच्छेदकावच्छेदेनस्वतुल्यसत्ताकप्रतियोग्यसमानाधिकरण्यमेवाभावमर्यादा । तथा चाभावत्वस्य प्रतियोगिताविशिष्टान्यत्वेन व्याप्तिः वै.स्वनिरूपकत्व स्वाश्रयसत्तासमानसत्ताकत्वस्वविशिष्टाधेयतावत्वे तन्नियतसंबन्धेन स्व.वै. आधेयतायां स्वविशिष्टाधेयतावत्वसं. तत्र । स्व. वै. स्वावच्छेदकधर्मसंबन्धावच्छिन्नत्वसं. आधेयतावै. आधेयतायां स्वनिरूपकनिरूपितत्व स्वावच्छेदकावच्छिन्नत्वोभयसं । अत्र प्रतियोगिप्रसिद्धिः कुत्रचित् सम्पा-

दनीया। एवं च संयोगाभावप्रागभावयोर्नोक्तसं. प्रतियोगिताविशिष्टत्वं तयोर्भिन्नदेशकालावच्छेदेन प्रतियोगिसामानाधिकरण्यात् मिथ्यात्वघटकाभाववत्वस्य न प्रतियोगिसमसत्ताकत्वं तन्मतेनिषेध प्रतियोगिनोभिन्नसत्ताकत्वादिति वाच्यम्। प्रतियोग्यसमानाधिकरण्यापेक्षया गुरुतयोक्तरूपस्याभावस्व भावताया अनङ्गीकारात् । किंचान्योन्याभावस्यारोप्य (प्रतियोगितावच्छेदक) संबन्धस्तादात्म्यमेवेति तेन संबन्धेन न प्रतियोगिसामानाधिकरण्यं भेदस्येति न दोषः। किंच घटाभेदस्य घटत्वरूपतया घटत्वात्यंताभाव एव घटभेद इत्यङ्गीकारेपि दोषाभावात्। न च घटत्वेघटत्वाभावाभावेन तत्रघटभेदो नस्यादितिवाच्यम्। न च प्रतियोगितदभावयोरेकतरा भावेऽन्यसत्वनियमेन घटत्वे घटत्वस्याभावेन तदभावसत्वान्नदोषः। न च नायं नियमः घटाभावे घटस्य आत्माश्रयेण तदभावस्यवाभावादितिवाच्यम्। घटाभावे घटोनेत्यबाधितप्रतीत्या घटाभावे घटाभावाङ्गीकारात् प्रामाणिकतयाऽऽत्माश्रयस्यादोषत्वात्। नापिविषयवैलक्षण्याभावनिबन्धनो दोषः घटः पटो न घटपटयोरभेदो नास्तीतिधियोर्वैलक्षण्यं तवमतेपि नस्यात् यदि घटःपटोनेतिप्रतीत्यनन्तरं घटपटयोरभेदो नास्तीति विवरणात् तयोर्वैलक्षण्यमिष्टं तदा प्रकृतेपि समं।अभेदोनाम तादात्म्यं तच्च तदात्मनः भावः स्वप्रकृत्यर्थवृत्यसाधारणधर्म इति यावत्। एवं च घटत्वं घटाभेद इति तद्विवरणमपिसाध्वेव। एवं प्रमेयवैलक्षण्यस्यप्रमाणप्रवृत्तिं विना दुर्ज्ञेयत्वेनानान्यथासिद्धप्रतीतिवैचित्र्यस्यैव विषयवैचित्र्यकल्पकत्वस्य संभवात् । एवं च पूर्वोक्तप्रकारेण विषय वैलक्षण्ये सिद्धे एतादृशविशेषविषयक प्रत्यक्षं प्रत्यरोपस्य कारणत्वग्रहसंभवात् शाब्दनिषेधबुद्धेः प्रतियोगिप्रसक्तिपूर्वकत्वमिवाविशेषात्प्रात्यक्षिकतद्बुद्धेरपि तत्प्रसक्तिपूर्वकत्वावश्यंभावेन यद्विशेषयोरिति न्यायेन प्रतियोग्यारोपस्यापि तत्सामग्रीनिवेशेन यद्विशेषयोरितिन्यायेन प्रतियोगिविशेषिताभाव बुद्धित्वावच्छिन्नं प्रत्येव प्रतियोग्यारोपस्य कारणत्वसंभवात् । न चाभावप्रतीतिपूर्वं दोषाभावेनरोपासंभव इति वाच्यम्। यद्यभावधीकारणत्वेनारोपः सिद्धः तदा तत्कारणत्वेन दोषस्यापि तत्पूर्वं कल्प्यत्वात् । नहि कोपि जात्या दोषो भवति। कचिद्दोषस्य स्थलांतरे गुणत्वात्। गुणस्यान्यत्रदोषत्व स्यानुभवसिद्धत्वात् इच्छाया एव दोषत्वसंभवात् । किंचान्योन्याभावात्मकं भेदस्येत्यादिप्रागुक्तदोषः लगतिभेदधर्मिकभेदस्य धर्मिभूतभेदस्वरूपत्वाभ्युपगमात्। भेदो भिन्नइत्यबाधित प्रतीत्या स्वस्मिन्स्ववृत्तेरङ्गीकारात्। उक्तविशिष्टप्रतीतिबलाद्विशिष्टधीजनकप्रतीतिविषयत्वरूपसंसर्गत्वस्य भेदेऽङ्गीकारात्। भेदमात्रविषयत्वतद्वत्वविषयत्वाभ्यामेव वैलक्षण्योपपत्तेः । प्रमेयत्वाभिधेयत्वादिवदेकस्य विशेषण विशेष्यभावोपपत्तेः । अस्तु वा तत्र भेदांतरं। प्रकृतेऽधिकरणभेदेन भेदधर्मिकभेदतदधर्मिकभेदयोर्भेदोपपत्तेः। घटाद्यभावस्य भूतलब्रह्मरूपाधिकरणाधिष्ठानभेदेन भेदस्य त्वयापि स्वीकारात् । वाच्यत्वमेयत्वादिवत्परस्परवृत्तित्वस्यैव संभवेनानवस्थादेरप्रसरात्। अस्तु वा स्वरूपमिति पञ्चमः पक्षः। भेदस्य धर्मिस्वरूपतायां निर्बाधात् न चात्र प्रमाणाभावः घटः पटो नेति प्रतीतेरेव प्रमाणत्वात् । अत्रहि घटस्य पटात्मकताविरोधिपदार्थः नञाप्रतीयते। तच्च घटस्वरूपमेव। अन्यथा घटस्य पटानात्मकता नस्यात्। भेद प्रतिनिधिना विशेषेणैव भेदतद्धर्मिणोरभेदेपि विशेषणविशेष्यभावोपपत्तेः। तदुक्तं पावनैः पवमानैः सर्वज्ञैः "भेदहीनेत्वपर्यायशब्दान्तरनियामकः। विशेषो नामकथितः सोस्ति वस्त्वशेषत इति"। न च निष्प्रतियोगिकधर्मिस्वरूपता न सप्रतियोगिकभेदस्येति वाच्यम् । निष्प्रतियोगि ब्रह्मस्वरूपत्वस्य प्रपञ्चाभावे त्वयाप्यङ्गीकारात्। यद्यद्वैतश्रुतिबलेन तथाङ्गीक्रीयते तथोक्तप्रतीतिबलात्प्रकृतेप्युपपत्तेः। यदि भेद एव नाभ्युपेयते तदा इदमिह न इदमिदं नेति प्रतीत्योर्वैलक्षण्यं नस्यात्। न च तत्स्वरूपस्य निर्वचनासंभव इति वाच्यम् इक्षुक्षीरादिमाधुर्यवद्विशिष्यदुर्वचत्वेपि त्वयाभ्युपेयत्वात्। निर्वचनाभावो हि पुरुषाशक्तिप्रयोज्यः पुरुषदोषमेव गमयति । निर्वचनव्यतिरेकमात्रेण वस्तुनो सत्वे ब्रह्मणोपि त्वन्मतेऽनिर्वच

नीयत्वेन मिथ्यात्वापत्तेः पूर्वोक्तरीत्या निर्वचनसंभवेनानिर्वचनासिद्धेः। एवमेवैऽक्यपक्षेपि ऐक्यस्य ब्रह्म स्वरूपत्वे निरपेक्षत्वं तद्धर्मत्वेऽनवस्थेत्यादिदोषः प्रसरति। तदुक्तं। भेदःस्वरूपंधर्मोवेत्यादिरूपाविभीषिका अत्रवर्णद्वयंन्यूनम्। अकारमात्रप्रक्षेपे स्यादभेदेविभीषिकेति। भेदभावादन्यदैक्यं नास्तीति चेदैक्या भावाद्भेदोऽन्यो नास्तीतिसमं। भेदादूषणेनैवैक्यसिद्धिः संभवतीति चेत् ऐक्यदूषणेनैव भेदसिद्धि निष्प्रत्यूहैव। तदभिहितम्। "भेदस्यखण्डनेनैव यद्यभेदः प्रसिध्यति। अभेदखण्डनेनैव तर्हि भेदोपि सिध्यतु"। इति ब्रह्मातिरिक्तैक्यमेव नास्तीति चेद्ब्रह्मातिरिक्तभेदोपि नास्तीति समं। श्रुतिविरोधेनैक्य दूषणपरायुक्तयोऽऽभासाइति चेत् प्रत्यक्षविरोधेन भेददूषकास्तथेति समं। भवन्मते स्वस्मिन्स्वाभेदस्य-प्रामाणिकतयाऽभेदनिराकरणं न युक्तमिति चेत्वन्मतेपि ब्रह्मणोऽनृताद्भिन्नत्वेन भेदनिराकरणं न संघटते। एतत्संगृहीतं "शुष्कतर्कैर्भेदबाधे स्यादभेदोपि बाधितः। प्रमितत्वात्तत्र तर्कास्तुच्छाश्चेत्प्रकृतेन किमिति"।

किंच नायं भेद इति वा नास्त्यत्रभेद इति वा अन्यदेवभेदात्मनाप्रत्यभादितिवा बाधकज्ञानंवाच्य तत्सर्वमपि भेदावगाहीति भेदसिद्धिः निष्प्रत्यूहा। एवं चान्योन्याभावशब्दितभेदस्य धर्मिस्वरूपत्वंसिद्धं तदुक्तं "भावाभावस्वरूपत्वान्नान्योन्याभावतापृथु" गिति। अविद्यानिवृत्त्यद्वैतयोर्ब्रह्मैक्यवदभावस्य भावैक्यमुपपन्नमिति॥

ननु तथापि भेदोनिष्प्रमाण एव। तथाहि। नतत्रप्रत्यक्षं प्रमाणं भवति। तद्धि बाह्यमन्तरंवा नाद्यः रूपादिशून्ये वस्तुनि तस्याप्रसरात्। न द्वितीयः मनसोप्रामाण्यात्मनो न प्रमाणं प्रमाणसहकारित्वा-दालोकवत् इत्यनुमानसिद्धत्वात्। यल्लोकेप्रमाणतयावगतं चक्षुरादि नतत्प्रमाणसहकारिदृष्टं। नचरूपादि-ज्ञानं प्रत्यपि मनसः करणत्वमेव न सहकारित्वमिति वाच्यम्। तथासति सुखादिसाक्षात्कारस्येव तस्यापि मानसत्वंस्यात्। एवमेवसर्वत्रमनसएवप्रामाण्यसंभवेन चक्षुरादीनां तद्विलोपापत्तेः। न च सुखसाक्षात्कार इन्द्रियकरणकः जन्यसाक्षात्कारत्वादित्यनुमानेन सुखसाक्षात्कारे इन्द्रियजन्यत्वेसिद्धे तत्साक्षात्कारः मन इन्द्रियकारणकः अनुपपन्नेतरेन्द्रियकरणकत्वेसति इन्द्रियजन्यत्वादिति परिशेषानुमानेन मनसः प्रामाण्यसिद्धिरितिवाच्यं। सुखसाक्षात्कारस्येन्द्रियजन्यत्वे सिद्धे ततो मनसः प्रामाण्यसिद्धिस्तदेव न। उक्तानुमानात्प्रागिन्द्रियत्वमेवासिद्धं। तथाहि। न तावदिन्द्रियत्वं जातिः पृथिवीत्वादिनासाङ्कर्यात्। नापि तत्तद्व्याप्यमिन्द्रियत्वं नाना इन्द्रियपदस्यानेकार्थत्वप्रसङ्गात्। किंन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वेसति ज्ञानकारणमनःसंयोगाश्रयत्वं तत्। एवं च मनसिमद्धेः प्रागिन्द्रियत्वमेवासिद्धं अतो नानेनानुमानेन मनः प्रामाण्यसिद्धिः। किंच सुखादिव्यवहारः स्वसमानविषयकज्ञानजन्यः व्यवहारत्वात्संमतवदित्यनुमानेन लाघवात्तदेकः साक्षात्कारः सिद्धः एवमवस्थात्रयानुयायिसाक्षात्कारस्य नित्यत्वेन जन्यत्वमेवासिद्धं। अतो नानेनानुमानेन मनः प्रामाण्यसिद्धिः। एवं मनो न प्रमाणं प्रमाश्रयत्वादित्यनुमानेनापि मनसोप्रामाण्य सिद्धः। नचासिद्धिः। कामःसङ्कल्पो विचिकित्सेत्यादिश्रुत्या नहिसिद्धः। तदुक्तं "प्रमाणसहकारित्वा-द्विषयस्याप्यभावतः। न प्रमाणं मनोस्माकं प्रमादेराश्रयत्वत" इति। किंच येनेन सन्निकर्षासंभवान्न मन-स्तत्र प्रमाणं। अभावे संयोगसमवायतादात्म्यान्यतमानां न सन्निकर्षता संभवति। नापि विशेषणतासन्नि-कर्षः व्यवहितप्रदेशेपि घटाभावे भूतलादिविशेषणतायाः सत्वेन चाक्षुषत्वापत्तेः। नापि स्वसन्निकृष्टा-श्रितकरणविशेषणता, परमते कर्णवलयावच्छिन्ननभसः श्रोत्रत्वात् स्वेन स्वस्य सन्निकर्षायोगेन श्रोत्रेन्द्रि-यसन्निकृष्टाधिकरणविशेषणताभावेन शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गात्। एतदप्यभिहितं संयोगादेरयुक्त-त्वात्तदन्यस्याप्रसिद्धितः। सन्निकर्षस्य तेनेदं भेदासङ्ग्येव मानसमिति। एवमभावग्राहकप्रमाणसहकारि-योग्यानुपलब्धेरभावेन मनस्तत्राप्रमाणमेव। योग्यानुपलब्धिर्हि तत्प्रमाणविषयतावच्छेदकधर्मावच्छिन्न

विषयकप्रत्यक्षाभावः ईश्वरस्याप्रत्यक्षत्वेन योग्यानुपलब्धेरभावेन तद्भेदे न मनः प्रसरति। किंचेश्वरत्वं न जातिः तस्यैकत्वेन व्यक्त्यभेदात्। न च ब्रह्मविष्णुशिवादिभेदेनेश्वरनानात्वान्नव्यक्तेरभेद इति वाच्यं। नानात्वे तेषामीश्वरत्वमेव न भवेत्। यतो वा इमानि भूतानि जायन्ते। इत्यादिना सृष्ट्यादिकर्तुरेकत्वावगमात्। स ब्रह्मा स शिव इत्यादिना तेषामैक्यस्य बोधनात् नापि द्व्यणुकादिकर्तृत्वं तद्विशिष्टस्यातीन्द्रियत्वेन योग्यानुपलब्धेरसंभवात्। एवं चेश्वरत्वस्य दुर्निर्वचत्वेन तद्भेदानुपलब्धिरूपयोग्यानुपलब्धेर भावेन न मनस्तत्रप्रमाणं। तस्मात्प्रत्यक्षं भेदे प्रमाणं। तदुक्तं "अप्रमाणं मनोऽसक्तमयोग्यानुपलब्धिकम् सोपाधिकस्थोभेदोयं नाध्यक्षमितिगोचर" इति तन्न चारुतरं। नाहमीश्वर इति प्रत्यक्षस्यैव तत्र प्रमाणत्वात्। न चेयं प्रतीतिर्भ्रमः। बाधकाभावात्। रूपादिशून्येऽऽत्मानि चक्षुरादीनां प्रामाण्यासंभवेपि सुखाद्युपलब्धिसाधनतया प्रमाणत्वेन प्रमितमनसस्तत्रप्रामाण्यसंभवात्। न च ब्रह्मणोप्रत्यक्षत्वात्ततो भेदोप्यप्रत्यक्षः। मनसि घटत्वाभावस्याप्रत्यक्षत्वेन घटे मनस्त्वाभावस्य प्रत्यक्षत्वेनाभावप्रत्यक्षे प्रतियोगिप्रत्यक्षस्यातन्त्रत्वेनातीन्द्रियेश्वरभेदोपि प्रत्यक्षो भवत्येव। न चोक्तरीत्या मनसोप्रामाण्यं रूपादिज्ञाने चक्षुःसहकारिणोऽऽलोकादेर्वन्ह्यनुमापकत्वेन प्रामाण्यात्। व्यभिचारः पूर्वोक्तव्याप्तेः। न च प्रमाणसहकारितावच्छेदकस्य न प्रमाकरणतावच्छेदकतेति नियमोङ्गीक्रीयते वह्निव्याप्यत्वादिरूपेण प्रमाकरणेप्यालोकादेर्न तेन रूपेण सहकारितेति न दोष इति वाच्यं। प्रकृतेपि मनस्त्वेन प्रमाणसहकारिणो मनसइन्द्रियत्वेन प्रामाण्याङ्गीकारात्। न च तस्येन्द्रियत्वे प्रमाणाभावः "इन्द्रियाणां मनश्चास्मि" "महाभूतान्यहंकारो बुद्धिरव्यक्तमेवच। इन्द्रियाणि" इत्यादिभगवद्वचनेन "कर्मेन्द्रियन्तुपाय्वादि मनोनेत्रादिधीन्द्रिय" मिति कोशप्रसिध्या च तत्सिद्धेः। एतेन मनस इन्द्रियत्वमेव नास्तीत्यादिपूर्वोक्तचोद्यं निरस्तम्। तथा च एकस्यैवमनसः ज्ञानसामान्ये मनस्त्वेन सहकरिता सुखादिसाक्षात्कारे प्रमाणान्तरासहकृतेन्द्रियत्वेन करणत्वामित्यङ्गीकारान्नातिप्रसक्तेः प्रसक्तिः। न च सुखादिसाक्षात्कारस्य नित्यतयानेन्द्रियजन्यत्वमिति वाच्यं। तस्योत्पादविनाशयोरनुभवसिद्धत्वेन नित्यत्वासिद्धेः न च साक्षिणैव सुखादिव्यहारः सिध्यतीति न मानसवेद्यता सुखादेरिति वाच्यं। सुखादिरूपविषयतत्सन्निकृष्टमनोरूपसामग्रीसत्वेन तस्याप्युत्पत्तौ निर्बाधात्। एवं मनसैवेदं पश्यामीत्यनुभवेन मनसः प्रामाण्यं सिद्धं। न च कामः सङ्कल्पवित्यादिश्रुत्या प्रमाश्रयत्वेन प्रमितमनसो न प्रामाण्यमितिवाच्यं। अन्यत्र चक्षुरादेः ज्ञानकरणस्य तदाश्रयत्वग्राहक प्रमाणाभावेन ज्ञानाश्रयत्वाभावेपि प्रकृते ज्ञानाश्रयत्वकरणत्वोभयग्राहकोक्तप्रमाणद्वयसद्भावेन मनसः प्रमाश्रयस्य प्रमाकरणत्वाङ्गीकारात्। मेयसिद्धेर्मानाधीनत्वात्। यदप्युक्तं भेदेन सन्निकर्षाभावादिति तदपि नसाधीयः। गुणादीनामिन्द्रियेण संयोगादेरसंभवेन संयुक्तसमवायः गुणादिसमवेतसामान्ये संयुक्तसमवेतसमवायः शब्दे तयोरसंभवेन समवायः यथासन्निकर्षतयाऽभ्युपेयते, तथाऽभावेइन्द्रियेण स्वसंबद्धविशेषणतायाः प्रत्यासत्तित्वोपगमात्। न चश्रोत्रेन्द्रियसंबद्धविशेषणतायाः शब्दाभावेऽभावेन तस्याप्रत्यक्षत्वप्रसङ्गः। तत्र स्वविशेषणताया एव सन्निकर्षत्वात्। तर्हि स्वनिष्ठघटाभावस्य चक्षुषा ग्रहण प्रसङ्गः। तत्रेन्द्रियसंबद्धविशेषताया एव फलबलेन सन्निकर्षत्वोररीकरणात्। वस्तुतस्तु सुखादयो न मानसवेद्याः किंतु साक्षिग्राह्या एव। अतो न मनस्तत्रप्रमाणं एवमेव भेदोपि साक्षिवेद्य एवेति न काप्यनुपपत्तिः। मोक्षसाधनभगवदपरोक्षज्ञानजनकतया मनसः प्रामाण्यं निष्प्रत्यूहं। तच्च मनसैवानुद्रष्टव्यमिति प्रमाण प्रमितमेव ॥

यदप्यभावाग्राहकप्रमाणसहकार्यऽनुपलब्धेरभावादिति तदपि न साधु। चक्षुरादिना घटादेरिवाभावेन समं साक्षात्सन्निकर्षेणैवाभावप्रत्यक्षोपपत्तेः। अनुपलब्धेः सहकारिताया अनङ्गीकारात्। किंचानुपलब्धिर्नाम प्रतियोगिज्ञानसामान्याभावो वा प्रतियोगिप्रत्यक्षाभावो वा अभावग्राहकेन्द्रियकरणक प्रतियोगिप्रत्यक्षाभावो वा? आद्ये शंखे श्वेतत्वानुमितिकाले दोषादिना तदभावभ्रमो न स्यात्। न चानुपलब्धिरभावप्रमां प्रत्येव हेतुरिति वाच्यं। तथासति गुंजापुञ्जे चक्षुरादिनारोपितेन वह्नित्वेनोष्णास्पर्शानुमितिदशायां त्वचोष्णस्पर्शाभावप्रमा न स्यात्। द्वितीये इदं रजतमिति शुक्तौ रूप्यभ्रमकाले रूप्याभावप्रमा न स्यात्। प्रतियोगिभूतरूप्यप्रमाया अभावात्। न तृतीयः तथासति मण्डूकवसाञ्जनदोषेण वंशमुरगं पश्यतो वंशे त्वचोरगत्वाभावप्रमा न स्यात्। चतुर्थे विनश्यदवस्थापन्ने घटे चक्षुषा कपाले घटोऽस्तीति

प्रतीत्यनंतरं घटनाशे तन्नाशप्रत्यक्षं न स्यात् । तत्पूर्वक्षणे (ध्वंसोत्पत्तिक्षणे) चाक्षुषघटप्रत्यक्षस्यैव सत्वात्तस्माद्भावसाक्षात्कारेऽभावानुपलब्धिरिवाभावसाक्षात्कारे न भावानुपलब्धिः सहकारिणी किंत्व-वर्जनीयसन्निधिरेव । तदुक्तं पद्धतौ "अनुपलब्धिस्त्ववर्जनीयसन्निधिरेवे" ति । ईश्वरत्वस्य यत्किंचि-द्रूपत्वेपि तदभेदोपालंभापादनसंभवेन योग्यानुपलब्धिरपि निर्व्यूढेवेति जीवे ईश्वराद्भेदः प्रत्यक्षवेद्य एव । ईश्वरस्य जीवाद्भेदेतु "तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतप" "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इत्यादि तद्वचनानुमितमीश्वरप्रत्यक्षं प्रमाणमिति भेदस्य प्रत्यक्षगम्यत्वं सिद्धम् ॥

एवं जीवेश्वरभेदेऽनुमानं मानं । तथाहि । अहमितिप्रतीतिविशेष्यः ईश्वरधर्मिकभेदप्रतियोगी असर्वज्ञत्वात्परिच्छिन्नत्वात् । ईश्वरः जीवानुयोगिकभेदप्रतियोगी सर्वज्ञत्वात् अपरिच्छिन्नत्वात् । इत्यनुमानेन जीवपरभेदसिद्धिः न चाप्रसिद्धविशेषणता । जीवः किंचिद्धर्मिकप्रतियोगिज्ञानाबाध्य भेदप्रतियोगी ईश्वरो वा किंचिद्धर्मिक भेदप्रतियोगी अधिष्ठानत्वाच्छुक्तिवदित्यनुमानेन सामान्यत जीवे ईश्वरे वा किंचिद्धर्मिकभेदप्रतियोगित्वसाधनेन तस्य च व्यतिरेकिणा धर्मिविशेषानुयोगिकत्वमेव सिध्यतीति नाप्रसिद्धविशेषणता । एवं जीवेश्वरौ धर्मिज्ञानाबाध्यपरस्परप्रतियोगिकभेदवन्तौ विरुद्धधर्माधिकरणत्वाद्दहनतुहिनवत् । इत्यपि भेदे मानं । तादृशविरुद्धधर्माः स्वतन्त्रत्वास्वतन्त्रत्वादयः । ते च "अल्पशक्तिरसार्वज्ञ्यं पारतन्त्र्यमपूर्णता । उपजीवकत्वं जीवत्वमीशत्वंतद्विपर्ययः । स्वाभाविकं तयोरेतन्नान्यथा तु कथंचने" ति श्रुत्या सिद्धा इति नासिद्धोहेतुः । "चेतनत्वं धर्मिज्ञानाबाध्यजीवत्वा-वच्छिन्नप्रतियोगिताकभेदवद्वृत्ति सर्वचेतनवृत्तित्वात् । शब्दार्थत्ववदित्यादीन्यनुमानानि च भेदे प्रमा-णानि । ननु नानुमानं जीवेश्वरभेदे प्रमाणं जीवपरयोर्भेदमात्रसाधने व्यावहारिकभेदमादाय सिद्ध साधनता स्वज्ञानाबाध्यत्वस्य भेदविशेषणत्वे स्वपेदन जीवपदवाच्यकर्त्रादिरूपात्मनो विवक्षायां पूर्वोक्त भेदस्यैतादृशात्मज्ञानाबाध्यत्वेन स एव दोषः अखण्डचिदात्मविवक्षायां सर्वस्यापि तज्ज्ञानबाध्यत्वेन स्वज्ञानबाध्येत्यादिविशेषणाप्रसिध्याव्याप्यत्वासिद्धिः । किंज जडत्वमुपाधिः तच्चास्वप्रकाशत्वं ईश्वर धर्मिकभेदप्रतियोगित्वरूपसाध्याधिकरणे परेऽस्वप्रकाशत्वस्य सत्वेन साध्य व्यापकतायाः पक्षेऽऽत्मनि स्वप्रकाशे साधनाव्यापकत्वेन च भवत्ययमुपाधिरिति एवं कल्पितभेदेन सर्वस्याप्युपपत्तावप्रयोजकता चवक्ष्यमाणश्रुतिबाधश्चेति नानुमा भेदसाधिका । तदुक्तं सिद्धसाध्यत्वतो भेदो व्याप्यत्वासिद्धतोऽथवा । बाधाज्जडत्वोपाधित्वान्नानुमानस्य गोचर इति । एवमेवेतरानुमानानां दोषकलङ्कितितया न भेदे प्रामाण्यमिति । एतदप्यसाध्वेव । आरोपितसाध्यादिकमादाय यदि दोषः स्यात् । तदा सर्वत्रारोपितसाध्य-स्याङ्गीकारेण सिद्धसाधनता ह्रदादावारोपितसाध्यसत्वेन बाधोच्छेदश्च स्यात् । न च व्यावहारिकसाध्या भावे बाधः व्यावहारिकवह्नेर्ह्रदादावभावेन बाधसंभवः । तादृशसाध्यानङ्गीकारेण नसिद्धसाधनमिति वाच्यं । व्यावहारिकोप्यारोपितप्रभेद एवेति दुरुद्धरः पूर्वोक्तदोषः । भेदे स्वज्ञानाबाध्यत्वादिविशेषणेन सिद्धसाधनताया अप्रसरात् । न च स्वपदेनेत्यादिकथितदोषः त्वदभिमतब्रह्मण एव विवक्षिततया अदोषात् एवं च ब्रह्मजडभेदस्य बाध्यत्वे तयोरभेदस्य प्रतियोगितदभावयोरेकस्य बाधेऽन्यस्य परमार्थिकत्वनियमेन परमार्थिकत्वापत्या ब्रह्मणो जाड्यापत्तेः । तथा च न साध्याप्रसिध्याव्याप्यत्वासिद्धिः प्रसक्तिः । नापि जडत्वमुपाधिः । जीवपरयोर्भेदाभावे सर्वज्ञत्वासर्वज्ञत्वादिव्यवहारासिद्धिस्स्यादित्य नुकूलतर्केण हेतोः साध्याव्याप्यत्वे सिद्धे साध्यव्यापकसाधानाव्यापकत्वेनोपाधेस्साध्याव्यापकत्वे निश्चिते पक्षे साध्याभावाद्यनुमापकतोपाधेर्नसंभवतीति सत्प्रतिपक्षोद्युन्नायकत्वाभावेनोपाधेर्दूषकत्वादप्रयोजकता । नचारोपिते न भेदादिना व्यवहारसिद्धिः वह्नौ वह्निभेदारोपेपि तदितरकार्यादर्शनात् । वक्ष्यमाणरीत्या भवदभिमत तत्वमस्यादिश्रुतीनामर्थांतरपरत्वेन बाधस्याप्यप्रसरात् । निर्दोषमेवैतदनुमानमिति । एवमेवा-

न्येष्वनुमानेषु आरोपितदोषाः परिहर्तुं शक्या एवेति जीवपर भेदेऽनुमानं मानमेव । एवं जीवानां परस्पर-भेदे "चैत्रो मैत्रप्रतियोगिकधर्मिज्ञानाबाध्यभेदवान् मैत्रानुसंहितदुःखाननुसंधातृत्वात् , घटवत् । विमतो बन्धध्वंसः स्वप्रतियोगितावच्छेदकावच्छिन्नाधारप्रतियोगिकप्रतियोगिज्ञनाबाध्यभेदवन्निष्ठः बन्धध्वंसत्वात् संमतवत् । जीवः स्वज्ञानाबाध्यसंसारध्वंसाधिकरणप्रतियोगिकभेदवान् पदार्थत्वात्घटवत्" इत्याद्यनुमा मानं । अनौपाधिकभेदाभावे सुखाद्यनुसन्धानाननुसन्धानयोरनुपपत्तेर्नाप्रयोजकता । नचोपाधिभेदेनानु-सन्धानानुसन्धानाद्युपपत्तिः । करचरणाद्युपाधीनां बाल्ययुवशरीराद्युपाधीनां च भेदेप्यनुसन्धानदर्शनेनो-पाधिभेदस्य तत्राप्रयोजकत्वात् । ननु बाल्ययुवादिशरीरं न भिद्यते, स एवायं चैत्रपुत्रः, स एवायं ब्राह्मण इत्यादिप्रत्यभिज्ञानात् । एवं युगपदनेकदेहा नेकस्यसंभवतीति क्रमेणैवदेहयोगोवाच्यः । एवं च पूर्वशरीर-नाश एवोत्तरदेहयोगस्य वक्तव्यतया पूर्वशरीरनाशकाभावेन तन्नाशासंभवः । किंचोत्तरदेहोत्पत्तिरपि क्लृप्तकारणान्नभवति अनुपलम्भविरोधात् यदि कारणांतरात्तदा ब्राह्मण्याप्रयोजकस्य विशिष्टपित्रादि-जन्यत्वस्याभावेन ब्राह्मण्याद्यनुपपत्तौ तन्निमित्तकव्यवहारादेरनिष्पत्तिरिति बाल्ययुवादिशरीरभेदो निष्प्रमाणिक इति चेन्न । शरीराणां भेदेप्यवच्छेद्यात्मन ऐक्यात्प्रत्यभिज्ञोपपत्तिः । अत एव नाहं बालः किंतु युवेत्यादिप्रतीतिरुपपद्यते । नचपूर्वशरीरनाशकाभावः उत्तरोत्पादकस्यैव तन्नाशकत्वात् । न च तत्र ब्राह्मण्याद्यनुपपत्तिः । सर्गाद्यकालीनब्राह्मण्यवद्विश्वामित्रब्राह्मण्यवच्चोपपत्तेः । युवादिशरीरस्य बाल शरीरोपादानोपादेयत्वेन सर्वव्यवस्थानामुपपत्तेः । यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तद्द्रव्यं तद्द्रव्योपादानोपादेय-मितिव्याप्त्या बालादिशरीरनाशजन्ययुवादिशरीरे तदुपादानोपादेयत्वस्यसिद्धेः । परिमाणभेदेनापि तदाश्रयशरीरभेदस्याप्यावश्यकतया च बाल्ययुवादिशरीरभेदः सिद्धएव । नन्वेवमपि ध्वंसाप्रतियोगिदेव दत्ताहमनुभवविशेष्याः भौतिकातिरिक्तयज्ञदत्ताहमनुभवविशेष्यप्रतियोगिकानौपाधिकभेदवान्न, कार्य-कारणातिरिक्तत्वेसत्यहमनुभवविशेष्यत्वात् । यज्ञदत्तवदित्यनुमानेन जीवानांनिरुपाधिकभेदाभावः सिद्ध इति कथं भेदसाधनं संगच्छते । उक्तनिरुपाधिकभेदः घटादौ प्रसिद्धः । द्वैतिभिः पक्षेऽङ्गीकृतः तदभावः साध्यत इति बाधः संभवति अत्र सिद्धान्ते (अद्वैतमते) देहादेरप्यहमनुभवविशेष्यतया बाधस्यादत्तो ध्वंसाप्रतियोगीति पक्षविशेषणं देयं । यज्ञदत्तीयाहमनुभवविशेष्ये यज्ञदत्तेसिद्धसाधनता वारणाय देवदत्तेति घटेघटत्वमितिदेवदत्तीयानुभवविशेषे घटत्वे बाधवारणाय अहमनुभव इति तद्विषयस्य पक्षत्वे अहमनुभवप्रकारस्याहंत्वे बाधस्यादिति अनुभवविशेष्य इति यज्ञदत्तीयाहमनुभवविशेष्यतदीय-देहेन्द्रियादिभेदस्य पक्षे देवदत्तोऽस्तीति बाध इति साध्ये भौतिकातिरिक्तेति पक्षे देवदत्तीयाहमनु भवविशेष्य देवदत्तप्रतियोगिकभेदाभावस्य सिद्धतया सिद्धसाधनता स्यादिति यज्ञदत्तीयेति यज्ञदत्ती-यानुभवविशेष्यघटत्वादिभेदस्य पक्षे सत्वेन तदभावसाधने बाधः स्यादिति अहमनुभव इति यज्ञदत्तप्रति योगिकौपाधिकभेदस्य पक्षे सत्वेन बाधस्यादिति भेदेऽनौपाधिकत्वविशेषणं । शरीरेन्द्रियादौव्यभिचार वारणाय हेतौ कार्यकारणातिरिक्तत्वविशेषणं । घटत्वादौ तद्वारणाय अहमनुभवविशेष्यत्वनिवेशः । एवं चोक्तानुमाबाधः पूर्वोक्तानुमानस्येति चेन्न । देहादीनामहमनुभवविशेष्यत्वाभावात् ध्वंसाप्रतियोगीति विशेषण साध्ये भौतिकातिरिक्तत्वविशेषणं च व्यर्थं । किंचोक्तानुमाने यज्ञदत्तीयसुखाद्यभावानधिकरणत्वमुपाधिः भौतिकातिरिक्तेत्यादि साध्याधिकरणे यज्ञदत्ते तदीयसुखाद्यभावानधिकरणत्वसत्वेन साध्यव्यापकतायाः पक्षे साधनाव्यापकत्वेनास्योपाधित्वसंभवात् । न च यज्ञदत्तेपि तदीयशरीरानवच्छेदेन सुखाभाव सत्वेनसाध्याव्यापकता । यदवच्छेदेन साध्यं तदवच्छेदेनोपाधिरित्यङ्गीकृत्य यज्ञदत्ते तदीयशरीराव-च्छेदेनोक्तोपाधेः साध्यव्यापकत्वोपपादनेपि साध्यं यदवच्छेदेन यत्र तत्र सर्वत्रापि उपाधेः सत्ताया आवश्य कतया तदीयशरीरांतरावच्छेदेनोक्तसाध्यवति उपाधेरभावेन साध्याव्यापकतेति वाच्यं । आत्मनोऽणुत्वेता-वच्छेदकाभावेन सुखाद्यत्यंताभावस्य कदाप्यप्रसक्त्या साध्यव्यापकत्वोपपत्तेः । एवं "नाहंयज्ञदत्तः"

" नित्योनित्यानांचेतनश्चेतनानां एको बहूनां यो विदधाति कामानित्यादिप्रमाणबाधितं चोक्तानुमानमिति न तेन भेदानुमानबाधः । एवमात्मभेदमात्रे विमतआनन्ददुःखविरोधित्वव्याप्यधर्मेण सजातीय प्रतियोगिक (प्रतियोगि) स्वज्ञानाबाध्यभेदवान् दुःखविरोधित्वात् दुःखाभाववदित्यनुमानं नचाप्रयोजकता अन्योन्य सुखदुःखाद्यनुसन्धानविलोपप्रसङ्गरूपतर्कस्य विपक्षे बाधकस्य सत्वात् । न च स्वकर्णपुटपरिच्छिन्ननादोप लंभेपि भागान्तरवर्तिनादानुपलंभवत् एकस्यैवानुसन्धानानुसन्धानयोः संभव इति वाच्यं । आत्मभेदे हि कर्णपुटादीनां तत्तदीयत्वनियमो युज्यते । ऐकात्म्यवादे सर्वदेहानां स्वीयत्वेनोक्तनियमानुपपत्या स्वीयकर्णपुटद्वयपरिच्छिन्ननादोपलंभवत् सर्वदेहेषु दुःखाद्यनुसन्धानस्य दुर्वारतैव । न च कर्मभेदेन शरीरादिभेदः आत्मैक्ये कर्मभेदस्याप्यनियमात् शरीरभेदेन पुनः कर्मभेदेऽन्योन्याश्रयतैव । तदुक्तं सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता । तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः । एवं च विपक्षे बाधकतर्कस्य जागरूकतया नाप्रतियोजकता । एवं जडेशयोर्जडजीवयोर्भेदे ब्रह्म जीवो वा अनात्मप्रति-योगिकधर्मिज्ञानाबाध्यभेदवान् पदार्थत्वात् घटवत्यादिकं मानं । घटब्रह्मणोरैक्ये घटस्य सिध्यैव ब्रह्मण स्सिद्धत्वेन वेदान्तानां वैयर्थ्यं ब्रह्मणो जाड्यानित्यत्वाद्यापत्तिरित्यादिरूपस्य तर्कस्य विद्यमानत्वेन नाप्रयोजकता । तदभिहितं । जडस्यानन्दमयता जडं जन्मादिकारणम् । जडादज्ञाननाशस्ते दुर्घटं घटयेज्जडमिति । जडानामन्योन्यभेदे घटस्तत्वतः शुक्त्यभिन्नो न तज्जनकाजन्यत्वात् शुक्त्यारोपितरूप्यवत् । अनात्मा स्ववृत्तिधर्मानाधारज्ञानाबाध्यांतर्गणिकभेदवान् पदार्थत्वादात्मवदित्याद्यनुमा मानमिति भेदस्यानु-मेयता सुदृढैवेति ॥

एवं भेदेऽऽगमोपि प्रमाणं । " द्वा सुपर्णा सयुजा सखाया " " य आत्मनि तिष्ठन् " " नित्यो नित्यानां चेतनश्चेतनानां " " अजो ह्येको जुषमाणोऽनुशेते जहात्येनांभुक्तभोगामजोन्यः नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्भव । अन्यश्च परमो राजंस्तथान्यः पञ्चविंशकः । यथेश्वरश्च जीवश्च सत्यभेदौ परस्परं उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । नत्वेवाहं जातु नासं तत्वं नेमे जनाधिपाः । मत्तः परतरं नान्य त्किंचिदस्ति धनञ्जय । अविभक्तं विभक्तेषु । समानवेतौ सयुजौ सखायौ यदृच्छयैतौ कृतनीडौ च वृक्षे । एकस्तयोः स्वादति पिप्पलान्नमन्यो निरन्नोपि बलेन भूयान् । ॐ भेदव्यपदेशाच्चान्यः भेदव्यपदेशात् शारीरश्चोभयेपि हि भेदेनैनमधीयते । पृथगुपदेशात् ॐ इत्यादि श्रुतिस्मृतिसूत्रादीनि भेदसाधकानि । न चेमाः श्रुतयोऽनुवादिकानुविधायक इति वाच्यं । प्रत्यक्षेण यज्ञदत्तदेवदत्तभेदसिद्धावपि जीवत्वावच्छिन्न धर्मिकभेदाप्राप्त्या । नहिंस्यादित्यादिवदननुवादकत्वोपपत्तेः । वर्तमानमात्रवस्तुग्राहकप्रत्यक्षाप्राप्तकालत्रया बाध्यभेदप्रतिपादनेन विधायकत्वोपपत्तेः । यत्तन्नेत्यादिनिषेधार्थानुवादलिङ्गाभावेन विधेयांतरस्य श्रवणेन च निषेधायानुअवादकत्वासंभवात् । औपनिषदस्य ब्रह्मणः शास्त्रेतरेणाप्राप्तेस्तद्धर्मिकस्य तत्प्रतियोगिकस्य च भेदस्य शास्त्रनिरपेक्षप्रत्यक्षादिना प्राप्तेश्चानुवादकत्वायोगात् । ननु प्रतीतार्थेन श्रुतेस्तात्पर्यं कल्पनीयम् । यद्वाक्यजन्यप्रतीत्या यत्र मानाभावाधीनासत्वशङ्का निवर्तते तद्वाक्यस्य तत्र तात्पर्यं कल्पनीयम् । यत्परः शब्दः सशब्दार्थ इति न्यायात् । प्रतीत्वमात्रेण तात्पर्यकल्पने ग्रहंसमार्ष्टीत्यस्य ग्रहैकत्वे तात्पर्यप्रसङ्गात् । प्रत्यक्षादिप्रवृत्तेः प्राक् भेदस्याप्राप्ततया तत्र श्रुतेस्तात्पर्यमित्यपि न संभवति । उक्तरीत्या प्रमाणाभावादि-दमसदिति शङ्का येन निवर्तते तत्रप्रमेयं । श्रुत्यपेक्षितपदपदार्थव्युत्पत्तिप्रयोजकप्रत्यक्षानुमानयोस्तत्पूर्वं प्रवृत्तेरावश्यकतया भेदेप्येतयोः प्राक्प्रवृत्तिरावश्यकीति न तत्र श्रुतेस्तात्पर्यमिति चेदुच्यते ।

भवन्मतेऽहमर्थविशिष्ट एव भेदस्यानुभवेन निरुपाध्यचिदात्मनि तदप्राप्त्या तत्र श्रुतेस्तात्पर्यं संभवात् । श्रुत्यपेक्षया दुर्बलप्रत्यक्षादेस्तद्विषयभेदमिथ्यात्वाबधनाक्षमतया तत्प्रतिप्रसवाय भेदश्रुतेः प्रवृत्तेरावश्यकत्वात् । तत्वमसीत्यादेरनुवादकत्वपरिहराय यत्प्रामाणंयद्विषयमुपजीवन्नेव प्रवर्तते तस्य

तद्विषये तस्य तज्जातीयस्याननुवादकत्वस्याभ्युपेयत्वेन प्रकृतेप्यननुवादकत्वोपपत्तेः । न च भेदस्यौपाधिकता श्रुतितात्पर्यविषयत्वेन तस्य तात्विकत्वाभ्युपगमात् । अन्यथा श्रुतितात्पर्यसिद्धेः प्राक् तात्विकत्वासिध्या ब्रह्मणि श्रुतितात्पर्यासिद्धिप्रसङ्गात् । न च भेदस्य श्रुतिनिषिद्धत्वेन न तत्र तस्यास्तात्पर्यं ब्रह्मणोप्यलक्षणमित्यादिना निषिद्धत्वेन तत्रश्रुतेस्तात्पर्यं न स्यात् । तच्छ्रुतेरर्थांतरस्य वक्ष्यमाणत्वाच्च श्रुतेरननुवादकत्वोपपत्तेः । नन्वथापि पुमर्थसाधनत्वाभावान्न तत्र श्रुतेस्तात्पर्यं संभवति "तमेवं विदित्वे" त्यनेनात्ममात्रज्ञानस्य पुमर्थसाधनत्वावगमात् । न केवलमिष्टजनकता किंत्वनिष्टसाधनत्वं भेदज्ञानस्य । "उदरमन्तरं कुरुतेऽथ तस्य भयं भवति "मृत्योः समृत्युमाप्नोति य इह नानेवपश्यती" ति श्रुत्यावगम्यते। अथ येऽन्यथोऽतं विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति "अथयोन्यांदेवतामुपास्ते अन्योऽसावन्योहमस्मीति न स वेद यथापशु" रित्यादिना भेददर्शिनो निन्द्या भेदस्य निन्दितत्वेन न तत्र श्रुतितात्पर्यमितिचेदत्रब्रूमः । "पृथुगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । जुष्टं यदा पश्यत्यन्यमीशं । वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेऽन्यथा । जीवेशयोः सदा वैलक्षण्यं परं ज्ञात्वा मुच्यते बध्यतेऽन्यथा । भेदद्दष्ट्याभिमानेन निःसङ्गेनापिकर्मणा । कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभ । ससङ्गत्या पुनः काले काले नैश्वरमूर्तिना जातेगुणव्यतिकरे यथापूर्वं प्रजायते" इत्यादि श्रुतिस्मृत्यादिना जीवेशयोर्भेदज्ञानस्य पुमर्थसाधनत्वावगतेः। "उदरमन्तरंकुरुत" इत्यस्य मिथ्याभूतभेदज्ञानिनो भयप्रतिपादनपरत्वात् । "मृत्योःसमृत्युमाप्नोती" त्यस्यापि य इह नानेव अलीकमेव (अल्पमेव) भेदं पश्यति सः मृत्योर्मृत्युमाप्नोतीत्यर्थपरतया एतस्याः तत्परत्वमेवावगम्यते । वस्तुतस्त्वेतद्वाक्यद्वयं, ईश्वरे स्वगतस्वप्रतियोगिकभेदज्ञानिनिंदापरमेवेति नतद्भेदबाधनक्षमम् । "स एवेदं सर्वमहमेवेदं सर्वमात्मैवेदंसर्व" मिति सामानाधिकरण्यनिर्देशेन लब्धसर्वनियामकत्वादि अन्यथातद्विरुद्धाकारेण "ये विदुस्तेक्षय्यलोका भवन्ती" त्यर्थपरतया अथयेन्यथातोविदु" रित्यस्यापि न भेदबाधकता । "अथ योन्यांदेवतामुपासत " इत्यस्यापि योन्योजीवोऽन्यांविलक्षणां देवतां अन्योसौ परमात्माऽहमस्मीत्युपासते न स वेदयथापशुरित्यर्थकत्वेन जीवेशभेद निरासकता न संभवति । प्रत्युत तद्भेदज्ञानिनिन्दाद्वारा तद्भेदबाधकतैव । अथवा अन्योसावन्योहमस्मीत्यैवोपासनापर दैवतविषया कार्या । यस्तु अन्यां परदेवतायाभिन्नां देवतामुपास्ते न स वेदयथापशुरित्यन्यदेवोपासकनिंदापरतावगते न भेदबाधकता । तथाच "वासुदेवंपरित्यज्य योन्यंदेवमुपासते । तृषितोजाह्नवीतिरे कूपं खनति दुर्मति" रिति ब्राह्मणं । नचोक्तभेदः मिथ्याभूत एव सोपाधिकत्वादिति न तत्र तत्वावेदकश्रुतितात्पर्यमितिवाच्यं । "सत्यमेनमनुविश्वे मदंति राति देवस्य गृणतो मघोनः, सत्यः सो अस्य महिमा गृणेशवो यज्ञेषु विप्रराज्ये, सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मैवारुवण्यो मैवारुवण्यो मैवारुवण्यः" "आत्मा हि परमस्वतन्त्रः सर्ववित्सर्वशक्तिः परमसुखःपरमो जीवस्तु तद्वशोल्पज्ञोल्पशक्तिरार्तोल्पक" इत्यादिश्रुतिभ्यः तत्सत्यत्वावगमात् । ननु न मिथ्यात्वमसत्वं किंतु व्यावहारिकत्वं मन्मते हि त्रिविधं सत्वं पारमार्थिकव्यावहारिकप्रातिभासिकत्वभेदेन ।अबाध्यत्वं पारमार्थिकत्वं ब्रह्मज्ञानमात्रबाध्यत्वं व्यावहारिकत्वम् । ब्रह्मज्ञानेतरज्ञानबाध्यत्वं प्रातिभासिकत्वमिति भेदस्य व्यावहारिकसत्यत्वोपगमान्नोक्तश्रुतिविरोधः । एवं च न भवदभिमतसिद्धिरिति चेन्मावोचः । "व्यावहारिकतोक्तिस्तु सन्नाम्नच्छादनं परं अमंगलस्य वारस्य यथामङ्गलवार" तेति एतन्निरासायैव तत्वतो भेद इत्यभिहितं तदनुरोधेनाद्यपद्येपि वस्तुत इति भेदविशेषणं तस्यायमाशयः "यो वेद निहितं गुहायां परमे व्योमन् । सह ब्रह्मणा विपश्चिता "। "एतमानन्दमयमात्मानमुपसङ्क्रम्य । एतत्सामगायन्नास्ते" "ऋचांत्वः पोषमास्ते पुपुष्वान्गायत्रं त्वोगायति शक्करीषु ब्रह्मात्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः" । यथोदके शुद्धे शुद्धमसिक्तं तादृगेव भवति तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति" ईशामाश्रित्य तिष्ठन्ति मुक्ताः

संसारसागरात् यथेष्टभोगभोक्तारो ब्रह्मान्ता उत्तरोत्तरं “इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः सर्गेपि नोपजायन्ते प्रलये न व्यथंति च” ॐ जगद्व्यापारवर्जं ॐ, ॐ प्रकरणादसन्निहितत्वाच्चेति श्रुतिस्मृति सूत्रादिभिः मोक्षेपि भेदः श्रूयते। मोक्षे मायातीते मायामयत्वरूपव्यावाहारिकताया अयोगेन भेदव्यावहारिकतोक्त्ययोगात्। भेदस्य व्यावहारिकत्वे तद्बोधक वेदाप्रामाण्यापत्तेः। नचास्य भेदप्रतिपादकश्रुतिविरोधेन तदिष्टमिति वाच्यम्। तच्छ्रुतेर्लक्षण्याऽखण्डभेदमात्रपरत्वेन भेदविरोधित्वाभावात्। तदुक्तं। यदि प्रत्यक्ष प्राप्तभेदावगाहितया तच्छ्रुतिर्दुर्बला, तर्हि प्रत्यक्षविरुद्धार्थावगाहितया ऐक्यश्रुतिरपि दुर्बला स्यात् मानांतरप्राप्तिवत्तद्विरोधस्यापि दौर्बल्यहेतुत्वात्। यदि च प्रत्यक्षाविरुद्धैक्यपरा श्रुतिः, तर्हि प्रत्यक्षाप्राप्तकालत्रयाबाध्यभेदपरैवेति सापि प्रबलैव। निषेधवाक्यत्वादैक्यश्रुतिः प्रबलेति चेत् भेदवाक्यस्यैक्य निषेधरूपत्वेन प्राबल्यं किं न स्यात्। किंच निरवकाशभेदश्रुतिः सावकाशैक्यश्रुतितः प्रबला। तदुक्तं भाष्यकारैः-“स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि। सादृश्येचैक्यवाक्सम्यक् सावकाशायथेष्टतः अवकाशोज्झिताभेदश्रुतिर्नातिबलाकथ” मिति। ननु जीवात्मा नाणुः। सर्वशरीरव्यापिसुखदुःखाद्यनुपलंभ प्रसङ्गात् नापि मध्यमपरिमाणवान् अनित्यत्वापत्तेः अतो विभुरित्यभ्युपेयः। ततश्च तस्मिन्नहमिहास्मीति प्रतीतौ भासमानपरिच्छेदस्यास्वाभाविकत्वेन तद्विशिष्टात्मनः सोपाधिकतया तद्गतोपि भेदः औपाधिक एवेति व्यावहारिक एवेति चेन्न। जीवपरिच्छिन्नत्वस्यौपाधिकत्वासिद्धेः। जीवस्याणुत्वेपि सङ्कोच विकासात्मकसावयवांतःकरणद्वारकसंबन्धमादाय विरुद्धप्रदेशावच्छिन्नसुखदुःखाद्युपलम्भोपपत्तेः। न च जीवस्याणुत्वे नित्यःसर्वगतःस्थाणुरित्युक्तिविरोधः। जीवराशेःसर्वगतत्वेन (नित्यः) तदुपपत्तेः। “नित्ये सर्वगते विष्णावणुजीवोव्यवस्थित” इति श्रुत्यनुसारेण सर्वगतस्थश्चासावणुश्चेत्यर्थपरत्वाभ्युपगमेनाविरोधात्। न च तथापि “यथाह्ययं ज्योतिरात्माविवस्वानपोभिन्नाबहुधैकोनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मा। कार्योपाधिरयंजीवः कारणोपाधिरीश्वरः। कार्यकारणताभिन्नो पूर्णबोधोवशिष्यत” इत्यादिभिः भेदस्यौपाधिकत्वसिद्धिरिति वाच्यम्। यथाह्ययमिति श्रुतेर्ब्रह्मणि स्वभेदस्यौपाधिकत्वपरतया जीवपरभेदौपाधिकपरत्वासिद्धेः। अतएव तत्र देवात्मभूतात्मशब्दाः परम मुख्यया वृत्या परब्रह्मवाचकाः श्रूयन्ते। कार्योपाधिरयंजीव इत्यस्यापि जीवत्वमविद्याकार्य अन्तःकरणो पाधिकं ईश्वरत्वं, कारणरूपाविद्योपाधिकत्वं उपाधिविनिर्मोकेऽपरिच्छिन्नात्ममात्रावशेष इत्यर्थपरता न संभवति। अनादेर्जीवभावस्य साद्यन्तः करणोपाधिकत्वायोगात्। किंचांतःकरणसूक्ष्मावस्था किमविद्यारूपा अतिरिक्ता वा। नाद्यः, जीवेशयोरेकोपाधिकत्वेन भेदानुपपत्तेः। न द्वितीयः, षडस्माकमनादय इति त्वदभ्युपगमविरोधात्। अतो नैतेनापि भेदव्यावहारिकतासिद्धिः। ननु मुक्तौ भेदसत्वेन न व्यावहारिकता तस्येति यदुक्तं तदसंगतम्। “यत्र त्वस्य सर्वमात्मैवाभूत्”। “विभेदजनके ज्ञाने नाशमात्यंतिकङ्गते आत्मनोब्रह्मणोभेदमसन्तकःकरिष्यति। आविमुक्तेस्तु भेदःस्याज्जीवस्य परमस्य च। ततः परं न भेदोस्ति भेदहेतोरभावत” इति श्रुतिस्मृत्यादिना मुक्तौ भेदस्य निषेधादिति चेन्न। पूर्वोक्त श्रुतिस्मृतित्यादिभि र्भेदस्य मुक्तौ सिद्धेः। “यत्रत्वस्यसर्वमात्मैवाभूत्तत्केन कं पश्ये” दिति श्रुतिस्तु अद्वितीयात्ममात्रावशेषो मुक्तिरिति मतं निराकर्तुमेव प्रवृत्तेति न मुक्तौ भेदबाधिका। तथाहि-स यथासैन्धवखिल्य इति पूर्व वाक्येन स्वमतमुक्त्वा “अविनाशीवारेयमात्मनुच्छित्ति धर्मे” ति वाक्यघटकाविनाशीति पदेनाऽत्मनाशो मोक्ष इति बौद्धमतं अनुच्छित्तिधर्मेत्यनेनाशेषगुणनाशोमोक्ष इति मतं च निरस्य अद्वितीय चिन्मात्रावशेषो मुक्तिरिति मतेऽनिष्टप्रसंजनार्थम्। “यत्र हि द्वैतमिव भवति तदितर इतरं पश्यती” त्यादिना प्रसङ्गाङ्ग व्यतिरेकव्याप्तिं प्रदर्श्य यत्रत्वेत्यादिना यत्र येषां मतेत्वात्ममात्रावशेषः तत् तर्हि केन कं पश्येत् न केनापि किंचिदिति इष्टस्य रूपादेरीश्वरस्य स्वस्याज्ञानादन्धादेरिव दुःखं मोक्षे स्यादित्यनिष्टमापादितम्। न च

सैन्धवखिल्य इत्यादिवाक्यं चतुर्थे अविनाशीत्यादिकंतु षष्ट इति बहुवाक्यान्तरितत्वेन उक्तेति क्त्वा-प्रत्ययः कथमुपपद्यत इति वाच्यम्। विरोधिप्रमेयानन्तरितत्वेन पूर्वकलार्थकक्त्वाप्रत्ययस्योपपत्तेः। न च मोक्षे रूपादि दिदृक्षादेरसत्वेन न दुःखप्रसंग इति वाच्यम्। मुक्तस्य सत्यकामत्वादि श्रुत्या इच्छाद्यवश्यं भावात् रूपाद्यज्ञानस्य दुःखसाधनत्वं च भारते प्रतिपादितम्। "मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवे" दिति। न च श्रुतेरस्या आत्ममात्रावशेषेतात्पर्यं न स्यात्तदा यत्र हि द्वैतमिव भवतीत्यत्रेव शब्दो निष्प्रयोजन इति वाच्यम्। यत्रद्वैतं तत्र ज्ञानमित्युक्ते द्वैतस्य परमतरीत्या मिथ्यात्वेन सर्वस्य तदधिकरणत्वाभावेनाप्रसिद्धि स्यादिवेत्युक्ते मिथ्याभूतमेव द्वैतं लभ्यत इति न दोषः। पररीत्यैवापादनात् स्वमतेन तु द्वैतस्य भिन्न प्रपंचस्य ब्रह्मापेक्षयाल्पत्वेनेव शब्दोपपत्तिः। इव शब्दस्याल्पार्थकत्वं इवोपमायां स्वल्पार्थ इत्यमरेण "उपमार्थे तथाल्पार्थे इव शब्दः प्रयुज्यत" इति वाचनादिभिश्च सिद्धमिति नानया मुक्तौ भेदो बाध्यते। विभेदजनके ज्ञान इत्यस्य "विभेदः भेदविरोध्यभेदः तज्जनके तज्ज्ञानेऽऽत्यंतिकं नाशं गते सति जीवपरयोरसंतअभेदं कः करिष्यतीत्यर्थपरत्वेन आमुक्तेर्भेद एव स्यादित्यत्रापि भेदशब्दो न स्वरूपभेदपरः, किंतु बुद्धिभेदपरः तथात्र मुक्तिपर्यन्तं जीवेश्वरयोर्विरुद्धविषयकमतित्वं मुक्तस्य तु रागद्वेषादेरभावे तत्वसाक्षात्कारान्मति भेदविरुद्धमति नास्तीत्यर्थपरत्वेन तयोरपि मुक्तौ भेदबाधकत्वाभावेन तत्रत्योर्भेदो न व्यावहारिकः। किंच यदि भेदस्य बाधः तर्हि भेदस्यैवाभावेन व्यावहारिकतया किं प्रयोजनं? यदि न बाधः तर्हि अबाधित भेदांगीकारेण सदद्वैतभंगप्रसंगेन शास्त्रनास्तितैवेति न भेदव्यावहारिकतोक्तिः संघटते तदुक्तं "व्याव-हारिकतोक्तिस्तु स्पर्धते पदमञ्जरीम्। बाधश्चेदस्ति तद्व्यर्थं नास्तितैवेति किं तया बाधश्चेन्नास्तितेशास्त्र-नास्तितैवेति किं तये" ति। अत उक्तदूषणगणग्रासात्प्रमाणाभावाच्च न भेदो व्यावहारिकः किंतु पारमार्थिक एवेति निष्प्रत्यूहम्। ननु "तत्वमसि; नेह नानास्ति किंचन, अहं ब्रह्मामी" त्यादिश्रुतीनामर्थांतरपरत्वाभावेन कथमैक्यश्रुतिः सावकाशा? तथाहि। तत्वमसीति वाक्ये तत्त्व पदवाच्ययोः सार्वज्ञासार्वज्ञविशिष्टयो-रैक्यासंभवेपि "सोयं देवदत्त" इत्यादिप्रत्यभिज्ञावद्विरुद्धांशत्यागेन पदद्वयलक्षितयोरैक्यं संभवति। तदुक्तं "तत्वमस्यादिवाक्यश्च तादात्म्याप्रतिपादने लक्ष्यौ तत्त्वं पदार्थौ द्वावुपादाय प्रवर्तते" इति तद्विरोधाद्भेद-श्रुतिर्दुर्बलेति चेन्न। अत्र विरुद्धाकारस्त्यागः किमविवक्षामात्रेण अनित्यत्वेन मिथ्यात्वेन वा नाद्यः। अविवक्षामात्रेण विरुद्धाकारस्यानपायात्। न द्वितीयः विरुद्धाकारस्यानित्यत्वेन तन्नाशानंतरमेव तादात्म्यमिति तत्वं भविष्यसीति स्यात्। न तृतीयः निर्दोषश्रुतिसाक्षिसिद्धयो विरुद्धधर्मयोर्मिथ्यात्वायोगात्। किंच प्रत्यक्षसिद्धजीवमनूद्य तस्य ब्रह्मत्वं वा श्रुतिसिद्धब्रह्मानूद्य तस्य जीवत्वं वा उभयानुवादेनैक्यं वा श्रुत्या विधेयं। प्रत्यक्षेण जीवस्य ब्रह्मभिन्नत्वेनानुभूयमानत्वेन श्रुत्या च सर्वज्ञत्वादिविशिष्टब्रह्मावगाहिन्या तद्धीनजीवाद्भिन्नत्वेन ब्रह्मणोऽग्रहणात्सर्वथोपजीव्यविरोधेनैक्य श्रुतिरप्रमाणमेव। उपजीव्योपजीवकयो रुपजीव्यस्यैवप्राबल्यात्। तदुक्तं "सार्वज्ञादिगुणं जीवाद्भिन्नं ज्ञापयतिश्रुतिः। ईशंतामुपजीव्यैव वर्तते ह्यैक्यवादिनी। उपजीव्या विरोधेन नास्यास्तन्मानता भवे" दिति। "शास्त्रागम्यपरेशानाद्भेदस्वात्मनईयते। अनुभूतिविरोधेन कथमेकत्वमुच्यत" इति च। किंच भवन्मते पदद्वयलक्षणा ततो वरं मद्रीत्याऽन्यतरपदे लक्षणा। तथाहि "वसन्तादिभ्यष्ठक्" इत्यत्र साहचर्यात्ताच्छब्द्यं भविष्यति वसन्तसहचरितमध्ययनं वसन्त इति महाभाष्यवचनानुसारेण तत्साहचर्यात्तदिति व्यपदेशः जीवस्य ब्रह्मसाहचर्यं च द्वासुपर्णेति श्रुत्या सिद्धम्। "समर्थः पदविधि" रित्यत्यसमर्थपदाश्रितत्वात्पदविधिरूपचारेण समर्थ इति पदेनोच्यते "इग्यणः संप्रसारण" मित्यत्र यथाकाकाज्जातः काकः श्येनाज्जातः श्येनः एवं संप्रसारणाज्जातो वर्णः संप्रसारण" मिति महाभाष्यवचनेन तदाश्रितत्व तज्जन्यत्वाभ्यां तदिति व्यपदेशो जीवे तदाश्रितत्वादिकं "सर्वाः प्रजाः सदायतने" "सन्मूलाः सोम्येमाः सर्वाः प्रजा" इति श्रुतिसिद्धम्। तज्जन्ये तदिति व्यपदेशः "ब्राह्मणोस्यमुखमासी" दिति श्रुतावपि प्रसिद्धः। तथा च स्मृतिः "ब्राह्मणोमुखमित्येव मुखा-

ज्ञातत्वंहेतुतः ।यथावदच्छ्रुतिस्तद्धजीवो ब्रह्मेतिबाग्भवेदिति" ।ॐ तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॐ इति सूत्रे एतदेव प्रतिपादितम् । एवं यथाशाखासदेशे चन्द्रे शाखाशब्दवत् जीवान्तर्यामितया जीवसदेशे प्रस्तरकार्यकर्तरि 'यजमानः प्रस्तर' इति यजमानशब्दवत्सर्वकर्तरि च ब्रह्मणि त्वमिति व्यपदेशोयुज्यते । ब्रह्मणःजीवान्तर्यामित्वं सर्वकर्तृत्वं "य आत्मानितिष्ठन् सहि सर्वस्य कर्ता" इत्यादिश्रुतिसिद्धम् । एवं चैक पदलक्षणयैवोपपत्तौ पदद्वय लक्षणाऽसङ्गतेः।अन्तर्यामिण्येव शब्दानां मुख्यतया व्यवस्थिततया ब्रह्मणि त्वमित्यस्य मुख्यवृत्तेः संभवेन मुख्यार्थात्यागाच्च । किंच "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्वमसी" ति श्रुतौ तच्छब्देनात्मपरामर्शो युक्तः। नपुंसकलिङ्गत्वात्। किंतु ऐतदात्म्यं तस्य च एष चासावात्माचैतदात्मा तस्येदमिति व्युत्पत्या एतदीयवस्त्वित्यर्थः । तथा च त्वमेतदीयोसीत्यर्थ परतया तस्या ऐक्यपरत्वायोगात् । एवं पदद्वयलक्षणयाप्यैक्यं न बोदयितुं शक्यं घटो घट इति वाक्याद्बोधाजननेन । तद्धर्मावच्छिन्नाभेध संभन्धावच्छिन्न प्रकारतानिरूपित विशेष्यतावच्छेदकता संबन्धेन शाब्दं प्रति तद्धर्मभेदस्य कारणतायां वक्तव्यतया अत्र प्रकारविशेष्यतावच्छेदकयोरैक्याद्बोधः संभवति। एवं चैतादृश दोषकलङ्कितं नैक्यबोधन-क्षमं तत्वमसीतियाक्यम्। एव "महंब्रह्मास्मी"त्येतदपि नैक्यपरम् उक्तरीत्यैकपदलक्षणयाब्रह्मसाहचर्याज्जीवे ब्रह्मेति व्यपदेशस्य सादेश्यादिना ब्रह्मण्यहमिति व्यपदेशस्य वोपपत्तौ पदद्वयलक्षणाया अनौचित्या, किंच "सर्वांतर्यामिको विष्णुः सर्वनाम्नाभिधीयते । एषोहंत्वमसौ चेति ननु सर्वस्वरूपत" इत्यादिप्रमाणानु-रोधेन "अहं मनुरभवं सूर्यश्च" त्यन्तर्यामिण्यहं शब्दप्रयोगादन्तर्यामिण्येव सशब्दो मुख्य इति न मुख्यार्थ त्यागः । "स योहवै तत्परमं ब्रह्म वेद ब्रह्मैव भवती" त्यस्या अपि नैक्यपरता । तत्र द्वितीयब्रह्मशब्दो जीवपरः "बृहजाति जीकमलासन शब्दराशिष्वि" ति वचनात् "ब्रह्माणि जीवाः सर्वेपि" ति स्मृतेश्च। तथाच यः परमं ब्रह्मवेद सः जीव एव भवति न तु परं ब्रह्मेत्यर्थः।अतएवाद्यब्रह्मशब्दे परमत्वं विशेषितम्। किंच "संपूज्य ब्राह्मणंभक्त्या शूद्रोपि ब्राह्मणो भवे" दितिवत् जीवः ब्रह्म भवति । बृंहितत्वरूपब्रह्मैक्रान्तो भवतीत्यर्थः । एवं च नैतस्याप्यैक्यपरता ।ब्रह्मैव सन्ब्रह्माप्येतीत्यस्य जीव एव सन्ब्रह्म प्राप्नोतीत्यर्थपरत्वात् "कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वएकीभवन्ती" त्यत्रैकीभावः न स्वरूपैक्यम् किंतु स्थानैक्यं मत्यैक्यं सादृश्यं वा "अविरोधश्च सादृश्य मेकदेशस्थितिस्तथा । एकीभावस्त्रीधा प्रोक्तो नैकीभावः स्वरूपत" इति वचनात् । "एकीभूता नृपाः सर्वे ववृषुः पाण्डवं शरैः" ।"अस्मिन्ग्रामे महाजना एकीभूता कीटो भ्रमरेणैकीभूत" इत्यादिप्रयोगात्। किंचक्यपक्षेऽभूततद्भावार्थकच्विप्रत्ययस्या योगात् ऐक्यस्य प्रागेव सिद्धत्वात् । ततश्च नैतासामैक्यपरता । एवमेवापातत ऐक्यपरतया प्रतीयमानानां श्रुतिवचसामन्यार्थपरत्व संभवेन भेदेऽऽगमोपि प्रमाणम् । एवं च भेदस्वरूपस्य निर्वचन संभवेन भेदस्य प्रत्यक्षादिप्रमाणत्रय प्रमि-तत्वेन पारमार्थिकत्वेन च "प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्न" मिति स्तवनं साध्वेवेति शम् ॥

श्रीमत्कृष्णनृपेन्द्रसूरिसमितौ संमानितौ कोविदौ द्वैते न्यायनये रघूद्वहमणि*श्रीयादवेशाभिधौ† ॥
तच्छात्रेण च वेङ्कटेशविदुषाह्यध्यापकेनालि खितैन्मन्त्रगृहे गुरोः करुणया गीर्वाणविद्यालये ॥

* गुञ्जाळु राघवेन्द्राचार्याः
मत्तातपादाः गुरवः

† धा. कृष्णमूर्त्याचार्याः
मद्गुरुवरेण्याः

॥ श्रीकृष्णार्पणमस्तु ॥

# ॥ जीवगणाः हरेरनुचराः ॥

म ॥ शा ॥ प्र ॥ वे ॥ वेदान्तविचक्षणाः
कट्टे. गुरुराजाचार्याः कोप्पळम्



श्रीलक्ष्म वक्षसे रूक्ष नखशिक्षित रक्षसे ।
स्वपक्ष रक्षादक्षाय नृहर्यक्षाय ते नमः ॥

नुम स्सत्यवती सूनुं यत्प्रसादाच्छियं धियम् ।
कीटोपि निश्चलां प्राप लोक कौतुक कारिणीम् ॥

चिन्तेनायुक्तमर्थं कलयति सहसा नाभिधत्ते न सद्भिः
साकं मीमांसते वा नलिखति वचसोद्घाटयत्याशयं स्वम् ।
उक्तं नो वक्ति भूयः क्वचिदपि लिखितं नैव निर्मोष्टि तस्मा-
दस्माभि स्सत्प्रबंध प्रणयन विषये स्तूयते राघवेन्द्रः ॥

श्रीमत्परमहंसेत्याद्यनेक बिरुदावलि भूषण भूषितानां श्रीमद्ब्रह्मादि करकमलार्चित श्रीमन्मूलराम पदपंकज चञ्चरीकायमान मानसानां श्रीमद्वैष्णव सिद्धान्त प्रतिष्ठापनभर सम्भृत सद्यशश्चन्द्रमण्डित दिङ्मण्डलानां श्री श्री १०८ श्रीमत्सुयमीन्द्रतीर्थ श्रीमच्चरणानां श्रीमद्वैतवेदान्तविद्यासाम्राज्य परिपालनाधिपत्य समागम समासादित श्रीमत्सुशीलेन्द्रतीर्थपूज्यपाद संस्थापित श्रीमत्समीर समय संवर्धिनीसभा संपोषणेन तदर्थं समागत विद्वद्विद्यार्थि विद्यानुगुण्येन दीयमान संभावना समुदितैः सर्वैरपि श्रीमच्छ्रीपादानां श्रीसंस्थान साम्राज्याधिगम द्वादशवर्षीय पट्टाभिषेक महोत्सवे तत्तत्सिद्धान्त पालकानां तत्तत्सिद्धान्त तत्वसंपोषक गीर्भिरेव सम्मोदातिशय इति 'श्रीमन्मध्वमते' इति पद्योक्त क्रमानुसारि तत्सत्तत्वावबोधक सल्लेखन रूपोपायनमर्पणीयमिति श्रीपादपूर्वाश्रमपुत्रैः वेदान्तशिरोमणि कवितिलकादि बिरुदाङ्कितैः श्री राजा गुरुराजाचार्यैः स्सर्वे विबुधाः प्रबोधिताः ॥

'श्रीमन्मध्वमते' इति महामहिमोपेत पद्योक्त प्रमेयेषु तत्तदंश लेखकैः स्व स्व लेख्यांशाः सम्यगुपपादिता भवेयुरेव । मम 'जीवगणाहरेरनुचारा' इत्यंशलेखन प्रेरकाः श्री श्रीपादपुत्राः श्री राजा गुरुराजाचार्याः मयि परांकृपामाविश्चक्रु र्यतः चिरन्तनसमय समधीत सच्छास्त्र विमर्शनादरण दूरीकरण क्षमया सुवर्णमुद्रा संगुणितया सुवर्णतन्तुमय्या स्वामोघ कृपया मां समबध्नन् श्री श्री १०८ श्रीमत्सुयमीन्द्रतीर्थ श्रीमच्चरण गुरुसार्वभौमाः । तथापि सच्छास्त्र विमर्शसन्मार्गालसगतिं मां सप्रेम भर्त्सनपुरस्सर स्वप्रेरणा कशया प्रोद्धूय एतल्लेखनोत्सुक्येन सच्छास्त्र विमर्शमार्गजंघालुं चक्रुरिति तान्सानन्दमभिनंद्य-

श्रीमदानन्दतीर्थीय तीर्थमालोड्यशक्तितः ।
लिख्यते लेखनीयांशाः श्रीगुरोः कृपया मया ॥ इति ॥

॥ जीवगणा हरेनुचरा इति मूलावतरणिका ॥

तत्वतो भेद इत्युक्त भेदपञ्चक घटक जीवेश्वर भेदः सुतरामनुपपन्नः जीवेशयो र्लक्षणया अभेद बाधक 'तत्वमसी' ति श्रुतेरस्या श्चोपक्रमादि षड् विध तात्पर्य लिङ्गोपेतत्वेन प्राबल्यात् । तद्विरोधेन 'द्वासुपर्णे' त्यादि भेद श्रुतिरप्रमाणम् । अन्यथा ऐक्यश्रुते र्निर्विषयत्वं स्यादिति पूर्वपक्षे 'ॐ पृथगुपदेशात् ॐ' इति सूत्रोक्तादिशा भिन्नोचिन्त्यः 'परमो जीव संघापूर्णः परो जीवसंघोद्यपूर्णः, आत्माहि परमः स्वतन्त्रोधिकगुणो जीवोल्पशक्तिरस्वतन्त्रोवर' इत्यादि श्रुते र्भेदमतरा अनुपपद्यमान विरुद्ध धर्माधिकरणत्वरूप युक्त्युपेतत्वेन 'शास्त्रगम्य परेशानाद्भेदः स्वात्मन ईर्यते । अनुभूति विरोधेन कथमेकत्वमुच्यत' इति अनुव्याख्यानोक्त दिशा उपजीव्यत्वेन च प्राबल्यात्तद्विरोधेनचानुभव विरोधेन च 'तत्वमसी' ति श्रुति र्न जीवब्रह्मैक्य बोधिका किंतु पदद्वय लक्षणापेक्षया तदिति एकपदमात्रे लक्षणापेक्षया गौण्या ज्यायस्त्वेन गौण्यावृत्या तत्सदृश ज्ञानानन्दादि गुणवत्त्वेन त त्सदृशस्त्वमसीति सावकाशा अतो न तया विरोधो भेदागमस्य ॥

उपक्रमादे र्मानान्तराविरुद्ध एव तात्पर्यगमकत्वम् । ऐक्य वाक्यस्योपक्रमादि विरोधः 'तत्वमसी' ति वाक्यस्य गौणार्थं हित्वा 'सत्पसु प्रथमे' ति व्याकरण नियमानुसारेण वा अतत्वमसीति पदच्छेदाद्यनेक प्रकारेण वा भेदाविरुद्धा अनेकार्था ग्रन्थकारैरेवोक्ताः । ग्रन्थगौरव भया न्नात्र प्रपञ्चिताः । अतो विरोधाभावाज्जीवा ईश्वर भिन्ना एवेति भेदोपपादनार्थं भेदमनन्तरानुपपद्यमानामुख्यकर्तृत्व मुख्य कर्तृत्वरूप विरुद्धधर्माधिकरणत्वम् जीवेश्वरयो र्वक्तुं 'जीवगणा हरेरनुचरा' इति वाक्यं प्रवृत्तम् ॥

अत्रोक्त जीवानाममुख्य कर्तृत्वेन न केवलं जीवानामीशाद्भेदः; अपितु जडादपि । तथाहि—जडस्येच्छापूर्वक कर्तृत्वाभावात् । जीवानां च स्वेच्छापूर्वक कृतिमत्वरूप कर्तृत्वस्य सत्वा ज्जडाद्भेदः परस्परं जीवभेदोप्यनेन सिध्यति । तथाहि—ज्ञानेच्छा प्रयत्न पूर्वक कृतिमत्वरूप कर्तृत्वोक्तया कृतिप्रयोजकेच्छाज्ञानादृष्टानां भेदस्य 'ॐ अदृष्टानियमा' दिति सूत्रोक्तरीत्या सिद्धत्वात् । सूत्रार्थस्तु :—जीवानां भगवत्प्रतिबिम्बत्वाद्बिम्बस्य भगवतो एकत्वात्प्रतिबिम्बानां मिथो वैचित्र्यं मास्तु, इत्याशंका परिहाराय प्रतिबिम्बत्वमभ्युपगम्य वैचित्र्ये कारणान्तरमाह सूत्रकारः अनादि विद्याकर्मादि वैचित्र्याद्वैचित्र्यम् । न वैचित्र्यान्यथानुपपत्या जीवानां भगवत्प्रतिबिम्बत्वाभावो वाच्यः । अशेष जीवानां भगवत्प्रतिबिम्बत्वेऽपि विद्याद्यदृष्ट वैचित्र्येण वैचित्र्यस्योपपत्तेः । एवं परस्परं सर्वजीवानामनाद्यदृष्ट विद्यादि भेदाद्भेद इति सूचितः ॥

यथा जीवेश्वरयो र्जीवानां च परस्परं जड जड जीवयोश्च विरुद्धधर्माधिकरणत्वेन भेदः, तथा जलानलादि जडानामपि स्पन्दन तोषण दहन शोषणादि विरुद्ध धर्मवत्वेन परस्परं जड जड भेदोपपादनीयः, एवं जीवगणा हरेरनुचरा इत्यंशस्य पूर्वोक्त पञ्च भेदोपपादकत्वं सिद्धम् ॥

अनुचरा इति पदस्वारस्येन हरीच्छाधीन स्वेच्छापूर्वक कृतिमत्वरूप कर्तृत्ववन्तः जीवा इत्यर्थः । अतः 'अनुर्लक्षणे' ति सूत्रोक्त कर्मप्रवचनीय संज्ञाया अप्रसरात् हरेरिति षष्ठी साध्वी । हरीच्छाधीन स्वेच्छाधीन कृतिमत्वरूपं अमुख्यं कर्तृत्वं जीवानां दत्तस्वातन्त्र्यरूपं सकल सच्छास्त्रसिद्धं सर्वमुमुक्षुरपि प्रथममवश्यं ज्ञेयं प्रमेयमिति सकल सत्सिद्धान्त प्रमेयसार संग्राहकपद्ये अस्वतन्त्रा इत्यनुक्त्वानुचरा इति पदं सत्सिद्धान्त स्थापक शिरोमणिभिः, पदवाक्य प्रमाण पारावार पारङ्गतैः श्रीव्यासतीर्थ श्रीमच्चरणैः प्रायोजि । अनेनेवं ज्ञायते अस्वतन्त्रा इत्युक्त्वा अस्वतन्त्रतत्वरूप धर्मेण जीवानामीश्वराद्भेदोपपादने जीवानां जडवैलक्षण्यं झटिति न ज्ञायेत । जीवानामस्वतन्त्रत्वेन जडसाम्ये विधिबद्धत्वं

कर्मफलभागित्वं च न स्यात्, अतो जडवैलक्षण्यस्य स्पष्टबोधकेन निरुक्तकर्तृत्वाख्य दत्तस्वातन्त्र्य बोधकानुचरशब्देन जीवानामिच्छपूर्वक कृतिमत्वेन जडापेक्षयाऽधिक्यं स्वेच्छपूर्वक कृतिमत्वा त्कर्मफल भोक्तृत्वं विधिबद्धत्वं च स्वेच्छापूर्वक कृतिमत्वरूप कर्तृत्वस्यापि भगवदधीनत्वेनामुख्यत्वं चेत्यादि सर्वप्रमेयं संगृह्योक्तमिति ॥

अत्रायं विचारः। जीवानां कर्तृत्वमेव नास्ति। अतः निरुक्त कर्तृत्व कथनमसङ्गतम्। तथाहि– 'जीवा न कर्तारः सहि सर्वस्य कर्ता'। 'नान्यः कर्ता न ऋते त्वत्क्रियते' इत्यादि ईश्वरमात्र कर्तृत्वबोधक श्रुतिविरोधात्। 'यत्कर्म कुरुते तदभिसंबध्यत' इति जीवकर्तृत्वबोधक श्रुत्यपेक्षया महदादि कर्तृरीश्वरस्यैव कर्तृत्वाङ्गीकारे लाघवमिति लाघव सहकृतत्वेन ईश्वरकर्तृत्वबोधकश्रुतेः प्राबल्यात्। किंच क्रीयास्वातन्त्र्यं हि कर्तृत्वं 'स्वतन्त्रः कर्ते' ति पाणिनि स्मरणात्। नहि स्वातन्त्र्यं जीवस्य सम्भवति। तच्चिकीर्षोस्तत्कार्यासिद्धेः। अनिच्छतोपि देहहानेरित्यादि युक्त्यनुगृहीतेन नाहं स्वतन्त्र इति साक्षिणा स्वातन्त्र्याभावस्यैव निश्चितत्वात्। 'ॐ इतरव्यपदेशाद्धिताकरणादि दोषप्रसक्तिः। न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभु' रित्यादिभिः स्पष्ट जीव कर्तृतायाः निषेधात्॥

किंच जीवेङ्गीक्रियमाणं कर्तृत्वं स्वतन्त्रमुत परतन्त्रम्?। नाद्यः, 'नान्यः कर्ता, न च स्वातन्त्र्य-मन्यग' मित्यादि श्रुति विरोधात्। हिताक्रियादि दोषप्रसक्तेश्च कर्तृत्वं परतन्त्रमिति द्वितीयपक्षोपि न युक्तः। कर्तृत्व शक्तेः स्वाधीनत्वेपि तक्षकस्य प्रासादकारयितृपुमधीनत्ववत् वेत्त वेतन दानादिना बहिः प्रेर्यमाणत्वमात्रं दारुयोषावदीश्वराधीन चेष्टाकत्वादि रूपम्। बहिः प्रेर्यमाणत्व रूपाद्यपक्षो न युक्तः। 'य आत्मानमन्तरोयमयती' त्यादि श्रुति विरोधात्। दारुयोषावदीश्वराधीन चेष्टाकत्वरूप द्वितीय पक्षोपि न समञ्जसः। तथात्वे दारु योषावज्जड तुल्यत्वेन विध्यविषयत्वापत्तेः कर्मफलसम्बन्धश्च न स्यात्। अतो न कर्तार एव जीवा इति पूर्वपक्षः॥

सिद्धान्तस्तु, प्रागुदाहृत श्रुतिभिरीश्वरः कर्ता, 'कर्ता विज्ञानात्मा पुरुषः यत्कर्मकुरुते तदभि-संबध्यते। जक्षन् क्रीडन् रममाणः आत्मानमेव लोकमुपासीत' इत्यादि श्रुतिभिः मोक्षाद्यर्थं साधनाद्युपादान प्रतीति लब्धेनाहं करोमीति साक्षिप्रत्यक्षेण जीवः कर्ता कर्मफलभोक्तृत्वादित्याद्यनु-मानेन च जीवोपि कर्ता नचात्र हेत्वसिद्धिः। कर्मफलभोगस्य साक्षिसिद्धत्वात्। तदभावे विधिनिषेध शास्त्रस्य वैयर्थ्यापत्तेः। नहि कर्तारमन्तरेणारण्यरोदनायमानस्य शास्त्रस्य सार्थक्यं भवति। नहि जडं प्रति विधिनिषेधौ युज्यते। नापीश्वरं प्रति तस्य विध्यादि विषयत्वे तस्यापि पुण्यपापादि सम्बन्धेना-नीश्वरत्वापत्तेः। जीव एव कर्ताङ्गीकार्यः। कर्तृत्वेपि योग्यता वैचित्र्याद्वैचित्र्यम्। एवं जीवेश्वरयोः कर्तृत्व-बोधक प्रमाण सद्भावात् उभयविध श्रुत्योरपौरुषेयत्वेनानाशङ्कित दोषयो मीमांसाद्यनुगृहीतयोः प्रामाण्यमक्षतम्॥

परस्पर विरुद्धार्थयोः प्रामाण्य घटनं तु अर्थान्तर परत्वेन कार्यमेव नत्वन्यतरस्य सर्वथाऽप्रामाण्यं वक्तव्यम्। वेदानां प्रतीतार्थ प्रच्युति लक्षणमेवाप्रामाण्यं न सर्वथेति 'तत्वनिर्णया' दावुक्तम्। 'युक्तिमल्लिकाया' मपि 'गृष्ट्यो मिथं विरोधेहि हत्वैकाम पराङ्मुखीम्। विरोधशान्तिं कः कुर्या द्विना म्लेच्छ कुमारकान्। तृणापिण्याक दानेन कृत्वार्थान्तर लालसाम्। ततः प्रच्यावयेदेकां क्रुद्धाप्यन्याध्वना ब्रजेत्। एवं श्रुत्यो र्विरोधेपि यावागन्यार्थकर्तिनी तां तदर्थं परां कृत्वा मोचये त्कलहं तयो' रित्युक्तत्वेन

जीवकर्तृत्वबोधक श्रुतिरमुख्य कर्तृत्व परा । ईश्वरकर्तृत्वबोधिका श्रुति मुख्य कर्तृत्वपरा । मुख्य कर्तृत्वं नाम स्वेच्छामात्राधीन प्रवृत्तिमत्वरूप मुख्य स्वतन्त्रत्वाख्य कर्तृत्वपरा स्वानधीन कारणान्तराद्यन-पेक्षत्वं मात्रशब्दार्थ इति न कश्चित्क्षुद्रोपद्रवः । एवं च जीवकर्तृत्व श्रुतेरमुख्य कर्तृत्व बोधकत्वेन नेश्वर स्वतन्त्र कर्तृत्वबोधक श्रुतिविरोध इति प्रमाण्यं सुस्थम् ॥

एवं जीवस्य अमुख्य कर्तृत्वं ईश्वरस्य मुख्यकर्तृत्वमित्यङ्गीकारे, लोके मुख्यकर्तुरेव विधिबद्धत्वं कर्मफलभोक्तृत्वं दृष्टम्, तद्वत् ईश्वरस्यैव कर्मफलभागित्वं स्यादिति चेन्न । अमुख्य कर्तृत्वस्यैव विधि-बद्धत्वे कर्मफलभोगित्वे च प्रयोजकत्वमङ्गीकरणीयम् । एतच्चाग्रे उपपाद्यते । प्रयोजकामुख्य कर्तृत्वाभाक् नेश्वरस्य कर्मफलभोक्तृत्वम् । ततश्च विध्यविषयेभ्य ईशमुक्तजडेभ्यो व्यावृत्तस्य स्वसम्बन्धितया विधिज्ञानस्य तज्जन्यायाः फलसाधनेच्छायाः तदनुकूलकृतेश्च जीवेऽनुभव सिद्धतया तस्यच ज्ञानादेरीश्वराधीनत्वस्य श्रुति स्मृतीतिहास सिद्धत्वादीश्वरो विधिनिषेध शास्त्रावैय्यर्थ्याय स्वस्थ वैषम्यादि दोष परिहाराय च अनादि योग्यता कर्मापेक्षयैव जीवं प्रेरयित्वा विध्यादिबोधक शास्त्रेण विहितादौ कर्तव्यताज्ञानमुत्पाद्य इच्छामपि जनयित्वा क्रियानिष्पत्यनुगुणं प्रयत्नं च सम्पाद्य स्वयं च तदन्तर्गतः कुर्वन् कर्तृत्वशक्ति नियमन पूर्वक दारुयोषास्थानीयेनापि जीवेन कर्मकारयतीत्येवं ईश्वरस्य मुख्य स्वातन्त्र्येण कर्तृत्वम् । जीवस्य क्रियास्वातन्त्र्याख्य मुख्यकर्तृत्वाभावेऽपि ज्ञानेच्छापूर्वक कृतिमत्वरूपं दारुयोषादिष्व विद्यमान ममुख्यं कर्तृत्वमस्तीत्यङ्गीकर्तव्यमिति ॥

एतदेव 'तत्व प्रकाशिका, तात्पर्य चन्द्रिका, गीताभष्य, तत्तात्पर्यादौ' स्पष्टमुक्तम् । "गीता भाष्येच" स्वातन्त्र्याभावापेक्षयेवाकर्तृत्वमित्यादि । क्रिया स्वातन्त्र्याभावे कथं कर्तृत्वमिति चेदित्थं जीवगत प्रवृत्यादेरीश्वराधीनत्वेपि ईश्वरः जीवस्य प्रयत्नेच्छामुत्पाद्यैव प्रवर्तयतीति जीवेच्छाधीनत्वस्यापि अनुभवसिद्धतया स्वेच्छाधीन प्रवृत्तिमत्वस्यैव कर्तृत्व शब्दार्थत्वा त्कर्तृत्वमुपपाद्यत इति ॥

न च करिष्यामिति इच्छायामप्यकरणात् न करिष्यामीतीच्छायामपि करणाच्च कथं स्वेच्छा-धीन प्रवृत्तिमत्वं वाच्यम् । नह्यस्माभि जीवस्य नियमेन स्वेच्छाधीन प्रवृत्तिमत्वमुक्तम् । तथा सति मुख्य कर्तृत्वापत्तेः । उक्तान्वय व्यतिरेक व्यभिचाराभ्यां कर्तृत्वे मुख्यत्वमात्रं प्रतिक्षिप्तम् नतूत्सर्गतः स्वेच्छाधीन प्रवृत्तिमत्वरूपं कर्तृत्वम् । एवमेवोक्तं सूत्रकारैः 'ॐ उपलब्धिवदनियमः ॐ' इति सूत्रे । तदर्थस्तु—यदि प्रत्यक्षयुक्ति श्रुतिभ्यो जीवः कर्तेत्यङ्गीक्रियते तर्हि 'नान्यः कर्तेति' श्रुतौ तथा 'इतर-व्यपदेशाद्धिताकरणादि दोष प्रसक्ति' रिति सूत्रेच कथं प्राक् कर्तृत्व निरासश्चेत्यत स्तदाशयमाह 'ॐ उपलब्धिवदनियमः ॐ' । इदं ज्ञास्यामीति स्पृहयतोपि जीवस्य यथा ज्ञानेन नियमः स्वेच्छानुसारेण नज्ञानलाभः । तथेदं कुर्यामितीच्छतोपि न क्रियायां नियमः न क्रियालाभ इति नियत कर्तृत्वाभावपरं प्रागुक्त श्रुतिसूत्र द्वयमिति ॥

अन्याधीनस्य कर्तृत्वानुपपत्तिस्तु 'यथाच तक्षोभयथेति' सूत्रेणैव परिहृता । जीवस्यास्वतन्त्रत्वे कथं कर्तृत्वं स्वतन्त्रः कर्तेत्युक्तेरित्यत आह 'ॐ यथाच तक्षोभयथा ॐ' । यथातक्षो—रथकारः कारयितृ नियन्तृत्वेन कर्तृत्वेन चेत्युभय प्रकारेणोच्यते तथा जीवोपि ईशनियतोपि कर्तेत्युच्यत इति ॥

नन्वेकैव क्रिया कथं उभय कर्तृकेति चेन्न । अनेक कर्तृक रथाकर्षणादि क्रियावदुपपत्तेः । नन्वेवमीश्वरस्य मुख्यकर्तृत्वे तस्यैव विधि विषयत्वं कर्मफलभोक्तृत्वं च स्यादिति वाच्यम् । अस्वतन्त्र कर्तृत्वस्यैव तदुभय प्रयोजकत्व मन्वयव्यतिरेकबलादङ्गीकार्यम् । तथाच तदुभय प्रयोजकास्वातन्त्र्यकर्तृत्वा-भावा न्नेश्वरस्य विधिबद्धत्वादिकमिति सिद्धम् ॥

न केवलं निरुपचरित स्वातन्त्र्यरूप मुख्यकर्तृत्वमप्रयोजकम्, प्रत्युत तद्बाधकमेव । नहि स्वतन्त्रः स्वात्मनं बध्नाति कर्मफलं चानुभवति । तथात्वत्वमीश्वरत्वापत्तेः । एतदप्युक्तं गीताभाष्ये—'अकर्तृत्वेपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति न प्रकृत्तिविधिवैयर्थ्यं' इति। अकर्तृत्वेपीत्यस्यापराधीन कर्तृत्वाभावेपीत्यर्थः "प्रमेय दीपिकाया" मुक्तः ॥

अस्तुवा क्रियास्वातन्त्र्यरूपं कर्तृत्वम् । तदपि जीवे ईश्वरायत्तं विद्यते । स्वापरजीवापेक्षया जडापेक्षया वा तदुपपत्तेः । यथोक्तं 'गीता तात्पर्ये तदधीनं स्वतन्त्रत्वं स्वावरापेक्षयैवतु' इति स्वातन्त्र्यं च जडान्प्रति—प्रभुर्हि जीवो जडमपेक्ष्येति । उक्तंहि "प्रमेय दीपिकायां"—'जडं हि परकृत चोदनाक्रियावद्भवति । नत्वागन्तुक कारणमन्तरेण स्वेच्छया - जीवस्तु अनादिसिध्या सत्तातुल्यया परमेश्वर प्रसादायत्तया क्रियाशक्त्या कर्तेत्युच्यत इति युक्तस्तत्र कर्मविधि' रिति । एवं च ईश्वरे स्वतन्त्रं कर्तृत्वं जीवेत्वमुख्यं कर्तृत्वमिति सिद्धम् ॥

ईश्वरस्य अन्यानधीन कर्तृत्वत्वाख्य मुख्य कर्तृत्वात् कर्मफलाभोक्तृत्वम् । जीवस्यैव तदधीन कर्तृत्वाख्यामुख्य कर्तृत्वात्कर्मफल भोक्तृत्वमित्युक्ते लोके राजधनकादि मुख्य कर्तृणाममात्य भृत्यादि अमुख्य कर्तृकृत कर्मफल भागित्वं दृष्टम् । ननु तदधीन कर्तृणाम्, तद्वत् ईश्वरस्य जीवनियामकत्वेन सर्व कर्मणि मुख्यकर्तृत्वे ईश्वरस्य कर्मफलभागित्वमवर्जनीयं स्यात् इति चेन्न । लोके राजादिप्रयोजक कर्तृणां भृत्यामात्यादि कर्तव्यकर्म प्रेरणातत्कर्मजन्य फलेच्छापूर्विका फलेच्छाधीनत्वात् अस्वतन्त्रा । अतः तत्कर्म फलभागित्वं ईश्वरकृता जीवानां कर्तव्यकर्मप्रेरणा न तत्कर्म फलेच्छापूर्विका स्वतन्त्रत्वात् ईश्वरस्य कर्मफल भोक्तृत्वमिति सिद्धम् ॥

अनेन कर्मजन्य फलभोगित्वादौ ईश्वराधीन विधिज्ञानाधीन फलसाधनता ज्ञानाधीन स्वेच्छाधीन प्रवृत्तिरूपं पराधीन कर्तृत्वं प्रयोजकम् । ईश्वरः न कर्मफलभोक्ता, पराधीन कर्तृत्वाभावात्, यथा मुक्त जडे । जडे इच्छाभावादेव मुक्ते च फलसाधनेच्छाभावेन निरुक्त पराधीन कर्तृत्वाभावात् कर्मफलाभोक्तृत्वं, तथा ईश्वरोपीत्यनुमानं प्रमाणम् । 'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्प शक्तितः । स्वातन्त्र्य पारतन्त्र्याभ्यां संभोगो नेश जीवयो ।' रिति श्रुतिश्चात्रप्रमाणम् । अनेन उक्त तर्कस्य व्याप्त्याद्यङ्ग वैकल्येन नोक्तेश्वर स्वतन्त्रकर्तृत्व बाधकतेति सिद्धम् ॥

ईश्वरस्य जीवानां कर्मणि प्रेरणायां फलानपेक्षणन्तु पूर्णानन्दत्वात् । पूर्णानन्दस्य तस्येह प्रयोजनकमतिः कुतः ? आप्तकामस्य का स्पृहा । 'ॐ न प्रयोजनवत्वात् ॐ', ॐ लोकवत्तु लीला वैकल्यं ॐ' इत्याद्यनेक प्रमाण सिद्धम् । एवं जीवानां स्व स्व कर्मप्रेरणायां तत्तदीयानादि योग्यतादि सापेक्षत्वान्नेश्वरस्य वैषम्यादि दोषः । उक्तं हि वैषम्याधिकरणे—'ॐ वैषम्य नैर्घृण्ये नहि सापेक्षत्वा' दित्यादिना । कर्तृत्वाधिकरणेऽपि—'ॐ कृत प्रयत्नापेक्षस्तु विहित प्रतिषेधावैयर्थ्यादिभ्य ॐ' इति सूत्रेण । जीवानामनाद्यदृष्ट योग्यतादीना मीश्वराधीनत्वेन स्वाधीनकारणान्तर सापेक्षत्वा न्नेश्वरस्य स्वातन्त्र्य हानिः । उक्तं हि-'ॐ उपपद्यते चापुपलभ्यते च ॐ' न च कर्मापेक्षत्वेनास्वातन्त्र्यम् । 'द्रव्यं कर्मच कालश्च स्वभावो जीव एव च यदनुग्रहतः सन्ति न सन्ति यदुपेक्षये' ति । 'ॐ सत्वाच्चावरस्ये' ति सूत्र भाष्योदाहृत 'काल आसी त्पुरुष आसीत्परम आसी त्तद्यदासी त्तदावृतमासी दथैक एव परम आसीद्यस्यैतदासी द्यद्येतदासीदि' ति काषायण श्रुतौ । यद्यदासीत्—तदावृतं—तदधीनमासीदिति सर्वस्य कालकर्मादे र्भगवधीनत्व श्रवणाच्च ॥

यद्यपि ईश्वरः कर्मापेक्षां विनैव फलदाने शक्तः तथापि तदक्षपेयैव फलं ददानीति स्वसंकल्पादेव तदपेक्षेति । उक्तं चैतत्—एतानपेक्ष्यैव फलं ददानीत्यस्यैव सङ्कल्प इति स्वतन्त्रता । नास्यापगच्छेत्तस्हि सर्वशक्ति र्नाशक्तता क्वचिदस्य प्रभुत्वादिति । 'साधनानां साधनत्वं यदात्माधीनमिष्यते । तदा साधन सम्पत्ति रैश्वर्यद्योतिका भव' दितिच । एवं च स्वयमेव गतिसमर्थस्यापि ग्रामादिगमने करि तुरगादि वाहनापेक्षा यथा, तथेश्वरस्य प्रकृति काल कर्म स्वभावाद्यपेक्षा परमैश्वर्य प्रकाशनार्था ॥

तदेत त्सर्वं प्रमेयं श्रीमदाचार्यैः महाभारत तात्पर्यनिर्णये द्वाविंशाध्याये उक्तम् । 'प्रत्यक्षमेत त्पुरुषस्य तेनानुमेया प्रेरणा केशवस्य स्वकर्म कृत्वा विहितं च विष्णुना तत्प्रेरणेत्येव बुधानुमन्यते । तेनेति सम्यग्गतिमस्य विष्णो र्जने शुभो देवमित्येव मत्वा । हित्वा स्वकं कर्मगतिं च तामसीं प्रयाति तस्मा त्कार्यमेव स्वकर्म । ज्ञातव्यं चैव विष्णो र्वशत्वं कर्तव्यं चैवात्मनः कार्यकर्मतत्प्रेरकं विष्णुमेवाभिजानन्नवेत्प्रमाण त्रितयानुगामी" ति । एवं च क्रियास्वातन्त्र्यं हि कर्तृत्वं इदमेव स्वेच्छाधीन प्रवृत्तिमत्वं नाम एतादृशं कर्तृत्वं जीवानामस्वतन्त्रं पराधीनमित्यर्थः । अन्याधीन स्वेच्छाधीन प्रवृत्तिमत्वरूप कर्तृत्ववन्तो जीवा इत्यर्थः । अयमेवार्थः दत्त स्वातन्त्र्य पदबोध्यः ॥

स्वातन्त्र्यं नाम निरुक्त कर्तृत्वं दत्तमित्यनेन भगवदधीनमित्यर्थः सूचितः । पराधीन स्वेच्छाधीन प्रवृत्तिमत्वरूप कर्तृत्ववन्तः जीवा इत्यर्थः । हरेरनुचरा इत्यस्य अनु अधीनाः चराः । चरन्तीति चराः क्रियाकर्तृत्ववन्त इत्यर्थः । अधीनत्वं सन्निधानात् । परम धार्मिक मनुत्तमशास्त्रमित्यादाविव कर्तृत्वे भासते । तथा च हर्यधीन स्वेच्छाधीन प्रवृत्तिमत्वरूप कर्तृत्ववन्तः जीवा इत्यर्थः । 'नाहं कर्ता हरिः कर्ता तत्पूजा कर्मचाखिलम् । तथापि मत्कृता पूजा त्वत्प्रसादेन नान्यथे' ति स्मृतिरपि इममेवार्थं गमयति । तदेत त्सर्वार्थ बोधनाशयेन श्रीमत्सर्वज्ञकल्प पदवाक्यप्रमाण पारावार पराङ्गत श्रीमद्व्यासतीर्थ श्रीमच्चरणै स्सर्वसिद्धान्त सारसङ्ग्राहक पद्ये 'जीवगणा हरेरनुचरा' इत्युक्तमिति सर्वं सुमङ्गलम् ॥

श्रीमदानन्द तीर्थादि गुरुमानस मन्दिरः ।
तत्प्रेरणाधीन कृत्या प्रीयतां मे रमाधवः ॥
॥ श्रीकृष्णार्पणमस्तु ॥

श्री श्रीपादपपुत्राणामियं प्रार्थना

विनिर्दिष्टोप्यदिष्टेन सन्दिष्टोन्तरितोन्तरैः ।
अपि क्षमार्जितकृते दृष्ट्या तं क्षन्तुमर्हथ ॥
सन्तत सरसालापै विरला स्सरसीकृता येन ।
तं श्री श्रीपादपुत्रं क्षन्तु याचेति सरस भावेन ॥
इति प्रार्थना पूर्तिः

बुधौ स्सुदुर्गमेप्यर्थे यन्मेलपस्याति साहसम् ।
त त्क्षाम्यन्तु सुहृदः साधवो हि कृपाकराः ॥
एषा श्री सुयमीन्द्रार्य तीर्थ पाद पदाम्बुजे ।
भक्ती माला स्वर्पितेति गुरुराट् प्रीयतां सदा ॥

॥ श्रीमध्वान्तर्गत श्रीकृष्णार्पणमस्तु ॥

# ॥ जीवाः नीचोच्चभावंगताः ॥

म ॥ शा ॥ प्र ॥ वे ॥ वेदान्त विद्वांसः
गुन्हाळु राघवेन्द्राचार्याः मन्त्रालयः ॥



नत्वा नन्दसुतं नुतं विधिमुखै र्नीचोच्चभावङ्गतैः
पूर्णप्रज्ञ जयार्यवर्य यतिराट् श्रीराघवेन्द्रादिकान् ।
द्वैताम्भोधि कलानिधिं मम गुरुं तीर्थं सुशीलेन्द्रकम्
किंचि ज्जीवगणस्य मन्दधिषणो नीचोच्चभावे ब्रुवे ॥

तरतमभावापन्न मुक्त ब्रह्म रुद्रादि नियामको भगवान् श्रीपतिः सर्वोत्तम इति ज्ञानस्य मुक्ति प्रयोजकतया तत्तरतम भावोप्यवश्य मङ्गीकर्तव्यः इति । ननु मानाधीनतया मेयसिद्धेः तन्नीचोच्चभावस्य निष्प्रमाणिकतयाऽङ्गीकारानर्हतैव प्रत्युत "निरञ्जनः परमं साम्यमुपैती" ति श्रुत्या सर्वेषां साम्य प्रतीतेः अतिशयोपेतत्वेन स्वर्गादिव न्मुक्तेरप्यनित्यता स्यात् । परेषामधिक सुखादि दर्शनेन दुःखद्वेषेर्ष्यादिकं स्यादित्यादि वाधकस्य जागरूकत्वात् एवंच (जीवानां) तारतम्य भावस्यावश्यज्ञेयता प्रतिपादनमसङ्गत-मिति चेत् ॥

अत्र ब्रूमः । तारतम्ये प्रमाणाभाव प्रतिपादनमनुचितं "सैषानन्दस्य मीमांसा भवति तेयेशतं मानुषानन्दाः स एको मनुष्य गन्धर्वाणामानन्दः श्रोत्रियस्यचाकामहतस्ये" त्यादि तैतरीय श्रुत्या "अथ येशतं कर्म देवानामानन्दाः स एक आजानजा देवानामानन्दः यश्च श्रोत्रियोऽवृजिनो कामहत" इत्यादि वाजसनेय श्रुत्या "अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवु" रित्याद्यैतरेय श्रुत्या "नृपाद्याः शतधृत्यन्ता मुक्तिगा उत्तरोत्तरम् । सर्वै र्गुणैश्शतगुणा मोदन्ते इति हि श्रुतिः । मुक्तानामपि सिद्धानां नारायण परायणः सुदुर्लभः प्रशांतात्मा कोटिष्वपि महामुने ।" इत्यादि स्मृतिभिः 'ॐ वृद्धि र्ह्रास-भाक्त्वमन्तर्भावादुभय सामंज्यास्यादेव' मित्यादि सूत्रैश्च तस्य प्रमितत्वात् ॥

किंचात्रानुमानमपि मानं भवति । अस्मदादि मुक्त भोगः मुक्त चतुर्मुख भोगान्निकृष्टः अस्मदादि भोगत्वात् संसारस्थास्मदादि भोगवत् । जीवस्वरूपानन्दः परतन्त्रानन्दत्व साक्षाद्व्याप्यधर्मेण सजातीयानन्दप्रतियोगिक तारतम्यवान् जीवानन्दत्वात् तदीय वैषयिकानन्दवत् । प्रकृति बन्धनिवृत्तिः स्वसजातीय बन्धनिवृत्त्याश्रय प्रतियोगिकतारतम्यवन्निष्ठा बन्धनिवृत्तित्वात् निगड बन्धनिवृत्तिवदित्याद्यनु-मानानां तत्र मानता संभवात् । न च स्वरूपसुखानां प्रत्येकमेकत्वेनाणुत्वेन च संख्यापरिमाणकृत वैषम्यं न संभवतीति वाच्यम् । जलपान सुधापान जनित सुखयोरिव मधुर मधुरतरत्वादिवत् स्वरूपकृत वैषम्यस्य तत्र युक्तत्वात् । सालोक्य मुक्त्यपेक्षया सायुज्य मुक्तेरुत्कृष्टतायाः । समानलोक निवासापेक्षया तदन्तः प्रवेशस्याभ्यर्हितत्वेन लोकन्यायेन प्रसिद्धेः । न च सायुज्यमैक्यमेवेति वाच्यम् । सारूप्यादे भेद सामानाधिकरण्य नियमेन तन्नियत सायुज्यस्यापि भेदव्याप्यतायाः आवश्यकत्वात्

"चन्द्रमसः सायुज्यं सलोकतामाप्नोती" त्यादि श्रुतौ "सायुज्यंचेदिभूभुजा" मित्यादि स्मृतौ षष्ठी श्रुत्याभेदे सत्यपि सायुज्योक्तेः। तस्मा त्सायुज्यं नाम क्षीरनीरवत् अन्यदेह प्रविष्ट ग्रहदेवतादियश्च अभिव्यक्त प्रसादविशेषवदीश्वर संबन्धमात्रमेव ॥

नचोक्त श्रुतिरमुक्त तारतम्य विषयैवेति न तया मुक्ततारतम्य सिद्धिरिति वाच्यम्। श्रोत्रिय शब्दस्य प्रकृत मनुष्य गन्धर्वादि परत्वे मनुष्य गन्धर्वाणां बहुवचनेन प्रस्तुतत्वात् श्रोत्रियस्यचेत्यत्र यश्च श्रोत्रिय इत्यत्र चैकवचनार्थस्यान्वयायोगेन तदेकवचनमयुक्तमेव स्यात्। समुच्चयार्थक चशब्दोपि उद्देशविधेययोरैक्येन समुच्चेतव्यस्याभावेनायुक्तस्यात्। नहि वसिष्ठो ब्रह्मिष्ठः अरुन्धतीपतिश्च तथेति लोके प्रयोगो दृष्टः। मनुष्य गन्धर्वादिभिन्नः कश्चित्संसारी श्रोत्रियपदेन बोध्यत इत्यङ्गीकारे चतुर्मुखाद्यानन्दस्यान्यस्मि न्नसरिण्यदर्शनेन बाधः प्रसरति ॥

ननु विदितवेद्य बृहस्पति शिष्याणां स्तुतिरूपस्य अक्षण्वन्त इति मन्त्रस्य कथं मुक्ततारतम्य विषयतेति चेत्;—साक्षात्कृत परमात्मतत्वानामेव विदितवेद्यत्वात्' 'ऋचांत्वः पोषमास्त" इत्यस्य ब्रह्मबहुभाव प्रतिपादकस्य अस्मिन्प्रकरणे पाठाच्चास्य मुक्तविषयता संभवात्। एवं मुक्तसुखं परस्पर तारतम्यवत्। परस्परं तारतम्यवत्साधनसाध्यत्वात् सम्मतवदित्यनुमानं मुक्तानन्दतारतम्ये मानम्। नचासिद्धिः "कस्तंमदामदंदेवं मदन्यो ज्ञातुमर्हति" "सर्वेगुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वे मनुष्यै ब्रह्मापि यं वेद नचैव समयगन्ये कुतो देवमुनीन्द्रमर्त्या" इत्यादि स्मृतिबलेन देवर्षि मानुषादिस्य मुक्तिहेतु ब्रह्मज्ञानगतस्य बह्वल्पतर शाखाश्रवणादि साध्यत्वस्य ब्रह्माल्पतर गुणविषयकत्वं विना योगेनार्थापत्या तत्सिद्धेः। किंच "मुमुक्षोरमुमुक्षुस्त् वराद्येकांत भक्तिमानि" ति स्मृत्या मुमुक्षु भक्तादमुमुक्षोः निरुपाधिक भक्तस्याधिक्योक्तेश्च" "अन्येत्वेवमजानन्तः श्रुत्वान्येभ्य उपासते। तेपि चातितरंत्येव मृत्युं श्रुति परायणा" इत्यत्रापि शब्देन "स्त्रियो वैश्यास्तथा शूद्रास्तेपि यांति परांगतिं। किंपुन ब्राह्मणाः पुण्या" इत्यत्र कैमुत्येन साधनतारतम्येन फले तारतम्य प्रतीतेः। ब्राह्मे च "साधनस्योत्तमत्वेन साध्यंचोत्तममाप्नुयुः। ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुता" इति मोक्षधर्मे। "अधिकं तव विज्ञानमधिका च गतिस्तवे" ति च "यथा भक्तिविशेषोत्र दृश्यते पुरुषोत्तमे। तथा मुक्तिविशेषोपि ज्ञानिनां लिङ्गभेदने" ति च श्रवणा त्साधनतारतम्येन साध्यतारतम्य प्रतीतेश्च। अत्र "दर्शनाच्च ॐ" इति सूत्रमपि प्रमाणं भवति ॥

किंच त्वन्मतेपि प्रत्येकं मोक्षहेतुभूतयो र्निरंतर चिंतारूप भ ...न्तःकरण भरन्यासरूप प्रपत्यो वैषम्य मस्त्यव। तथाहि—भक्तेः अंतःकरणद्वारा कर्मसापेक्षत्वेन निरंतरमावृत्ति सापेक्षत्वेन च प्रपत्तेः कर्मापेक्षाया आवृत्यपेक्षयाश्चाभावात् तयोः स्वरूपतो वैषम्यत्वात् न च भक्तिस्वरूपे कर्मावृत्तिभ्यामाधिक्येपि विश्वासोऽल्पः प्रपत्तौकर्मावृत्योरभावेपि विश्वासो भूयानिति भक्तिप्रपत्यो स्साम्यमेवेति वाच्यम्। सकृद्भोजने बहुघृत भोजन कर्त्यपेक्षया नैकवारं भोजनेष्वल्प घृतभोक्तुरेव बहुघृत भोक्तृत्ववत् सकृद्वि वृत्ति प्रतिपत्तिगत विश्वासापेक्षयाऽनेक भक्त्यावृत्तिष्वल्पाल्पविश्वासस्याप्याधिक्या त्साम्याभावात्। यदि फलसाम्येन साधन साम्यसिध्यै प्रतिपत्तावधिकं विश्वासः कल्पेत तदाऽन्योन्याश्रयः। साधनवैषम्येपि साध्येऽवैषम्यं स्यात्तदा फलदातुरीश्वरस्य वैषम्यादिकं, अधिक साधन विधायिकायाः, श्रुतेरनुपादेयत्वंच स्यात्। न च भक्ति प्रपत्यो वैषम्येपि शक्ताशक्तविषयकतया फलसाम्यं भवत्येवेति वाच्यं तथाऽश्रवणात् तथा कल्पनेचाति प्रसङ्गात्। तस्मा त्साधन तारताम्येन साध्यफल तारतम्यसिद्ध नासिद्धिः। तदुक्तं "युक्तंच साधनाधिक्या त्साध्याधिक्यं सुरादिषु। नाधिक्यं यदि साध्येस्या त्प्रयत्नः साधने कुत" इति। एवं "तस्य तावदेव चिरं यावन्नविमोक्ष्ये ताथसंपत्स्यत" इत्यादि श्रुत्या "तस्य कार्यं न विद्यत"

इत्यादि स्मृत्या च मोक्षाय कर्तव्यान्तरस्याभावः स्थितप्रज्ञस्य यस्य विहितः तस्यापरोक्ष ज्ञानादिमतो भक्तस्य शुकादे र्नित्यकर्मादि ब्रह्मध्यानादिकंच फलोपकार्यङ्गं न भवति । मुक्तावपि फलकर्मणो समुच्चयापातात् मोक्षोद्देशेन कर्तव्यांतरनिषेधिकया श्रुत्या विरोधात् । नापि फलांतरजनकं ज्ञानिनोऽनिष्टत्वात् । नापि लोकसङ्ग्रहार्थं ईश्वराज्ञापालनार्थं वा तयोस्सर्वतः फलत्वाभावात् । नापि ईश्वरप्रीतिः तस्य फलं भक्त्यादिनैव तत्सिद्धेः । नापि ईश्वरप्रीतौ अतिशयजननं तस्यफलं फलेऽतिशयाभावेन तस्य पारिभाषिकत्वात् ॥

ननु अपरोक्षज्ञानिकृत कर्माणि लीलार्थानि सांसारिक भोगोद्देशक क्रियाकर्मत्वाभावेसति ज्ञानि कर्मत्वात् ईश्वरकर्मवदित्यनुमानेन लीलार्थान्येव तानि कर्माणीति चेन्न । अविधिबद्ध कृतत्वमत्रोपाधिः साध्याधिकरणे ईश्वरकर्मणि उपाधेः सत्वेन साध्यव्यापकतायाः पक्षे ज्ञानि कर्मणि विधिबद्धकृत उपाधेः अभावेन साधनाव्यापकत्वात् । नच पक्षेऽविधिबद्धकृतत्व सत्वेन साधनव्यापकतोपाधेरिति वाच्यम् । "आचार्याद्विद्यामवाप्येतमात्मानमभिपद्य शांतो भवेद्दान्तो भवेत्" "मन्मना भवमद्भक्तो मद्याजीमां नमस्कुरु" इत्यादिनाऽपरोक्ष ज्ञानिनः भक्तिप्रपत्तिमतश्च तद्विधानात् विधिबद्धकृतत्वेन पक्षे उपाधेरभावेन साधन व्यापकता संभवात् । एवं शुक शक्र सूर्यादयः "न देव पदवीं प्राप्ता ब्रह्मदर्शन वर्जिता" इत्यादि प्रमाणेनापरोक्ष ज्ञानित्वेन प्रमिताः ।तस्मात् अपरोक्षज्ञानोत्तरानुष्ठित कर्माणि मोक्षेतर फलजनकानि मोक्ष हेतुत्वे सति सफलत्वदिति परिशेषानुमानेनोक्तकर्मणां मोक्षेतर फलकत्वं सिद्धमिति । अपरोक्ष ज्ञानोत्तरानुष्ठित कर्मणां मुक्तावानन्दातिशय फलमेवेत्युररीकरणीयमिति । ब्रह्माण्डे "ज्ञानान्मोक्षो भवत्येव सर्वकार्य कृतोपित् । आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वानु वर्धत" इति । तथाच स्मृतिरपि "सर्वदुःख निवृत्तिस्तु ज्ञानिनो निश्चितेव हि । उपासना कर्मभिश्च भक्त्याचानन्दचित्रते" ति । नचोक्त परमसाम्य श्रुतिव्याकोप इति वाच्यम् ।सरः सागरयोरिव दुःखाभाव सत्यकामत्वादिना स्वयोग्यानन्दपूर्त्या च साम्यप्रतिपादिकैवसेति नदोषात् । तथाच स्मृतिः "लिङ्गभेदः परानन्दो दुःखाभावः समामता" इति । नोचेदीश्वरवत् मुक्तस्यापि जगत्सर्जनादिकं स्यात् । नचेदं जगद्व्यापारवर्जमिति सूत्रे जगद्व्यापारशब्द उपलक्षणार्थ इति वदतस्तवेष्टम् । यदि तत्पदं उपलक्षणार्थं नस्यात् तर्हि मुक्तस्यापि स्वातन्त्र्यादिकमपि स्यात् । "स्वधिकानन्दसंप्राप्तौ सृष्ट्यादि व्यापृतिष्वपि । मुक्तानां नैव कामस्यादन्या न्कामांस्तु भुंजत" इत्यादि प्रमाणेन जगत्सृष्ट्यादाविवाधिकानन्देपि कामाभावा त्सत्यकामत्वं युक्तम् ॥

न च सातिशयत्वेऽनित्यत्वं अपकृष्टस्य समस्य च विनाशदर्शनेन त्वत्पक्षेपि तत्स्यात् । यदि श्रुतिबलेनास्यानित्यत्वत्यागः तर्हि मन्मतेपि एतद्बलेनैव नित्यत्वोपपत्तेः । अन्यथोक्तस्याप्यनित्यत्वेन व्याप्तेरीश्वरानन्दोपि नित्यो नस्यात् । न च मुक्तावपि द्वेषेर्ष्यादि प्रसङ्गः । जातापरोक्षज्ञानानां द्वेषेर्ष्यादेर संभवात् । यदि लोकरीत्या तत्र तदापादनं तर्हि समेष्वपि तद्दर्शनेन तवपक्षेपि द्वेषादेः प्रसङ्गः । यदि द्वेषेर्ष्यादौ दोषा एव कारणमिति तत्परिहारः भोगाधिक्येपि तदानीं निर्दोषतया द्वेषेर्ष्यादेरप्रसरात् ॥

ननु भवन्मते मुक्तिः स्वरूपानन्दाविर्भावरूपैव । उक्तंच "मुक्तिर्नैज सुखानुभूति" रिति स्वरूपस्य चैकविध्यात् कथं तारतम्योपपत्तिरिति वाच्यम् । "यो यद्रूपः सतद्रूपः निसर्गोह्येष भवती" ति श्रुत्या "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । राक्षसी मासुरींचैव प्रकृतीं मोहिनीं श्रिताः । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा । सत्विकी राजसीचैव तामसीचेति तां शृणु । श्रद्धामयोयं पुरुषो योयच्छ्रद्धः स एव स" इत्यादि स्मृत्या चतुर्मुखादे रितरतोत्कर्षस्य दृष्टेन वाऽदृष्टेन वा अनागन्तुक

हेतुसाध्यत्वे तत्रापि हेत्वन्तरान्वेषणेनानवस्थापत्याऽनादियोग्यताहठापरः पर्याय स्वभावो हेतुर्वाच्यः इत्यादि युक्त्या च तारतम्यस्य स्वभावत्वात् ॥

ननु मुक्तस्य देहवत्वे दुःखादि प्रसङ्गः। नोचेद्भोगासंभव इति कथं तारतम्यमिति चेत्— " चिदानन्द शरीरेण सर्वे मुक्ता यथा हरिः। भुंजते कामतो भोगाश्चांतत बहि रेवचे " ति श्रुत्या चिद्रूप शरीरस्य " स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद्भुक्त्वा त्याग: कदाचने " त्यादि ब्रह्मवैवर्त वचनादिना जडशरीरस्यापि सत्वात्। एवं " चितावाचिता वा नित्येन वाऽनित्येनवाचानन्दी ह्येव भवती " ति श्रुत्या उभयविध देहस्यापि श्रवणात्। तथाच श्रुतिसूत्राणि–"ॐ अभावं बादरि राहह्येवं ॐ, ॐ भावं जैमिनिर्विकल्पानात् ॐ, ॐ द्वादशाहवदुभयविधं बादरायणोतः ॐ " इति सूत्रे अशरीरो वा तदा भवत्यशरीरं वा वसंतं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यत "। "सर्वा एष एवं वित्परमभिपश्यत्यभिश्रुणोति ज्योतिषैव रूपेण चितावाचितावा नित्येनवानित्येन-वाचानन्दीह्येवैष भवति नानानंद कंचिदुपस्पृशती " ति कौंठरव्यौद्दालकादयः श्रुतयः। एवं "प्रकृतिश्चा-प्यतिक्रम्य गच्छंत्यात्मानमव्ययम्। परं नारायणात्मानं निर्द्वंद्वं प्रकृतेः परम् । इन्द्रियाण्यनुबध्यन्ति स्वदेहं योगिनो नृप। करणान्यात्मनस्तानि सूक्ष्मो पश्यति तैस्तुसः। सजिघ्रति यथा न्यायं स्पर्शान्स्पृशाति च प्रभो " इति मोक्षधर्म वचनेन तेषामिन्द्रियवत्वस्यावगमात् ॥

तथाच भोगादिसंभवेन तारतम्योपपत्तेः। न च सशरीरत्वे मुक्तानां दुःखाद्युपपत्तिः तेषां वश्य प्रकृतित्वेन प्रकृतिवशत्वाभावात्—यस्य यन्न्यादिव तस्य तद्योगाद्दुःखादिकं नहि भविष्यति। अत एवोक्तं न्यायविवरणे "मुक्तानां वशितायतः" इति। तथाच सूत्रं "ॐ प्रदीपवदावेशात्तथाहि दर्शयति ॐ"। तत्र भाष्येप्येवमेवोक्तं "शरीरमनुप्रविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति नतु दुःखादीन्। यथा प्रदीपोदीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते पेतु कार्ष्ण्यादी " ति । एवं फलाध्याय पतिपादित न्यायकलापै स्तरतमभावस्य प्रमितत्वेन जीवानां तारतम्ये प्रमाणस्य जागरूकतया निर्बाधाच्च। "जीवा नीचोच्चभावङ्गता " इति यत्प्रतिपादितं तद्युक्तमेवेति तरतमभावापन्न मुक्तब्रह्मरुद्रादि नियामको भगवान् श्रीमान् मूलजानकीजानिः सर्वेषां शुभप्रदो भूयादिति शम् ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक श्रीलक्ष्मीहयग्रीवाय नमः ॥

# मुक्तिः
# (नैजसुखानुभूतिः)

म. शा. प्र. दोड्डबल्लापुरं, वासुदेवाचार्याः
['पण्डितरत्नम्, पण्डितशिरोमणि, विद्वन्मणि' इत्यादिबिरुदभूषिताः द्वैतवेदान्तप्रधानाध्यापकाः
महाराज संस्कृतमहापाठशाला, मैसूरु]



श्रीब्रह्मेशपुरोगसर्वचिदचित्सृष्ट्यादयो यद्वशा
दुःखानीश्वरतादिदोषनिचया यत्र स्थितेर्नेशते ।
यस्योत्कर्षवचः प्रमाणमितरन्नो मानतायाः पदं
तं लक्ष्मीशममन्दबोधहृदयाम्भोजाधिवासं नुमः ॥
दभ्रायुर्मतयोऽलसा भुवि जना वेदादिशास्त्राणि चा
नन्तार्थान्यतिविस्तराणि जनताबोधं कथं प्राप्नुयात् ।
स्वां स्वां योग्यगतिं व्रजेच्च कथमित्येवं सुरैर्योर्थितः
व्यासीभूय ततान शास्त्रमखिलैर्वेद्यं स नोऽव्याद्धरिः ॥
सर्वं वेदवचः प्रमाणमखिलैर्वाच्यं पदैर्मुख्यतः
ब्रह्मानन्तगुणं तदस्य भजनादत्यक्ततद्दास्यकः ।
मोक्षः स्यादिति यन्मते निरुपधि ह्यास्तिक्यमव्याकुलम्
तानेतान्प्रणतोऽस्मि देशिकवरान्मध्वाभिधानन्वहं ॥
मध्वशास्त्रमहाचापमद्वार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे नुतं जयार्यं सदा भजे ॥
यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥
श्रीमतो राघवेन्द्रस्य नमामि पदपङ्कजे ।
कामिताशेषकल्याणकलनाकल्पपादपौ ॥

इह खलु सार्वजनीनेयमभिलाषा सुखमेव मे स्याद्दुःखं मनागपि माभूदिति ॥ संसारेऽस्मिन् मनुष्यास्तदा तदा सुखमनुभवन्तोऽपि भूयोभूय एवमेवाभिवाञ्छन्ति । विवेचनीयं चैवमभिलाषातरङ्गस्य निदानम् । तथा हि, द्विविधं खलु सुखमैहिकमामुष्मिकं चेति । तत्रैहिकमिष्टशब्दस्पर्शरूपरसगन्धाख्य-

विषयानुभवजन्यं, गृहवनितापत्याद्यनुभवाहितं च। आमुष्मिकं द्विविधं, स्वर्गसुखं मोक्षसुखञ्चेति॥ तत्राद्यं रम्भाद्यप्सरःस्त्रीसम्भोगरत्नखचितदेवव्योमयानामृतपाननन्दनवनविहारादिना जायते। द्वितीयन्तु, इतरसर्वसुखविलक्षणं नित्यं आत्मस्वरूपात्मकं। नेदं संसारदशायामनुभवितुं शक्यम्। अनित्यं विषयाद्यनुभवजनितं दुःखनियतमेव सुखं तदानुभूयते। अतोऽनुभूयमानेऽपि तस्मिन्नालंबुद्धिमाप्नुवन्तीति लोकानां नैसर्गिकीयमभिलाषेत्यविवादम्। एवञ्च, सन्सारेनुभूयमानसुखविलक्षणं क्षणमपि तदानीमलभ्यम् दुःखासम्भिन्नं शाश्वतं स्वाभाविकञ्च सुखमेव तादृशाभिलाषाविषयः। तत्तादृशस्वरूपानन्दानुभव एव परमपुरुषार्थो मोक्ष इति चोद्घोषयन्ति श्रुतिस्मृत्यादयः॥

तदेवं महापुरुषार्थं मोक्षमेव स्वस्वसिद्धान्तप्रयोजनत्वेनाभिसन्धाय सर्वेऽपि वादिनः स्वस्वदर्शनानुगुणं मोक्षस्वरूपं निर्धारयन्तिस्म। अधिक्षिपन्ति च प्रतिप्रस्थानं स्वसिद्धान्तस्वरसता प्रतिपादनाय अन्याभिमतं मोक्षस्वरूपमिति बहुधा विप्रतिपत्तिर्दृश्यते। तत्र तावच्चार्वाकबौद्धजैनाख्यानि त्रीणि अवैदिकदर्शनानि। तर्कसांख्यमीमांसाख्यानि त्रीणि दर्शनानि वैदिकत्वाभिमतानि च प्रसिद्धानि। ऋते चार्वाकात्सर्वेष्वप्येतेषु दर्शनेषु सिद्धान्तप्रयोजनतया मोक्षस्वरूपमुपवर्णितम्। न हि सर्वानुगतः कश्चिन्मोक्षो नामास्ति। किं तु विरुद्ध एव मोक्षस्तत्तद्वादिभिरुपपादितः। एवं विरुद्धस्वरूपाणां सर्वेषां प्रमाणमूलत्वे विरुद्धानेकप्रकारता मोक्षस्य प्राप्नोति। न चैतदङ्गीकारार्हं; वस्तुविकल्पापत्तेः। सर्वेषां मिथ्याज्ञानमूलत्वे च, वस्तुनो निस्स्वरूपता स्यात्। अत एतेष्वेकः प्रमाणमूलो अन्ये मिथ्याज्ञानमूला इति निर्णेयमेव॥

## जैनदर्शनम्

सततोर्ध्वगतिर्मोक्ष इति जैनाः॥ तेषामयमभिसन्धिः—तन्मते प्रत्यक्षमनुमानञ्चेति द्वे एव प्रमाणे। वेदो न प्रमाणम्। अर्हन्मुनिवचनान्येव प्रमाणानीत्यङ्गीकुर्वन्तोऽपि एते अनुमानविधयैव तेषां प्रामाण्यं मन्यन्ते, न तु तेपामागमतया पृथक्प्रामाण्यम्। कृत्स्नकर्मक्षयान्मोक्षस्सम्पद्यते। ज्ञानात्केषाञ्चित्कर्मणां क्षयः, केषाञ्चिद्भोगात्। एवं ज्ञानभोगाभ्यां कृत्स्नकर्मक्षयात् पक्षिणः पञ्जरादिवदात्मनो देहान्मोक्षो भवति। कोऽर्थः? यथा पञ्जरान्मुक्तः खग ऊर्ध्वं व्रजत्येवमेव कर्मक्षयानन्तरं जीव ऊर्ध्वं गच्छति। इयाँस्तु विशेषः—खगो लोकाकाश एव अटन् यत्र क्वचन विश्राम्यति। जीवस्तु लोकाकाशमतीत्य अलोकाकाशे सततमूर्ध्वं गच्छन्नेवास्त इति॥ अथ कर्मक्षये सति तन्निमित्तदेहावस्थानं न सम्भवति। तदभावे च आत्मनः परिमाणाभावः, आत्मनो देहसमपरिमाणाङ्गीकारात्। तथात्वे च द्रव्यस्य शून्यसमकक्षतया कथमूर्ध्वगतिस्तथाविधस्येति चेन्न। तन्मते चरमदेहसमसन्निवेशविशिष्टहस्तपादादेर्मुक्तात्मनोऽङ्गीकारादिति॥

## खण्डनम्

तदेतदयुक्तमप्रामाणिकत्वात्॥ तथा हि—न तावदत्र प्रत्यक्षं प्रमाणं भवति, मुक्तस्यातीन्द्रियत्वेन तदाश्रितपरिस्पन्दस्याप्यतीन्द्रियविषयतया प्रत्यक्षायोग्यत्वात्। नाप्यागमः, तदीयागमस्यास्माभिः प्रमाणतयानङ्गीकारात्, वेदादिप्रामाण्यस्य च तेनैवानङ्गीकृतत्वात्। अतः परिशेषान्मूलप्रमाणशून्यं किंचिदनुमानं प्रमाणमिति वाच्यम्। तदपि न सम्भवति, देहबन्धान्मुक्तो जीवः ऊर्ध्वगतिमान् बन्धमुक्तत्वात् पञ्जरोन्मुक्तखगवत्। अथवा विमता गतिः स्वसमानकालीनदुःखविरहसमानाधिकरणा बन्धमुक्तगतित्वात् पञ्जरोन्मुक्तखगगतिवत् इत्याद्यनुमानमेव मोक्षे प्रमाणीकर्तव्यम्। न चैतत्साधकं—विप्रतिपन्ना गतिः स्वसमानकालीनदुःखसमानाधिकरणा चेतनगतित्वात् देवदत्तगतिवदित्यादिना सत्प्रतिपक्षितत्वात्।

देवदत्तः खलु आध्यात्मिकादिष्वन्यतमेन महताल्पेन वा दुःखेन सदा संवलितः। तस्य सम्सारे कदापि निर्दुःखता नास्तीति तदीय लौकिकगतिसामान्यमेव दुःखयुतमतस्तद्दृष्टान्तेनोर्ध्वगतावपि दुःखसाहित्यसिद्धेर्न तादृशोर्ध्वगतिः पुरुषार्थेषु गणनामर्हति। किं च, दृष्टान्तोऽपि विषम एव, पञ्जरमुक्तो विहग ऊर्ध्वमुत्प्लुत्य तज्जनितश्रमापनोदायैव क्वचन विश्राम्यति, न तु सततमुत्पतन्नेवास्ते। अविच्छिन्नमूर्ध्वगमनं दुःखासहकृतमसम्भावितमेव विहग इति महावैषम्यम्। तदेवं दोषबाहुल्यादप्रामाणिकत्वाच्च सततोर्ध्वगमनं मुक्तिरिति पक्षो न क्षोदक्षमः। 'जीवो ज्ञानदर्शनसुखवीर्यगुणः' इति जीवस्वरूपं निष्कृष्य, 'स्वाभाविकात्मस्वरूपाविर्भावो मोक्षः' इत्यादिना जिनोक्तं मोक्षान्तरं तु सिद्धान्तानुगुणमेवेति बोध्यम्॥

## बौद्धदर्शनम्

जैनमतवत्सौगतमतमपि न ग्राह्यमेव, अप्रामाणिकत्वात्। परमात्मेन बुद्धरूपेण विष्णुना कृतमिदं कथं न ग्राह्यमिति च नाशङ्कनीयम्। यद्यपि भगवान्बुद्धः पटुकरणस्तत्त्वज्ञानवांश्च श्रुत्यादिसिद्धः, उपदेशादेव विवक्षुश्च। नैतावतायमाप्तः, विप्रलम्भकत्वात्। यथोक्तम् भागवते प्रथमस्कन्धस्य तृतीयाध्याये—ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषां। बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति॥ इति॥ अतस्तदुक्तम् मोक्षस्वरूपं हेयमेव॥

एवं दैत्यमोहनाय भगवता बुद्धेन सकृदुपदिष्टमपि व्याख्यातृमतिभेदात्सौगतमतं माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकभेदाच्चतुष्प्रकारमभवत्। अद्वितीयं शून्यमेव तत्त्वमिति माध्यमिकाः, विज्ञानमेकमेव तत्त्वमिति योगाचाराः, अस्त्येव ज्ञानव्यतिरिक्तं तत्त्वं, किं तु तदनुमेयमिति सौत्रान्तिकाः, यथायथं प्रत्यक्षादिगम्यो बाह्यार्थोऽप्यस्तीति वैभाषिकाः। एतेषु शून्यवादिनोऽतितामसाः, प्रमितसकलवस्त्वपलापित्वात्। ततो ज्यायांसो विज्ञानवादिनः, रूपादिबाह्यार्थापलापेऽपि विज्ञानमात्राङ्गीकारात्। ततस्सौत्रान्तिका वराः, अनुमेयबाह्यार्थाभ्युपगमात्। ततोऽपि वैभाषिकाः, बाह्यार्थमभ्युपगम्य तस्य यथायथं प्रत्यक्षादिगम्यत्वाभ्युपगमात् इति तारतम्यं चात्रानुसन्धेयम्॥

शून्यवादोऽपि द्विविधः, एकात्मवादोऽनेकात्मवादश्चेति। तत्र प्रथम एव मुख्यसिद्धान्तः। मन्दानां बुद्धावारोहाय द्वितीयोवतारितः। तत्रैकात्मवादिनामयमाशयः—शून्यं तत्त्वं स्वतो निर्विशेषमेकमेव। तस्य परमसूक्ष्मस्य वाङ्मानसातीतस्य स्वप्रकाशस्यावरणविक्षेपाद्यनेकशक्तिमत्या मूलसंवृत्या कर्तृत्वभोक्तृत्वशक्तिमदहङ्कारोपाधिवशात्किंचित् स्थूलता जायते। ततस्सद्वितीयत्वेन सविशेषतायां स्थूलता सम्पद्यते। ततो मनोवचनगोचरत्वे जाते विधिनिषेधगोचरत्वेन सलेपत्वं रागादिदोषसंसर्गश्च। ततो देहेन्द्रियान्तःकरणविषयसम्बन्धे स्थूलतरता भवति। ततो ममकारवतो दुःखादिमत्वे स्थूलतमत्वमित्येवं संवृत्या तत्कार्यत्वात्संवृतिसंज्ञकैरहङ्कारादिभिश्च संवलितं शून्यमेव संसारः। भावनाप्रकर्षादिना मूलसंवृतौ ध्वस्तायां तत्कार्यप्रवाहे च विलीने तदुपलक्षितं शून्यमेव मोक्षः। एवञ्च अहङ्काराद्युपाधिनाश एव आत्मनाशः। अयमेव निर्वाणशब्दितो मोक्ष इति॥

अनेकात्मवादिनस्तु नानाभूतसंवृत्त्यवच्छिन्नमेव महाशून्यं नानापुद्गलशब्दवाच्यं भवति। तथा च शून्यमेकमेव संवृतिवशान्नानाजीवतयाऽवभासत इत्युक्तं भवति। तत्रानेकेष्वात्मसु यस्यात्मनः शून्याद्वितीयताज्ञानान्मूलसंवृतिः शैवालवदपसरति। अस्यावच्छेदकत्वेन प्रातिस्विकं विद्यमाना तु नश्यति। स जीवः कर्तृत्वादिरूपपुद्गलत्वनिर्मुक्तोऽभिव्यक्तमहाशून्यभावो भवति। यस्तु संवृत्त्यवच्छिन्न आत्मा स पुद्गलभावेन परमार्थबुध्यैव दुःखान्यनुभवतीत्याहुः॥

एवञ्च मतद्वयेऽपि यथा प्रदीपस्य तैलाद्यपगमे स्वयमेव निश्शेषविनाशस्तथा वस्तुतः शून्यमहमस्मीति ध्यायिनोऽधिकारिणः सविलाससंवृतिनाशरूपनिश्शेषविनाशे तदवच्छिन्नपुद्गलशब्दिताहमर्थरूपजीवस्यापि विनाशो मोक्ष इत्युक्तं भवति ॥

## खण्डनम्

तदयुक्तम् ॥ आत्मविनाशलक्षणो मोक्षः किमात्मनः फलमुतानात्मनः ? नाद्यः, तस्य विनष्टत्वात् । न हि भोक्त्रभावे फलमुपपद्यते ; धर्मादिफलानां भोक्तृनियतत्वात् । न द्वितीयः, भावनाप्रकर्षादिना मूलसंवृतौ ध्वस्तायामहङ्काररूपस्य आत्मनो विलये तत्कार्यप्रवाहरूपस्यानात्मनोऽपि विलीनत्वेनाभावात् । भावेऽपि न तस्य पुरुषार्थता, पुम्सम्बन्धिन एव पुरुषार्थत्वात् । आत्मनाशेन अनात्मन उपकाराभावेन अर्थ्यत्वाभावाच्च । किं चात्मन एवाभावे किमिष्टवाप्तिरूपो मोक्ष उतानिष्टनिवृत्तिरूपः ? नाद्यः, आत्मार्थं हि सर्वमिष्टम् । स चेन्नस्यात्तदा कस्यायं पुरुषार्थस्स्यात् । न द्वितीयः, अनिष्टनिवृत्तिरपि पुरुषार्थी भवन्ती तदा स्याद्यदीष्टं न विहन्यात् । तद्विघातेऽपि वा यदि महतोऽनिष्टस्य विघातिनी स्यात् । तथैव हि लोके दृष्टम्, न हि कश्चिन्महदिष्टं विनाश्याल्पानिष्टनिवृत्तिं कुर्वाणः प्रेक्षावानुपलभ्यते । आत्मा च सर्वतोऽपीष्टतमः । तद्विघातेन भवन्त्यनिष्टनिवृत्तिः कथं पुरुषार्थो भवेत् ? अथ रोगादिपीडिता उद्बन्धनादिनाऽऽत्मविनाशं कुर्वन्तो दृश्यन्त इति चेन्न । रोगाद्यायतनदेहपरित्यागेनात्मानं निर्दुःखीकर्तुमेव तेषां प्रवृत्तेः, निर्दुःखो भूयासमिति हि सर्वस्याकाङ्क्षा ; न तु न भूयासमिति । देहात्मविवेकज्ञानविधुरास्त्वात्मनाशायैव प्रयतन्त इति न वाच्यम् ; तेषामप्रेक्षावत्वेनात्रानुदाहार्यत्वात् । नन्वेवमपि दुःखात्यन्तनिवृत्तिस्तावदवश्यमेष्टव्या । सा च कारणनिवृत्त्यैव भवति, नान्यथा । कारणं च दुःखस्यात्मैव अधर्मार्जनाधारत्वाच्च । तत्कथमात्मनाशेन शून्यभावापत्तिर्नेष्यत इति चेन्नैवम् । न ह्यात्मैव दुःखकारणम् । तथात्वे सुप्तावपि दुःखमनुभूयेत । न च तत्तदानुभूयते, किं तु जागर एव दुःखमनुभूयत इत्यन्वयव्यतिरेकाभ्यां शरीरेन्द्रियविषयवेदनादिकमपि दुःखकारणमिति मन्तव्यम् । ततो ज्ञानभोगाभ्यां कर्मणि क्षीणे निर्बीजस्य देहादेरनुत्पादे सामग्रीवैकल्येन दुःखानुत्पादस्य सम्भवात्किमात्मनाशकल्पनया । कुतो विनिगमनमिति चेत् सर्वस्याप्यात्मार्थत्वात्, आत्मनश्चात्यन्ताभ्यर्हितत्वादिति ब्रूमः । विप्रकृष्टव्ययेन साध्यासिद्धौ संनिकृष्टव्ययं प्रेक्षावन्तः कुर्वन्ति । तस्मात् आत्मार्थे पृथिवीं त्यजेत् इति न्यायेन दुःखं जिहासता आत्मावधिकस्यैव कारणस्य मोक्ष एष्टव्यो न त्वात्मनोऽपीति युक्तमुत्पश्यामः ॥

एवमात्मव्यतिरिक्तानां दुःखकारणानां देहादीनामेव निवृत्तिरात्मनस्तु स्वरूपेणावस्थानमित्यनङ्गीकृत्य यद्यात्मनोऽपि शून्यतापत्तिः मोक्षस्स्यात्तदा घटशून्यतापि देवदत्तस्य मोक्षो भवेत् । तथा च साधनानुष्ठानवैयर्थ्यं घटशून्यतायाः पारिव्राज्यादिकारणानपेक्षत्वात् । किं चोक्तरूपे शून्यवाद्युत्प्रेक्षितमोक्षे न किंचित्प्रमाणमस्ति । तथा हि—न तावदत्र प्रत्यक्षं प्रमाणं तदगोचरत्वादुक्तरूपमोक्षस्य । नाप्यागमः, वेदाद्यागमस्य शून्यवादिना प्रमाणत्वेनानभ्युपगतत्वात्, तदीयागमस्य अस्माभिरनङ्गीकारात् । तस्मात् आत्मशून्यता पुरुषार्थः, दुःखनिवृत्त्युपयोगित्वात् शरीरादिशून्यतावत् इत्यनुमानमेव शरणीकर्तव्यम् । न चैतत्साधकं । विमतशून्यभावो न मोक्षः, अदेहत्वात् घटशून्यतावदिति प्रतिपक्षानुमानेन प्रतिरुद्धत्वात् इति बाधकसाधकभावाभावाभ्यां शून्यमतं हेयमिति सिद्धम् ॥

## विज्ञानवादनिरासः

शून्यवाद्यभिमतमोक्षवद्विज्ञानवाद्यभिमतोऽपि मोक्षो हेय एव ॥ कथम्? विज्ञानवादिनो विज्ञानं तत्त्वं, तस्यापि क्षणिकत्वं, स्वकर्मकप्रकाशकत्वलक्षणं स्वप्रकाशत्वञ्च स्वीकुर्वन्ति। नैवं शून्यवादिन इति वैषम्यात् इति च नालोचनीयम्। अस्तु विज्ञानवादस्य शून्यवादात्कश्चिद्विशेषः। तथापि सः प्रकृतानुपयोगित्वान्नादरणीय एव। मोक्षस्वरूपन्तु प्रकृतं, तच्चोभयोः समानं। प्रतिपन्नं जीवभावं विहायाद्वितीयविज्ञानत्वापत्तिर्मुक्तिरिति विज्ञानवादिनाप्यङ्गीकृतत्वात्। निराकार्यांशसाम्येन युक्त एव दूषणातिदेशः। वस्तुतस्तु न हि कश्चिद्विज्ञानवादस्य शून्यवादाद्विशेषः ज्ञानमिति विशेषस्य शब्दमात्रत्वेन हेयत्वात्। न हि ज्ञानत्वं नाम धर्मो तेनाभ्युपगम्यते। भङ्गुरत्वादिकन्तु कल्पितमिति तेनैवोक्तम्। अतोऽयं न वस्तुतो मतभेदहेतुः। अतो युक्त एवातिदेशः। तत्प्रकारस्तु अहमिति परमप्रेमास्पदतया साक्षिणानुभूयमानाकारापगमस्य तेनाप्यङ्गीकारेण तन्नाशस्य अपुरुषार्थत्वम्। तथोक्तरूपे मोक्षे अनुमानविरोध इत्यादि स्फुटोऽनुसन्धेयः। किं च मोक्षकालोऽद्वितीयज्ञानवान्न भवति। कालत्वाद्वर्तमानकालवत् इत्यनुमानान्तरमपि तत्पक्षे बाधकम्। न च तदा ज्ञानव्यतिरिक्तं किमपि नास्तीति मते किमाश्रयानुमानप्रवृत्तिरिति वाच्यम्, कालो नेत्यस्य दुर्निरूपत्वात्। कदा कालो नेति प्रश्ने परेण कृते विज्ञानवादी किमुत्तरं ब्रूयात्? निरधिकरणस्याभावस्य निरूपयितुमशक्यत्वात्। मोक्षावस्थायां कालो नेत्युत्तरोक्तौ तु मोक्षावस्था न केवल ज्ञानवती अवस्थात्वात्। संसारावस्थावदिति न्यायप्रयोगसम्भवान्नाश्रयासिद्ध्यादिदोषः। अभ्युपगम्य चेदमुक्तम्। वस्तुतस्तु मोक्षावस्थां कालाभावस्याधिकरणत्वेन वदता सा मोक्षावस्थापि कदेति केनचित्पृष्टे भावनापरिपाकोत्तरकाल इत्यवस्थाधिकरणत्वेन काल एव वक्तव्यः। न ह्येवं कदापि न प्रष्टव्यमिति नियामकमस्ति। ततः कालस्य सर्वथाऽपरिहार्यत्वात् कालाभावो नाङ्गीकर्तुं शक्य इति तदाश्रयेण प्रथमानुमानमपि निराबाधमिति न किञ्चिदनुपपन्नम्॥

## वैभाषिकसौत्रान्तिकप्रस्थाने

मतद्वयेऽपि ज्ञानमेव आत्मा। तच्च ज्ञानं स्वभावेनैव भङ्गुरं, अत एव क्षणिकं। तत्सन्तानस्तु नित्यः। तस्य स्वतो निर्विषयकक्षणिकज्ञानाख्यात्मनो अनादिवासनावशाद्यो विषयोपरक्तस्योत्पादः स संसारः। भावनाप्रकर्षवशेन वासनायामुत्पन्नायां यो विषयोपप्लवं विना शुद्धस्यैवोदयः स मोक्ष इति समानम्। सौत्रान्तिकास्तु संसारे साकारत्वं, मुक्तौ निराकारत्वं इति विशेषमाहुः। एतदपि हेयमेव—
विमतः कालो न निावषयैतद्दुज्ञानसन्तानिमान्कालत्वादिदानीन्तनकालवत्। मोक्षो न शुद्धविज्ञानसन्तानसम्बधी कालसम्बन्धित्वात्, संसारवदित्याद्यनुमानविरोधात्। पूर्ववदप्रामाणिकश्चायं मोक्ष इति॥

अथेदानीमास्तिकदर्शनानि समीक्ष्यन्ते

## सांख्यदर्शनम्

तदद्विविधं सेश्वरं निरीश्वरञ्चेति। आद्यं पतञ्जलिमुनिनिबद्धम्। द्वितीयस्तु कपिलोपज्ञम्। प्रकृत्यादिपञ्चविंशतितत्त्वानि ईश्वरश्चेति षड्विंशतितत्त्वानीति सेश्वराः। निरीश्वरास्तु ईश्वरं विहाय पञ्चविंशतिरेव तत्त्वानीति वदन्ति। द्वयोरप्यनयोर्मते दुःखात्यन्तनिवृत्तिरेव मोक्षः। उक्तञ्च सांख्यसूत्रे—
'त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इति॥

## वैशेषिकन्यायदर्शनम्

नैयायिका अपि 'बाधनालक्षणं दुःखं' इति प्रक्रम्य 'तदत्यन्तविमोक्षोऽपवर्गः' इत्यादि न्यायसूत्रपर्यालोचनया दुःखात्यन्तनिवृत्तिमेव मोक्षं व्यवस्थापयन्ति। तन्मते दुःखानि च शरीरं, षडिन्द्रियाणि, षड् विषयाः, षड्बुद्धयः, सुखं दुःखञ्चेत्येकविंशतिः। तत्र शरीरेन्द्रियार्थेषु दुःखसाधनत्वात्, सुखे च स्वर्गादिरूपेऽनित्यत्वशङ्कया दुःखानुषङ्गाद्दुःखव्यवहारो गौणः। एवमेकविंशतिदुःखानामात्यन्तिकी निवृत्तिरेव मोक्षः। निवृत्तावात्यन्तिकत्वञ्च स्वसमानाधिकरणदुःखासमानकालीनत्वं। तथा च स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसो मोक्ष इति न्यायसिद्धान्तः। "अशेषविशेषगुणोच्छेदो मोक्षः" इति वदतां वैशेषिकाणामपि इदमेव सम्मतम्॥

त्रयाणामप्येतेषामयमाशयः—मुक्तस्य सुखं न सम्भवति। तथा हि, न तावत्तत्सुखमनादीत्युपपद्यते, संसारेऽपि तत्प्रतिभासप्रसङ्गात्। न चेष्टापत्तिः, तदापि प्रतिभासमानस्यानादितायां साधनोपादानवैयर्थ्यापत्तेः। ननु अव्यक्तत्वात्संसारे न प्रतिभासते, व्यक्तत्वात्तु मुक्तौ प्रतिभासत इति चेन्न—अव्यक्तिर्हि प्रतिभासाभावो, व्यक्तिश्च प्रतिभासः। ततश्चाप्रतिभासान्न प्रतिभासते। प्रतिभासनाच्च प्रतिभासत इत्युक्तं स्यात्। किञ्च प्रतीतिकारणान्तःकरणसद्भावेऽपि संसारे न प्रतीयते, मुक्तौ तौ तदपगमे प्रतीयत इति सुभाषितम्। आवृतत्वान्न प्रतीयत इति चेन्न, मूर्तत्वाभावेन आवरणानुपपत्तेः तदनिरूपणाच्च। सुखमिव तत्प्रतीतिरप्यनादिश्चेत्किमावरणकृत्यम्? विषयविषयिभावः प्रतिबध्यत इति चेन्न, निर्विषयायाः प्रतीतेरनुपपत्तेः। सुखतत्प्रतीत्योरनादितायां प्रमितायामेव चैषा कल्पना युक्ता। न च तत्र प्रमाणं पश्यामः। ततः सुखस्य तत्प्रतीतेश्च मुक्तावुत्पत्तिरेव वक्तव्या। सापि न संभवति कारणाभावात्। शरीरे सति तदाश्रयेन्द्रियसद्भावस्तैरर्थालोचनम्। ततः पूर्वानुभूतसारूप्येणेष्टानिष्टसाधनत्वानुमानं, तस्मादिच्छाद्वेषौ, ताभ्यां प्रयत्नः, ततश्चेष्टसाधनोपादानमनिष्टसाधनहानञ्च, ततस्सुखोत्पादः, तदनन्तरं तत्प्रतीतिरित्येष दृष्टकारणक्रमः। अदृष्टञ्च सर्वत्र विजयते। न चैष कारणप्रवाहो मुक्तावस्ति। तत्सद्भावे दुःखस्यापि प्रसङ्गेन मुक्तत्वव्याघातात्। तस्मात्सुखरहित एव मोक्षः॥

कथमयं पुरुषार्थ इति चेत्, एकविंशतिदुःखात्यन्तनिवृत्तित्वादिति ब्रूमः। नन्वेवमपि दुःखनिवृत्ति पुरुषार्थ एव न भवति। तस्याः स्रक्चन्दनादिवदन्यार्थमर्थ्यत्वेन तदीयपुरुषार्थत्वस्य सोपाधिकत्वात्। दुःखाभावे सत्येव सुखं भवतीति तदर्थं हि दुःखाभावो मृग्यते, न तु स एव पुरुषस्य समीहित इति चेन्न। विपर्ययस्यापि सम्भवात्। भोजनादिसुखे सत्येव बुभुक्षादिदुःखं निवर्तत इति दुःखनिवृत्त्यर्थमेव भोजनादिसुखं मृग्यते। न पुनस्तदेव पुरुषस्य समीहितमिति कल्प्यते, क्वचित् (परवनितादौ) दुःखनिवृत्त्यभावेऽपि सुखस्येष्यमाणत्वादिति चेन्न। दुःखनिवृत्तेरपि क्वचित्सुखाभावेऽपीष्यमाणत्वात्। दुःख निवृत्तौ सत्यां सुखमेव भविष्यतीत्यभिसन्धिस्तावदस्तीति चेत् सुखावस्थायां नियतो दुःखविरहो भवतीत्यभिसन्धेस्तत्रापि सद्भावात्। तस्माद्यद्यपि दुःखाभावे सुखं, सुखे च दुःखाभावो नियतः। तथापि परस्परं निरपेक्षमेव पुरुषार्थत्वमनयोः, इच्छाया असङ्कीर्णत्वादिति। अथ भवति दुःखहानिः पुरुषार्थः, किंत्वनुभूयमानतया न हि विषादिजन्यमोहावस्थायां दुःखनिवृत्तिरिति तत्र प्रेक्षावन्तः प्रवर्तन्ते। तस्मान्मोक्षे दुःखहानेरननुभूयमानत्वान्न पुरुषार्थत्वमिति चेन्नैवम्। पुत्रादिवियोगजन्यदुःखहानिमिच्छतां केषाञ्चिद्विषशस्त्रोद्बन्धनादावपि प्रवृत्तिदर्शनात्। प्रेक्षावन्तो नैवं कुर्वन्तीति चेन्न पुरुषार्थत्वाविरोधात्। न हि परदारेषु शास्त्रनिषेधाङ्कुशवारिताः प्रेक्षावन्तो नाभिवर्तन्त इति न तत्र कामः पुरुषार्थः। अपि त्वल्पीयः सुखं महीयाननर्थ इति निवृत्तिः। तथा विषादावपि प्रवृत्तस्य शास्त्रे गर्हितत्वादल्पीयाननर्थो निवर्तते

महीयांश्च प्रवर्तेत इति न ते प्रवर्तन्ते। इयमेव हि प्रेक्षा, यत्पुरुषार्थेऽपि शास्त्रलोकविरोधपरामर्शः। स्वरूपेणेष्यमाणतामात्रनिबन्धनत्वात्पुरुषार्थतायाः। अत एव यत्र लोकशास्त्रविरोधस्तत्र व्याध्यादिपरिपीडिताः प्रयागवारिपातानशनादिनापि देहं त्यजन्तः प्रेक्षावन्तोऽपि दृश्यन्ते। न कश्चिद्दुःखमनुभविष्यामीति तत्साधने प्रवर्तन्ते। अपि तु दुःखं हास्यामीति। अपि च दुःखनिवृत्तेरनुभूयतामात्रं विवक्षितम्। दुःखनिवृत्तिसत्तापि वा। आद्यश्चेत्तुष्यतु दुर्जनः, चरमे जन्मन्यनुभूयत एव, समाधिभावादात्यन्तिकीदुःखनिवृत्तिरप्यनागता वर्तमानाप्यचिरमनुभूयत एव। द्वितीये तु प्रसक्तकण्टकादिहेतुकदुःखनिवृत्तेरपुरुषार्थत्वप्रसङ्गः सर्वदाननुभूयमानत्वात्। तथात्वे वा विषयान्तरसञ्चाराभावप्रसङ्गः, निवृत्तेस्सर्वदा तादवस्थ्यात्। तस्मात्सुखरहितो मोक्षः पुरुषार्थ इति॥

## खण्डनम्

तदपि न शोभां बिभर्ति। यद्यपि सर्वात्मनानिष्टनिवृत्तिर्मोक्ष इति तावदविवादं सर्ववादिनाम्। दुःखन्तु यादृशतादृशमप्यनिष्टमेव। तथाप्येतदीयमुक्तौ सुखनाशरूपानर्थस्यापि सद्भावान्न पुरुषार्थता। अनिष्टनिवृत्त्याशया प्रवृत्तावनिष्टनिवृत्तिभयान्निवृत्त्यापत्तेः। दुःखशबलसुखहानौ सुखशबलदुःखोपादानप्रसक्तेश्च। यदत्रोक्तम्—यस्य दुःखमुपादेयं तस्य हेयं किमुच्यताम्। हेयहीनस्य का मुक्तिः केन चाप्युपदिश्यते॥ इति तदिदमसङ्गतम्, न हि वयं दुःखस्योपादेयत्वमुपपादयामः। किन्तु समव्ययफलत्वेन विनिगमने कारणाभावान्न प्रवृत्त्युपपत्तिरिति ब्रूमः। यथोक्तम्—

असत्यानि दुरन्तानि समव्ययफलानि च। अशक्यानि च वस्तूनि नारभेत विचक्षणः॥ इति अङ्गीकृत्यैव समव्ययफलत्वमुक्तम्। वस्तुतस्तु आयादपि व्ययो गरीयानेव। न हि सांसारिकसुखस्य दुःखापेक्षयाल्पत्वं प्रमितम्। कस्मिंश्चन जन्मन्ययं दरिद्रस्सन्दुःखितो भवति, कस्मिंश्चित्सार्वभौमः, कदाचिन्नरकमनुभवति, कदाचित्स्वर्गमिति ह्यनुभवः। या च मोक्षशास्त्रेषु सांसारिकसुखनिन्दा सा निरस्तसमस्तदुःखं मोक्षगतं परमानन्दमपेक्ष्याल्पत्वाभिप्रायेणैव। लोके तावदल्पस्यापि सुखस्य हानौ महतोऽपि दुःखस्य मोक्षाय न कोऽपि यतते। सति चैवं महतस्सुखस्य हानौ अल्पदुःखमोक्षाय कः पुमान्यतेत? यदि तु जडः पाषाणनिर्विशेष एव तस्यामवस्थायामात्मा भवेत्कृतमपवर्गेण, संसार एव परमावस्था। यत्र तावदन्तरान्तरापि दुःखकलुषितमपि स्वल्पं वा सुखमुपभुज्यते। चिन्त्यतां तावदिदम्। किमल्पसुखानुभवो भद्रक उत सर्वसुखोच्छेद एव। तस्मात्सुखरहितमोक्षवादोऽनुपादेय एव॥

ननु "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति मुक्तस्य दुःखवत्सुखस्यापि हानिः श्रूयते। तथा "न प्रेत्य संज्ञास्ति" इति ज्ञानाभावश्च। अतः कथं सुखरहितमोक्षवादस्य हेयतेति चेन्न भावानवबोधात्। सर्वात्मनानिष्टनिवृत्तिर्मोक्ष इति सर्वसम्प्रतिपन्नम्। सामस्त्येन प्रियहानिश्च अनिष्टा। अनिष्टप्राप्तौ च मोक्षस्यापुरुषार्थत्वं प्रसज्येत एव। अतः प्रिये इष्टमनिष्टञ्चेति विभागः कल्प्यते। यच्च प्राकृतं अन्तःकरणपरिणतिरूपं सुखादिप्रियं तदनिष्टमेव, तस्य दुःखानुषक्तत्वात्। तदेवोक्तश्रुत्या मोक्षे निषिध्यते, न तु "बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्विभोः॥ इत्यादि श्रुतिसिद्धमप्राकृतं जीवस्वरूपभूतमानन्दादिकम्। तच्चाप्राकृतत्वेन दुःखाननुषङ्गान्निष्कण्टकं कथमप्यनिष्टं न भवत्येवेति। अनेनैव सुखस्योत्पत्तिमत्वे अभिहितो दोषोऽनङ्गीकारपरास्तो ज्ञेयः स्वरूपत्वेनानादित्वस्योक्तत्वात्। यदत्राप्युक्तं तदसत्। संसारदशायामावृतास्सन्तो मुक्तौ व्यज्यन्त इति श्रुतत्वात्।

आवरणञ्च मायाविद्यादिसमाख्याता प्रकृतिरेव। सञ्जीवस्याप्राकृतदुःखाभावाद्दुःखे न विभागः कर्तुं शक्यत इति सामस्त्येन दुःखहानिः, प्राकृतसुखादिहानिश्च उक्तश्रुत्यर्थो वेदितव्यः। 'न प्रेत्य संज्ञास्ति' इति श्रुतिरपि मुक्तकर्मकज्ञानमेव निराह, न तु मुक्तकर्तृकज्ञानम्। एवञ्च मुक्तानामसुक्तज्ञेयता नास्तीति तदर्थः। याज्ञवल्क्यमैत्रेयीसंवादान्तर्गतस्यास्य वाक्यस्य तत्प्रकरणपर्यालोचनयायमेवार्थ इति स्फुटतरमवगम्यते। विस्तरस्तु न्यायसुधायां द्रष्टव्यः। एतेनैव मोक्षं सुखरहितं वदन्तः प्राभाकरादयो मीमांसका अपि परास्ताः॥

नैयायिकैकदेशिनो भासर्वज्ञादयस्तु मोक्षेऽप्यनुवर्तमानं नित्यमानन्दमुपयन्तो आत्यन्तिकदुःखनिवृत्तिपूर्वकसुखावाप्तिर्मोक्ष इति प्राहुः॥

## अद्वैतवादः

सत्वासत्वसुखत्वदुःखत्वज्ञानत्वाज्ञानत्वभावत्वाभावत्वाद्यखिलधर्महीन (निर्विशेष) मानावेद्यत्वरूपस्वप्रकाशाद्वितीयब्रह्मस्वरूपावस्थानं मुक्तिरिति मायावादिनः। इयं च मुक्तिरर्थतः शून्यवाद्युक्तमुक्तावेव पर्यवस्यतीति न प्रेक्षावतां प्रयत्नभूमिर्भवितुमर्हति। तथा हि—मोक्षे ज्ञानं ज्ञेयञ्च नावशिष्यत इति शून्यवादी। तदेव मायिनोऽपि सम्मतम्। तत्रेयान् विशेषः, वेदप्रामाण्यानभ्युपगमान्निश्शङ्कः शून्यवादी। मायी तु वेदः प्रमाणमित्यभिमानात् "परमं साम्यमुपैति, सोऽश्नुते सर्वान्कामान्" इत्यादिवेदाच्छङ्कमानस्तमन्यथा व्याख्याय महता प्रयासेन इममेव मोक्षमङ्गीकरोति॥

एकजीववादिनो बहुजीववादिनश्चेति द्विविधा मायिनो द्विविधशून्यवादिवदेव मोक्षस्वरूपमाहुः। तच्च विवृतं प्रागेव शून्यमतप्रस्तावे॥

मायावादिनां मते शून्यवाद्यभ्युपगतसंवृतेरेव नामान्तरं मायेति। यतोऽनाद्यनिर्वाच्यत्वलक्षणमावरणविक्षेपादिकार्यञ्चोभयोरेकमेव॥

शून्यवाद्युक्तशून्यस्य मायावाद्युक्तब्रह्मणश्च मात्रयापि भिदा नोपपद्यते, उभयोरपि निर्विशेषत्वेनोक्तत्वात्। वैधर्म्यं खलु वस्तुनो भेदकम्! तच्च निर्विशेषे नास्तीति स्फुटमेव। अतः शब्दभेदमात्रं, न वस्तुभेदः। शब्दभेदस्तु अप्रयोजक एवेति। अथ "सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म" इत्यादि श्रुतिभिर्ब्रह्मणि सत्यत्वज्ञानत्वादिधर्मविधानात्कथं तस्य शून्याभेद इति चेत् शृणु—संसर्गागोचरप्रमाजनकत्वरूपमखण्डार्थत्वं वेदानामङ्गीकुर्वतो मायिनो मते सत्यत्वादयो धर्मा वेदेन न बोध्यन्ते। किन्तु असज्जडपरिच्छिन्नादिव्यावृत्तिबोध एव ततो भवतीति, एतच्च अपोहवादिनस्सौगतस्यापि संमतम्। मायावादिना ब्रह्मणः स्वीक्रियमाणमानन्दत्वादिकं न सर्वसम्प्रतिपन्नं धर्मरूपं किमपि। तथात्वे निर्विशेषब्रह्मवादस्य दत्ततिलाञ्जलिता स्यात्। किन्तु दुःखविरोधित्वमानन्दत्वं, ज्ञानञ्च जाड्यविरोधिस्वरूपमित्यादि पारिभाषिकमेव। तच्च शून्यवादिनोऽपि समानमिति मायिब्रह्मशून्ययोर्भेदकाभावात्तयोः को विशेषः। एवञ्च—माया संवृतिनाम्नैकाऽविद्योच्यतेऽविशेषतः। शून्यं ब्रह्मेति पर्यायौ निर्विशेषत्वतस्स्फुटम्॥ इति। आस्तां तावद्ब्रह्मशून्ययोर्विशेषप्रतिपादनम्। निर्विशेषयोर्विशेषोऽस्तीति प्रतिज्ञैव तावदेषा नाङ्गं धत्ते व्याहतत्वान्मे माता वन्ध्येति प्रतिज्ञावत्॥

मायावादिनो वेदस्य प्रामाण्यमङ्गीकुर्वन्ति, न शून्यवादिन इति तयोर्वैषम्योक्तिश्च न विचारसहा। यतो वेदादेरप्रामाण्यं मायिसौगतयोस्तुल्यमेव। सङ्केतमात्रेण वैषम्यं त्वप्रयोजकम्, अर्थेन द्वयोरपि

समानत्वात्। तथा हि—ब्रह्मैकमेव तत्त्वं, तदितरत्सर्वमतत्त्वं (बाध्यं) कतिपयमहावाक्यानि विना सर्वोऽपि वेदः प्रत्यक्षादिकं चातत्त्वावेदकमेव। महावाक्यान्यपि वचनवृत्त्या तात्त्विकं ब्रह्म न बोधयन्ति। ब्रह्मणः सर्वप्रमाणावेद्यत्वरूपस्वप्रकाशत्वादवाच्यत्वाच्चेति वदतां मायिनां मते वेदस्य तत्त्वावेदकतायाः क्वावसरः? एवमपि मायिना अतत्त्वावेदकं प्रमाणमिति सङ्केतितम्, न तावता वेदस्य प्रामाण्यसिद्धिः, व्याहतं खल्वतत्त्वावेदकं प्रमाणमिति। तथा च तत्त्वावेदकत्वमेव प्रामाण्यमिति सम्प्रतिपन्नम्। तदभावस्तु वेदस्योभयोस्तुल्य एव। वेदवाक्यपुरस्कारस्तु मायिनां छद्ममात्रम्। अथ जगद्ब्रह्मज्ञानमात्रबाध्यं व्यावहारिकं सदिति गीयते, न सर्वथा असत्। एवञ्च जगतोऽपि व्यावहारिकसत्वमस्ति। तथाविध-जगदावेदकत्वं वेदस्येति सदर्थविषयकत्वेन कुतोऽप्रामाण्यप्रसक्तिरिति चेन्न। व्यावहारिकमिति बाध्य-स्यैव नामान्तरत्वात्। न हि बाध्यं सद्भवितुमर्हति। सत्त्वावान्तरभेदस्तु असम्भवदुक्तिक इति श्रीमन्न्यायसुधादिग्रन्थेषु निपुणतरमुपपादितं द्रष्टव्यम्। अत्रापि बौद्धमतादविशेष एव मायिमतस्य, बौद्धेनापि जगतः व्यावहारिकसत्वापरपर्यायसांवृतसत्वस्योपगमात्। उक्तञ्च—

द्वे सत्ये समुपाश्रित्य बौद्धानां धर्मदेशना। लोके संवृतसत्यत्वं सत्वञ्च परमार्थतः॥ इति
सुगतसंवृतिरेव मायिनां मायेति नार्थभेदः॥

'तत्त्वमसि' इत्यादेर्महावाक्यस्य तत्त्वावेदकत्वमङ्गीक्रियत इति मायिनो वैदिकत्वख्यापनमपि वाङ्मात्रमेव। तत्वावेदकत्वं हि तन्मते न विषयविसंवादाभावातिरिक्तं किंचिदस्ति। वाक्यार्थस्य चाविसंवादः शून्यवादिनाप्यङ्गीक्रियत एव। तेनापि शून्यस्य स्वयमेव निर्विशेषत्वमङ्गीकृतम्। शून्यं तत्त्वमिति वदता तस्य असत्वमपि नाभ्युपगन्तुं शक्यते, किं नाम सत्यत्वमेव। शून्यमित्युक्तिस्तु निर्विशेषत्वाभिप्रायेति। एवमेव सर्वैरपि दार्शनिकैर्मायावादस्य शून्यवादसाम्यं निपुणतरमुपपादितम्। विस्तरभयान्नेह प्रपंच्यते। शास्त्रदीपिकायान्तु उक्ताद्वैतमतं विमृश्य "तद्वरमस्मान्मायावादान्माहायानिक-वादः" इति सिद्धान्तितम्॥

नन्वेवमपि अद्वैतवादो ग्राह्य एव सूत्रकारसिद्धान्तत्वात्तस्य। समयपादे विरुद्धसमयास्सर्वेऽपि निराकृताः। तत्र चाद्वैतवादो न निराकृतः। यद्ययं सूत्रकृदसम्मतः तर्हि शून्यवादादिवदयमपि वादः निराक्रियेत। न च तथा दृश्यते। अतः सूत्रकृत्संमतोऽयं वाद इति च नाशङ्कनीयम्। यतः समयपादे शून्यवादो निराकृतस्तेनैव मायावादोऽपि निरस्तः। परोच्छिष्टसङ्ग्राहकत्वात्क्षुद्रोऽयमिति भिन्नतया नोट्टङ्कितः। किञ्च नाद्वैतं सूत्रकारस्य सिद्धान्तः, तेन तस्य दूषितत्वात्। "नेतरोऽनुपपत्तेः, भेदव्यपदेशाच्च, भेदव्यपदेशाच्चान्यः, विवक्षितगुणोपपत्तेश्च, अनुपपत्तेस्तु न शारीरः, विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ, सुषुप्त्युत्क्रान्त्योर्भेदेन, शारीरश्चोभयेऽपि हि भेदेनैनमधीयते, पृथगुपदेशात्" इत्यादिसूत्रसमूहैस्तद्विरुद्धा-र्थस्य साधितत्वात्। न हि तस्य दुष्टतामननुसन्दधत्तद्विरुद्धं साधयतीति सम्भवति। न केवलमर्था-द्दूषितं, किन्तु 'नाभाव उपलब्धेः, अत एव चोपमा सूर्यकादिवत्' इत्यादिषु कण्ठतोऽपि दूषितमिति विभावनीयम्॥

तथा च मोक्षे ज्ञानज्ञेययोरनवशेषः, एकानेकजीववादद्वैविध्यं, सत्तावैविध्यं, निर्विशेषतत्त्वं, सत्वादेरसदादिव्यावृत्तिरूपता, वेदानामतत्त्वावेदकत्वं, तत्त्वावेदकस्यापि विषयविसंवादाभावरूपता, सूत्र-कृन्निराकरणञ्चेत्यादिसर्वमेव प्रमेयमद्वैतसौगतमतयोः समानमेवेति *नाद्वैतवादश्शून्यवादादतिरिच्यते।

* "........We can class together the Buddhists, Sankara and Kant so far as they agree in holding the indeterminate state to be a pure manifold. The determinations (विकल्पाः) are extraneous additions and the manifold, when schematised, gives only phenomena."

—*Towards a Systematic Study of the Vedanta* by Sarojkumar Das, (1931) p.103

शब्दभेदस्त्वकिंचित्कर इत्यनुसन्धेयम्। अतः सर्वाण्यपि शून्यवाददूषणान्यत्रातिदेष्टव्यानि। अतिदेशप्रकारस्तु उक्तसाम्यानुसन्धानवतां स्फुट एव। सुखरहितमोक्षपक्षोक्तदोषा अप्यत्रावकाशं लभन्ते। किञ्च "स तत्र पर्येति जक्षन्क्रीडन्रममाणः, सोऽनानन्दाद्विमुक्त आनन्दीभवति, सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता, यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते। कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि॥ इत्यादिश्रुतयः,

निर्गुणे ब्रह्मणि मयि धारयन्विशदं मनः। परमानन्दमाप्नोति यत्र कामोवसीयते॥,

न विष्णुसदृशं दैवं न मोक्षसदृशं सुखम्। न वेदसदृशं वाक्यं न वर्णोङ्कारसम्मितः॥" इति भागवतादिपुराणवचनानि च मोक्षे आनन्दानुभवं प्रमापयन्तीति तद्विरोधोऽप्यत्राधिको दोष इति साधूक्तं श्रीसर्वज्ञचरणैः "अनन्तदोषदुष्टश्च हेयं मायामतं शुभैः" इति॥

मुक्तानामशरीरत्ववचनानि तु प्राकृतशरीराभावाभिप्रायाणि। तेन सांख्यादिभिर्मुक्तानामशरीरत्वेन सुखाभावोपपादनं परास्तम्। तेषां दुःखानियतस्वरूपदेहस्य तथाविधकरचरणाद्यवयवस्य च श्रुतिपुराणादिषूक्तेः—"परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते, कामान्नीकामरूप्यनुसञ्चरन्, ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु। ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः॥ इत्यादिश्रुतयः, मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः।, न वर्तते यत्र रजस्तमस्तयोस्सत्वं मिश्रं न च कालविक्रमः। न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः। श्यामावदाताश्शतपत्रलोचनाः पिशङ्गवस्त्रास्सुरुचस्सुपेशसः। सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणास्सुवर्चसः॥ प्रवाळवैदूर्यमृणालवर्चसां परिस्फुरत्कुण्डलमौलिमालिनां। भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनां॥ विद्योतमानप्रमदोत्तमाभिस्सविद्युदभ्रावलिभिर्यथा नभः। श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः॥" इति भागवतादिपुराणानि चात्रानुसन्धेयानि। श्रुतौ ऋगुच्चारणादिना देहित्वं, पुराणवाक्यैः 'श्यामावदाता' इत्यादिना देहः, 'न वर्तत' इत्यत्र प्रकृत्याद्यभावोक्त्या परममुक्तित्वं, देहस्य च स्वरूपत्वं, तत एवादोषत्वञ्च प्रमापितम् इति विवेचनीयम्॥

## भास्करादिमतम्

प्राग्भिन्नस्य भिन्नाभिन्नस्य वा जीवस्य मुक्तौ परब्रह्मणात्यन्तमैक्यं भवतीति भास्करादयः॥

स्वभावत एव परमात्मना भिन्नो जीवः। तस्य संसारे भेद एव व्यक्तः, अभेदस्त्वविद्यादिनावृतो वर्तते। मुक्तौ तु द्वावपि व्यक्तौ भवत इति यादवप्रकाशादयः॥

---

"The Mahayanists distinguish two aspects of Suchness and it is a well-known fact that the Vedanta Philosophy, too, makes a similar distinction between Brahman as Sagunam (qualified) and Brahman as Nirgunam (unqualified.)

Here a very interesting question suggests itself. Which is the original and which is the copy, Mahayanism or Vedantism? Most of European Sanskrit scholars would fain wish to dispose of it at once by declaring that Buddhism must be the borrower. But I am strongly inclined to the opposite view, for there is reliable evidence in favour of it. In a writing of Asvaghosa, who dates much earlier than Sankara or Badarayana, we notice this distinction of absolute Suchness and relative Suchness (cf. '*Awakening of Faith*' p. 55 et seq.)........Sankara also makes a distinction between saguna and nirguna vidya, whose parallel we find in the Mahayanist *Samvritti* and *Paramartha Satya.*"

—*Outlines of Mahayana Buddhism* by D. T. Suzuki, 1907.

## खण्डनम्

तदुभयमप्रामाणिकं, मुक्तावपि जीवेशयोर्भेदे प्रमाणसद्भावाद्भेदे प्रमाणाभावाच्च। प्रमाणानि तु—"आनन्दमयमात्मानमुपसंक्रम्य" इत्यादीनि, "परंज्योतिरुपसम्पद्य, सोऽश्नुते......सह ब्रह्मणा" इत्याद्युक्त वाक्यानि चेति स्फुटम्॥

मोक्षो हि परमपुरुषार्थः। तमुद्दिश्यैव च सर्वाण्यपि दर्शनानि प्रवृत्तानि : अतस्तत्स्वरूपमवश्यं विवेचनीयमेव। पामरा अपि आविपालगोपालप्रमुखास्सदा 'मे सुखं स्यात्' इति स्वोद्देश्यं जानते हि। न तु वयमेव न भूयास्मेति! तदेवं लौकिकप्रवेदनीयमप्यर्थमनादृत्य, प्रमाणानि च अन्यथा व्याख्याय स्वाभिमतिमेव पुरस्कुर्वाणैरेतैर्वादिभिरुक्तो मोक्षो हेय एवेति सिद्धम्॥

## सिद्धान्तः

### मुक्तिर्नैजसुखानुभूतिः

मोक्षो हि मुक्तता (विमोचनं) आनन्दश्च मुक्तियोग्यानां स्वरूपमिति न तस्य मोक्षो युज्यते, स्वाभाविकत्वेन तस्यानपायात्। तथापि स्वरूपानन्दः अविद्यावरणप्रतिबद्धस्संसारे नानुभूयते। प्रत्युत दुःखं तन्मिश्रं लौकिकमानन्दं वा तदानुभूयत इति सुप्रसिद्धम्। तदेतत्संसारेऽनुभूयमानमस्वाभाविकं जीवस्य। अतस्तस्यैव मोक्षो युक्तः। निश्शेषमविद्यानाशे प्रतिबन्धकनिवृत्त्या स्वत एव स्वरूपानन्दानुभवो भवति भगवत्प्रसादात्। तथा च निश्शेषाविद्यानिवृत्तिपूर्वकस्वपूर्णानन्दानुभूतिरेव मुक्तिरिति निष्पन्नम्॥

न च पूर्णानन्दो हरिरेव, तत्कथं मुक्तः पूर्णानन्दानुभूतिमान्भवेदिति वाच्यं। तत्तद्योग्यतानुसारेण पूर्णत्वस्यैव विवक्षितत्वात्, लोके सरित्तटाकादीनां सर्वेषामपि स्वस्वपरिमाणानुसारेण पूर्णत्वं दृश्यते। तद्वदेव ब्रह्मजीवयोः, जीवानां परस्परञ्च तारतम्येऽपि यथायोग्यं पूर्णत्वं सर्वेषामस्त्येव। निरवधिक-पूर्णत्वोपेतस्तु हरिरेक एव। अतः साधूक्तं मुक्तानां योग्यानन्दपूर्णत्वमिति। यथा लोकेऽपि पूर्णं कुम्भं

---

"That Sankara established his illusionistic doctrine of Vedanta under Buddhist influence is at present more or less generally accepted. But we must make the difference between the radical illusionism of Sankara and Nagarjuna and the half-way illusionism of Buddhism."

—'*The Central Conception of Buddhism*' by M. Stcherbatsky, p. 42.

"........The ideas of Buddha's ontological perception in negative aspects on Nirvana corresponds exactly with that of some Upanishads. In the Katha up. V. 16 we read 'न तत्र सूर्योभाति.......' The idea as well as the mode of expression are exactly the same. In the Upanishads this mode of expression indicates the stage of 'Absolute Brahman' while in Buddha's point of view, it indicates the state of Nirvana."

—*A Historical Study of the terms Hinayana and Mahayana* by Ryukan Kimura, p. 97.

Some of Sankara's Brahmin opponents called him a disguised Buddhist. It is true that Buddhism influenced him considerably.

—*Discovery of India,* by Pandit Jawaharlal Nehru. p. 153

पूरयितुं पुम्भिर्जलान्तरं नेष्यते, तद्वदेव स्वयोग्यानन्दपूर्णैर्मुक्तैस्सुखान्तरं न वांछ्यत एवेत्ययं स्वपूर्णानन्दानुभवः पुरुषार्थेषु परां काष्ठामधिरोहतीत्यत्र न कापि विमतिः। अयमेव भोगशब्दितो मोक्षः। ततः प्राक्तनकक्ष्याश्च सन्ति। तदुक्तम्—

"कर्मक्षयस्ततोत्क्रान्तिर्मार्गो भोगश्चतुष्टयं। फलं मोक्ष इति प्रोक्तं" इति। विवृतश्च न्यायसुधायां ततश्चायमर्थः, मोक्षः कर्मक्षयादिचतुष्टयात्मकः। आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्त्योरत्रैवान्तर्भावात्। कर्मक्षयादयश्च क्रमाद्भवन्ति। ज्ञानोदयानन्तरमेव हि कर्मक्षयः, क्षीणकर्मणश्चोत्क्रान्तिः, उत्क्रान्तस्य च स्वयोग्यमार्गेण गतस्य ब्रह्मप्राप्तिस्ततो भोग इति॥

सोऽयं मोक्षश्चतुर्विधः, सालोक्यं, सामीप्यं सारूप्यं, सायुज्यञ्चेति। न हि सर्वेषामेतच्चतुर्विधो मोक्षस्सम्भवति। किन्तु तत्तद्योग्यतानुसारेणैकैक एव नियतः। भगवल्लोके यत्र कुत्रचित् स्थित्वा यथेष्टभोक्तृत्वं सालोक्यमोक्षः, मनुष्योत्तमास्तत्राधिकारिणः। सामीप्यभाजो ऋष्यादयः, भगवत्समीपे स्थित्वा यथेष्टभोक्तृत्वं सामीप्यम्। चतुर्भुजत्व, शङ्खचक्राद्यायुधवत्वसाम्यं सारूप्यमुच्यते। जयविजयादयो द्वारपास्तद्योग्याः। भगवच्छरीरं प्रविश्य यथेष्टभोक्तृत्वं सायुज्यम्। तद्भाजस्तु देवा एव। अत्र देवानां स्वस्वोत्तमप्रवेशेन परमात्मशरीरप्रवेशेन च भोगः। ब्रह्मणस्तु परमात्मशरीरप्रवेशेनैव भोगः। तदुक्तमणुभाष्ये—"उत्तरेषूत्तरेष्वेव यावद्वायुर्विमुक्तिगाः। प्रविश्य भुञ्जते भोगांस्तदन्तर्बहिरेव वा॥ वायुर्विष्णुं प्रविश्यैव भोगश्चैवोत्तरोत्तरम्॥" इति। एवं सायुज्यमुक्तानां परमात्मशरीरं प्रविश्य तत्रैव भोगाङ्गीकारेऽपि न परमात्मानन्दादिभोगः। किन्तु तत्र परमात्मानन्दादीन्परित्यज्य स्वस्वरूपानन्दादिभोग एव भवति। तेषां स्वेच्छयैव भगवच्छरीरप्रवेशनिर्गमावपि सम्भवतः। तथा च सयुजः स्वेच्छयैव परमात्मानं प्रविश्य कदाचिद्बहिश्चागत्य तत्र तत्र स्वोत्तमैकभोग्यान्कांश्चनानन्दादीन्विनान्यान् चिद्रूपान्प्राकृतांश्च भोगान्भुञ्जत इति निष्कर्षः। अत्रोपपत्त्यादिविस्तरस्तु मूलटीकाग्रन्थेभ्योऽवसेयः॥

अथ मुक्तानामपि तारतम्यसद्भावे ईर्ष्यासूयाद्वेषादिप्रसङ्गः, संसारे तथा दर्शनादिति चेन्न। मुक्तानां कामक्रोधादिदोषरहितत्वेन परस्परस्नेहस्यैव युक्तत्वात् तथाहि—ये तारतम्योपेतास्ते द्वेषादिमन्तो दृष्टा यथा लौकिकाः पुरुषा इति खल्वत्र व्याप्तिरभिधातव्या। न चैवं। लौकिकानां दोषादिमत्वे दोषित्वस्यैव प्रयोजकत्वात्। यत्र द्वेषादिमत्वं तत्र दोषित्वमिति व्याप्तेर्दर्शनात्। न च दोषित्वं मुक्तेषु सम्भवति। औपाधिका हि तेषु दोषा वक्तव्याः। स्वाभाविकानां शङ्कितुमशक्यत्वात्। ते च भगवत्साक्षात्कारोदयात्प्रागेव प्राचुर्येण गताः, साक्षात्कारेण च समूलघातं हताः। मुक्तौ चोपाधेरेवापगतत्वान्नेषदपि स्थातुमर्हन्ति। अतो व्यापकीभूतदोषित्वस्याभावाद्व्याप्यस्यापि द्वेषादेरसम्भव इति विमृश्य सिद्धान्तितं चेदं यावदधिकरणसूत्रभाष्यादौ। अनुव्याख्यानेऽपि "अधिकारविशेषेण भक्तिज्ञानसुखादिभिः। विशेषो देवतादीनां मोक्षे चैव विशेषतः॥ न तावता विरोधोऽस्ति निर्दोषत्वात्समस्तशः। आभासत्वात्परेषां तदवराणाञ्च सर्वशः॥ यतोऽवराणां सर्वेऽपि गुणाः सर्वाः क्रिया अपि। नियमेनैव पूर्वेषां सुप्रसादनिबन्धनाः। यतस्सच्छिष्यवत्तेषां नैवेर्ष्यादिः कथञ्चन॥" इत्यादिना, तद्व्याख्यानसुधायाञ्च सुष्ठूपपादितम्, मुक्ताः ईर्ष्यासूयाद्वेषादिरहिता एव तारतम्येन मोदन्त इति॥

## मुक्तानामानन्दतारतम्ये श्रुतिनिरूपणम्

"सैषानन्दस्य मीमांसा भवति। ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः। श्रोत्रियस्य चाकामहतस्य" इत्यारभ्य ब्रह्मानन्दपर्यन्तं गन्धर्वर्षिदेवादीनां प्रत्येकं पूर्वापेक्षयोत्तरस्मिन् शतगुणितानन्दाधिक्यबोधिका तैत्तिरीयश्रुतिः, "अथ ये शतं कर्मदेवानामानन्दास्स एक आजानदेवाना-

मानन्दः, यश्च श्रोत्रियोऽवृजिनोऽकामहतः" इत्यादिवाजसनेयश्रुतिः, "अक्षण्वन्तः कर्णवन्तस्सखायो मनोजवेष्वसमा बभूवुः" इत्याद्यैतरेयश्रुतिश्च तारतम्यं स्फुटं प्रतिपादयन्ति ॥

न च सांसारिकानन्दस्य विषयेन्द्रियप्रयोगजन्यतारतम्यं श्रुतिराहेति वाच्यं। संसारिणि गन्धर्वादौ तैत्तिरीयोक्ताकामहतत्वस्य वाजसनेयोक्तयोरवृजिनत्वाकामहतत्वयोश्चायोगात्। अकामहतत्वं हि कामकृतोपद्रवाभावो न त्वकामत्वं, हतशब्दवैयर्थ्यापत्तेः। स च सत्यकामस्य मुक्तस्यैवोपपद्यते। "सोऽश्नुते सर्वान्कामान्, कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि" इत्यादि श्रुतेः। अवृजिनत्वमप्यदुःखत्वमपापत्वं वा उभयमपि मुक्तस्यैव भवेत्। जीवन्मुक्तस्य च प्रारब्धपापतत्कार्यदुःखयोस्सत्वात्। श्रोत्रियत्वं च मुक्तस्यैव मुख्यप्राप्तश्रुतिफलत्वात्। "श्रोत्रियाः प्राप्तमोक्षिणः। त एव चाप्तकामत्वात्तथाऽकामहताः...॥" इति भारतोक्तेः। प्रकृतमनुष्यगन्धर्वादिपरत्वे "श्रोत्रियस्य च" इत्यत्र "यश्च श्रोत्रियः" इत्यत्र चैकवचनं समुच्चयार्थकश्चशब्दश्चायुक्तः। न हि सम्भवति वसिष्ठो ब्रह्मनिष्ठोऽरुन्धतीपतिश्च तथेति, अप्रकृतसंसारिपरत्वे तु बाधः। किञ्च प्रकृतश्रोत्रियः सर्वत्राप्येकश्चेन्मानुषादिष्वस्साधारणशतगुणितमनुष्यगन्धर्वाद्यनेकानन्दा एकस्मिन्विरुद्धाः। भिन्नश्चेदकामहतत्वादेरेकरूपतया श्रुतस्याव्यवस्थापकत्वादानन्दव्यवस्था न स्यात् ॥

किञ्च "तद्यथेह पेशस्कारी पेशसो मात्रानुपादायान्यं नवतरं रूपं तनुते, एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यं नवतरं कल्याणरूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वान्येषां भूतानां" इति श्रुतौ लिङ्गशरीराविद्यानिवृत्त्यनन्तरं पितृत्वाद्युक्त्या च तारतम्यं स्फुटमवगम्यते ॥

## तारतम्ये युक्तिविवरणम्

न्याय्यः खल्वेषोऽर्थः। "यो यदधिकसाधनवानसौ तदधिकफलवान्" इति। दृष्टश्च लोके कर्षकवणिग्राजपुरुषादिषु, वेदेऽपि आहिताग्न्यादिषु। यदि लोके वेदे च साधनाधिक्यात्साध्याधिक्यं नो भवेत्तदा केऽप्यञ्जसा यत्नं साधनातिशयानुष्ठानं न कुर्युः, किन्तु सममेव कुर्युः। इतरथा प्रेक्षावन्तो न भवेयुः। न हि द्रोणबीजावापक्षेत्रमात्रकर्षणेन यावान्धान्यलाभः तावत एव खारीबीजावापक्षेत्रकर्षणेनापि संभवे कश्चित्तत्र प्रवर्तेत। तथात्वे च मन्दस्स्यात्। एवं वैदिकेऽपि अग्न्याधानेन यावान्स्वर्गोऽश्वमेधेनापि तावत एव लाभे न कश्चिदश्वमेधे प्रवर्तेत। प्रवर्तमानो वा बुद्धिमान्नभवेत् तस्मात्साधनाधिक्यात्फलाधिक्यं युक्तमेव ॥

मुक्तियोग्यास्तु मनुष्योत्तममारभ्य चतुर्मुखान्ता बहवस्सन्ति। ते सर्वेऽपि नैकविधं साधनमनुतिष्ठन्ति। यथाधिकारमधिकाधिकसाधनानुष्ठानस्य प्रमितत्वात्। प्रमाणानि च—

दशकल्पं तपश्चीर्णं रुद्रेण लवणार्णवे। त्यक्त्वा सुखानि सर्वाणि क्लिष्टेन लवणाम्भसा ॥
शक्रेण वर्षकोटीश्च धूमः पीतोऽतिदुःखितः । वर्षायुतश्च सूर्येण तपोवाक्शिरसा कृतम् ॥
सुदुःखेन सुखं त्यक्त्वा धर्मेणाकाशशायिना। पीता मरीचयो वर्षसाहस्रमतिसादरम् ॥
अतिकृच्छ्रेण कुर्वन्ति यत्नं ब्रह्मविदोऽपि च ॥ इत्यादीनि ॥

एवञ्च देवादयो मानुषादिभ्योऽधिकमोक्षफलभाजस्तदपेक्षयाधिकतत्साधनवत्वात्। यो यदधिकसाधनवान् स तदधिकफलवान्यथा कर्षकादिः। मानुषादयो देवादिभ्योऽल्पमुक्तिफलभाजः, तदपेक्षयाल्पसाधनवत्वात्। यो यदपेक्षयाल्पसाधनवान्स ततोऽल्पफलवान्दृष्टः, यथा सम्मतः। देवादयो मानुषान्ता

मुक्तौ फलतारतम्यवन्तः, साधनतारतम्योपेतत्वात् । ये यत्साधनतारतम्यवन्तस्ते तत्साध्यतारतम्यवन्तः, यथा सम्मताः । ब्रह्मादिमानुषान्तैरनुष्ठितानि मोक्षसाधनानि तारतम्यवत्फलवन्ति, तारतम्यवत्त्वात्संमत वत् । ब्रह्मादीनां मानुषान्तानां मोक्षफलानि तारतम्यवन्ति, तारतम्यवत्साधनसाध्यत्वात्संमतवत् इत्यनुमानान्यत्र द्रष्टव्यानि ॥

## निगमनम्

तथा च भगवद्ज्ञानभोगाभ्यां निवृत्तसमस्तानिष्टकर्माणः, ये ब्रह्मनाड्योत्क्रमणेन परित्यक्तदेहाः, पूर्वमर्चिरादिना पथा वैकुण्ठलोकगतं भगवन्तं प्राप्ताः, ये च ब्रह्माण्डलये स्वोत्तमप्रवेशेन त्यक्तदेहाः स्वोचितेन पथा पुन्नामकं हिरण्यगर्भं प्राप्तास्ते सर्वेऽपि पुन्नामकेन हिरण्यगर्भेण सह विरजास्नानेन भिन्नलिङ्गशरीराः, विध्वस्तस्वगुणाच्छादिकादिप्रकृतयोऽत एवात्यन्तनिवृत्तानिष्टाः, महाप्रळये भगवदुदरे स्थित्वा पुनस्सृष्टौ भगवल्लोकाविर्भावे श्वेतद्वीपगतभगवद्दर्शनेनापगतभगवदिच्छावरकाः, सम्यगाविर्भूतानन्दादिगुणाः, भगवत्समीप एव तमुपासीनाः, स्वरूपेण वा लीलागृहीतविग्रहैर्वा सङ्कल्पमात्रसाध्यान्दिव्यभोगांस्तारतम्येन भुञ्जाना न कदाचित्पुनरावर्तन्त इत्यशेषमतिमङ्गळम् ॥

तस्माच्छ्रौतश्च यौक्तश्च मध्वस्य मतमाफलात् ।
हृद्यश्च निरवद्यश्च तत्सर्वमतिमङ्गळम् ॥

इति श्रीमद्विद्वत्कुलतिलक श्रीमद्गोविन्दकृष्णाचार्यसूनोर्वासुदेवाचार्यस्य कृतिषु मुक्तिप्रदीपः समाप्तः ॥

॥ श्रीमत्सुधर्मीन्द्रतीर्थगुर्वंतर्गतभारतीरमण मुख्यप्राणांतर्गत श्री मूलरामचन्द्रः प्रीयतां ॥

॥ श्रीकृष्णार्पणमस्तु ॥



# ॥ अक्षादि त्रितयं प्रमाणम् ॥

(प्रमाण त्रय विमर्शः)

म ॥ शा ॥ प्र ॥ वे ॥ न्यायभूषणम्
महाविद्वांसः
धारापुरं. कृष्णमूर्त्याचार्याः
न्याय प्रधानाध्यापकाः
श्रीमन्महाराजा संस्कृत महापाठशाला. मैसूरु

श्रीमद्धनुमद्भीम मध्वांतर्गत रामकृष्ण वेदव्यासात्मक श्रीलक्ष्मीनृसिंहाय नमः॥

पान्तुनः श्रीनृसिंहस्य श्रीपदाम्बुज रेणवः।
कमलाकबरीभार सुरभीकरणोद्यताः॥ १ ॥

श्रीरामं हनुमत्सेव्यं श्रीकृष्णं भीम सेवितम्।
श्रीव्यासं मध्वसंसेव्यं सर्वाभीष्टप्रदं भजे॥ २ ॥

आनन्दतीर्थ गुरुमादरतो भजामि स्वानन्ददं स्वचरणौ भजतां जनानाम्।
यद्वक्त्र निर्गलित वागमृत प्रपूरै स्तापत्रयं शममुपेति विनातियत्नात्॥ ३ ॥

माधवं पद्मनाभं च वन्दे नरहरिं यतिम्।
अक्षोभ्यंच मुनिं धीरं जयार्यंच गुरूत्तमम्॥ ४ ॥

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पाद लब्धाङ्कुरश्रीः
प्रत्नैरीषत्प्रभिन्नोजनिजयमुनिना सम्यदुद्भिन्न शाखः।
मौनीशव्यासराजादुदित किसलयः पुष्पितोयं जयीन्द्रादात्
अद्य श्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्त शाखी॥ ५ ॥

मानं विना नार्थसिद्धरित्येतत्सर्व सम्मतम्।
बहुभि र्बहुधा स्वैरं मानं तावन्निरूपितम्॥ ६ ॥

तेषु वादेषु कस्तावदौचित्यं भजते ध्रुवम्।
विमर्शास्त्विह सर्वत्र पूर्वैः पूर्वतरैः कृतः॥ ७ ॥

सङ्गृह्यतेचात्र लेशः कृष्णमूर्त्याख्य सूरिणा।
कुतोवा नूतनं वस्तुत्वहमुत्प्रेक्षितुं क्षमः॥ ८ ॥

यत्प्रमाणैरवगतं तदेवात्र निगद्यते।
नोत्प्रेक्ष्यते मया किञ्चिन्नाधिक किञ्चिदुच्यते॥ ९ ॥

इह खलु सर्वोपि जनः बहुतर दुःखसम्पृक्तमपि सुखखद्योतिकामात्रं परमपुरुषार्थं मन्यमानः, इदं सुखसाधनम्, इदंच दुःखसाधनमिति विवेचयितुमपर्याप्तशक्तिः, जनि मृति व्याध्यादि बहुविचित्रतरानर्थ परिपूर्णे दुस्तर भवाम्बुधौ मग्नः, प्रियाप्रिय वियोग सुयोगजन्म शोकाग्निना नानायोनिषु दन्दह्यमानः, उच्चावच नानायोनिषु बम्भ्रम्यमाणः, सर्वदा दुःखमनुभवन्नास्ते इत्येतत् सर्वेषां नहृदयपथारूढम्; लोकश्चैवमनवरतं दुःखाम्बुधौ निमग्नो माभूत्, अपितु अनिष्टनिवृत्तिपूर्वकेष्टप्राप्ति (आत्यन्तिक दुःख निवृत्तिपूर्वक नैजसुखानुभूति) रूप निश्रेयसभागी स्यादिति अनुपम नैसर्गिक दयार्द्रचेताः श्रीमत्समीरणः श्रीमन्नारायणेनाज्ञापितः, अवतीर्णश्चेह भूतले "श्रीमदानन्दतीर्थ भगवत्पादाचार्या" इति प्रकृतिरमणीयेन नाम्ना प्रख्यातः, चार्वाक बुद्धाद्यनेक नास्तिकमत निरसनपटुतमाम् अशेषानर्थ निदान मूर्धाभिषिक्त नानाविध मिथ्याज्ञान निरासक तत्वज्ञानोत्पादनेन निश्रेयस सम्पादन पटीयसींच सप्तत्रिंशद्ग्रन्थरूपामाध्यात्मिकविद्यां प्रणिनाय। अस्या आन्तमलोडनेन निर्धारितस्य सारतमांश नवकस्य सङ्ग्राहकं पद्यमेकं व्यरचि केनचिद्योगिवर्येण ॥

"श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्वतो। भिन्ना जीवगणा हरेरनुचरा नीचोच्च भावङ्गताः॥ मुक्ति नैजसुखानुभूतिरमला भक्तिश्च तत्साधनं। ह्यक्षादित्रितयं प्रमाणमखिलाम्नायैक वेद्यो हरिः" इति ॥

यद्यप्यत्र पद्ये प्रतिपाद्यमानानां नवानां विषयाणां सारतमांशानां सप्रमाणं विवेचनमवश्यं कर्तव्यम्। अथापि सर्वस्यापि विषयस्य प्रमाणसापेक्षत्वात् प्रमाणतत्वमत्रलेशतो यथामति निरूप्यते ॥

प्रमाणविषये बहवो बहुधाविवदन्ते

"प्रत्यक्षमेकं चार्वाकः कणादसुगतौ द्वयम्।
प्रत्यक्षमनुमानंच साङ्ख्याः शब्दंच तेपि॥
तैःसहैवोपमानं तु गौतमन्याय दीक्षिताः।
अर्थापत्त्यासहैतानि चत्वार्याह प्रभाकरः॥
अभाव षष्ठान्येतानि भट्टस्तदवलम्बिनः।
सम्भवैति ह्ययुक्तानि तानि पौराणिकाजगुः॥"

तत्र तावच्चार्वाकमतरीत्या प्रमाणविचारः प्रारभ्यते तथाहि—प्रत्यक्षमेकमेव प्रमाणम्, अनुमानादिकमप्रमाणमिति वदतश्चार्वाकस्यायमाशयः। यावज्जीवं सुखेनाऽत्रलोके जीवनमेव परमपुरुषार्थं मन्यमानः, यावज्जीवं सुखजीवनस्य परस्वापहरण परदारगमनादि निषिद्धकर्माचरणेन विनायोगात् प्रभुसम्मिता रूपागमस्य तन्मूलकानुमानस्यच प्रामाण्यं दूरोत्सारितवान्। तयोः प्रामाण्यानुमोदे वेदविहित तत्तद्वर्णाश्रमोचित कर्माचरणस्याऽऽवश्यकतया बहुतर कायक्लेश सहिष्णुता आवश्यकी स्यात्, बहुतर कायक्लेशः कदापि माभूत्। अपितु उच्छृङ्खलो लोको विहरेदिति अतिविस्तृत दयार्द्रबुध्या आगमानुमानयोः प्रामाण्यमपह्नुते ॥

किंच आगमोनुमानंच न कथंचिदपि प्रमाणकोटिं प्रवेष्टुमीष्टे इतिच तस्याभिमानः। सचाभिमानः किंचिदिव प्रकाश्यते तथाहि—चक्षुरादीन्द्रियमिव व्याप्तिपक्षधर्मतावच्छिन्नं स्वरूपसत्

(अज्ञायमानं) न साध्यानुमापनस्य ईष्ट, अपितु व्याप्तिपक्षधर्मतावत्तया निश्चितमेवेति अनुमानप्रामाण्य बद्धादराणां नैयायिकादीनामविप्रतिपन्नम्, अत्र प्रष्टव्यम्, साध्येन हेतोर्व्याप्तिरव्यभिचरितसम्बन्धरूपा किं बाह्येन्द्रियेण शक्यनिर्णया? उतान्तरेणान्तःकरणेनेति? नाद्यः, तस्य वर्तमान कतिपय सन्निकृष्ट-ग्राहिता स्वाभाव्यात्, असन्निकृष्ट धूमधूमध्वजप्रत्यक्षस्यास्मदादीनामसर्वज्ञानां कथंचिदपि सम्पादयितुं दुःशकत्वेन सर्वोपसंहारवत्या व्याप्तेर्दुज्ञानत्वात्। नापि द्वितीयः, अन्तःकरणस्य बाह्यार्थप्रकाशने बह्यन्द्रियरूप करावलम्बन नैरपेक्ष्येणासामर्थ्यात्। तदुक्तम्, "चक्षुराद्युक्त विषयं परतन्त्रं बहिर्मनः" इति॥

नाप्यनुमानं व्याप्तिग्रह सम्पादनायालम्, तत्राण्यनुमाने व्याप्तिग्रह सम्पादनायानुमानान्तर-मन्वेषणीयं, तत्राप्येवं, तत्राप्येवमिति अनवस्था वज्रलेपस्य दुर्निवारत्वात्॥

शब्दो व्याप्तिनिश्चयं सम्पादयितुं प्रभवतीत्यपि न हृदयंगमम्। बौद्ध काणाद मतानुसारेण तस्यानुमानानतिरिक्तत्वात्। तस्यानुमानादर्थान्तरत्वेपि शब्दानां समयग्रहणाय वृद्धव्यवहारस्य लिङ्ग विधयाऽपेक्षणात्, व्याप्तिपक्षधर्मतावत्तया निश्चितस्यैव लिङ्गस्य साध्यानुमिति जनन समर्थत्वेन, तत्र व्याप्ति ग्रहण दौर्घट्यस्य प्रागुक्तरीत्या वज्रलेपायितत्वात्। वह्न्यविनाभावी धूम इति कस्यचिदुपदेश एव व्याप्तिग्रहणोपायोस्तु, इत्यपि न समीचीनम्। तथाविध वाक्ये विश्वासाभावात्। अज्ञाताविनाभावस्यापि लिङ्गस्य दर्शनेन साध्यानुमितौ घटदर्शनेन पटानुमितिरशक्यवारणा स्यात्॥

इत्थंच स्वार्थानुमान कथाया एव दूरतो निरासे परार्थानुमान मनोराज्यस्य कथाशेषता किमु वर्णनीया॥

एवं शब्दोपि अप्रमाणम्, अनृत व्याघात पुनरुक्तदोषेभ्यः अनृतदोषादप्रमाणं यथा— "पुत्रकामः पुत्रेष्ट्या यजेत" इति श्रुति वाक्यम्, पुत्रेष्टौ अनुष्ठितायामपि पुत्रानुत्पादनात् अनृताभिधायित्वात्। व्याघातादप्रमाणं यथा 'उदिते होतव्यम्', 'अनुदिते होतव्यम्', 'समयाध्युषिते होतव्य' मिति विधाय, विहितं व्याहन्ति, श्यावोस्याहुतिमभ्यवहरति यउदिते जुहोति, शबलोस्याहुतिमभ्यवहरति योनुदितेजुहोति, श्याव शबलावस्याहुतिमभ्यवहरतः यः समयाध्युषिते जुहोति" इति परस्पर विरुद्धार्थाभिधायित्वात्। पुनरुक्त दोषादप्रमाणं यथा—अभ्यासोद्देश्यमाने "त्रिःप्रथमामन्वाहत्रिरुत्तमाम्" इति, पुनरुक्तंच प्रमत्त वाक्यम्, तस्मादप्रमाणं शब्दः। नच एतेषामुदाहृत वाक्यानामप्रामाण्ये सत्यपि अशेषवेदस्य कथमप्रमाण्यं वक्तुं शक्यमिति वाच्यम्। अत्रोदाहृत वाक्यदृष्टान्तेन वाक्यत्वेन हेतुना निखिलाम्नायस्याप्रामाण्य साधनस्य सुशकत्वादिति॥

## अत्रमतिविधीयते

तथाहि—आगमानुमानयोरप्रामाण्ये "दर्शनदशायां भावनिश्चयात्, अदर्शन दशायामभावाव-धारणात्। तथाच गृहान्निर्गत श्चार्वाको वराको निवर्तेत, प्रत्युत पुत्रदार धनाद्यभावावधारणात् सोरस्ताडं शोकविकलो विक्रोशेत्" इति कुसुमाञ्जलौ परिहासितश्चार्वाक उदयनाचार्येण॥

अन्येच अनुमानादिकमप्रमाणमिति वदतश्चार्वाकस्य क्वापि इष्टानिष्टसाधन ज्ञानाभावाज्जीवन-मेवानुपपन्नमिति प्राहुः। एतेषामयमाशयः, तथाहि—आपणे यत्र क्वापि अद्य पर्यन्तमदृष्टवस्तुनः फलस्य

अन्यस्यावा चक्षुषा, अन्येन वा इन्द्रियेण साक्षात्कारेपि तत्र इष्टसाधनत्वमतीन्द्रियकालघटित मूर्तिकं चक्षुषा, अन्येनवा इन्द्रियेण साक्षात्कर्तुं न प्रभवति लोकः। नकोपि स्वस्थात्मा इष्टसाधनमिदमित्यनवगम्य भोक्तुं तद्विक्रीणीत। अपितु इष्टसाधनमिदमिति ज्ञात्वैवेति सर्वानुभव साक्षिकम्। तथाच क्वापि इष्टसाधनताज्ञानस्य चक्षुरादीन्द्रियेण जननासम्भवात् इदं प्रथम दृष्टिपथंगतानि अज्ञायमानेष्टसाधनभावानि बहूनि उपादेयानि वस्तूनि भोक्तुं न परिगृह्णीत लोकः। प्रत्यक्षेण दुरवगमेष्टसाधनभावेष्वपि बहुत्र प्रयतनान्यथानुपपत्या अप्तोपदेशेन, तन्मूलकानुमानेन वा जनितम् "इष्टसाधनमिदम्" इति ज्ञानं प्रवृत्तेः प्राक् अकामेनापि अङ्गीकरणीयं चार्वाकेणापि॥

किमत्र बहूक्तेन, प्राप्तयौवनौ स्त्रीपुंसौ इदं प्रथमेव्यवाये नप्रवर्तेताम्। मैथुनस्याद्यपर्यन्तमननुष्ठानात्। तत्रसुखसाधनत्वस्य केनापि इन्द्रियेण ज्ञातुमशक्यत्वात्, तत्र इष्टसाधनतत्वग्राहकागमानुमानयोः प्रामाण्यानङ्गीकारात्, तथाच चार्वाकमते परमपुरुषार्थत्वेनाभिमतस्य अङ्गनालिङ्गनादिजनित सुखविशेषस्य स्वर्गापरपर्यायस्य विलोपप्रसङ्गो महत्तरं दूषणं दुरुद्धरमिति॥

यत्तु इष्टसाधनत्वं न कालघटित मूर्तिकम्, अपितु अतिरिक्तपदार्थः, अत इदं प्रथमदृष्टिपथंगतेष्वपि वस्तुषु रमणीयत्वोपाधिमहिम्ना चक्षुरादीन्द्रियेण इष्टसाधनत्वावगमो लकस्य नैसर्गिक इति, तत्तु न समीचीनम्। अनिष्टसाधनेष्वपि बहुत्र विषकन्यकादिषु रमणीयत्वोपाधिमहिम्ना चक्षुरादिना इष्टसाधनत्वावगम प्रसङ्गः, तथा तत्र इष्टसाधनत्वावगमे रत्यादिकार्याचरणस्यावश्यकतया मरणस्यापरिहार्यत्वात् इति। तथाच ईदृशानेकानर्थ भाजनोपदेशकर्ता चार्वाक इति तं निन्देदेव अशेषोलोकः॥

व्याप्तिनिश्चयः कथंचिदपि नशक्यसम्पादन इति यदुक्तं तन्नचारु—यथायथं प्रत्यक्षानुमानागमैः व्याप्तिग्रहसम्पादनस्य सुशकत्वात्। तथाहि, धूमस्याग्निना व्याप्तिज्ञानं प्रत्यक्षेण जायते, व्याप्तिर्नाम—नियतसाहचर्यम्, अव्यभिचरितः सम्बन्ध इति यावत्। एतदवगाहिप्रत्यक्षस्य भूयोदर्शनम्, व्यभिचार दर्शनाभावः, उपाध्यभाव निश्चयश्च त्रयः सहकारिणः। भूयोदर्शनम्—महानसादौ बहुत्र वह्निधूमयो दर्शनम्। व्यभिचार दर्शनाभावः—अद्यपर्यन्तं वह्निविना धूमस्य क्वाप्यदर्शनम्। उपाध्यभावनिश्चयः—यस्त्वग्नेर्व्यापको धूमस्यत्वव्यापकः कश्चिदुपलभ्येत, स स्वयं व्यावर्तमानः धूमस्याग्निसम्बन्धं व्यावर्तयितुं प्रभवेत्, सनास्त्येवानुपलब्धेः। यदि अतीन्द्रियः कश्चन स्यात् तदा सप्रमाणान्तरवेद्यो भवेत्, नहि प्रमाणसामान्यागोचरोपि उपाधिः शङ्कापथमध्यधिरोहति। एवं विमर्शेन नात्रोपाधिरस्तीति निर्णयः शक्यसम्पादन एवेति निरुक्तभूयोदर्शनादि सहकारिकारणत्रय सहकृत प्रत्यक्षेण व्याप्तिज्ञानं सुलभमेव॥

वर्तमान सन्निकृष्टमात्रग्राहि प्रत्यक्षं कथमतीतानागतासन्निकृष्ट धूमधूमध्वजेषु अव्यभिचरित सम्बन्धरूपां व्याप्तिं गृह्णीयादिति चेन्न। दावदग्धवेत्रबीजे कदलीकाण्डोत्पादकशक्तेरिव सहकारिविशेषसामर्थ्येन करणानां शक्त्यन्तराविर्भावस्य स्वीकारे बाधकाभावात्॥

सामान्यलक्षणप्रत्यासत्तिम्, अनुगतजातिंचाङ्गीकुर्वतां नैयायिकानां मते अतीतानागतासन्निकृष्ट वह्निधूमेषु अव्यभिचरित सम्बन्धज्ञानमति सुलभम्॥

सामान्यलक्षण प्रत्यासत्तिमनङ्गीकुर्वतां मते अतीतादिना सादृश्यरूप प्रत्यासत्तिसम्भवात् सर्वोपसंहारवत्या व्याप्तेज्ञानं सूपपादमेवेत्यपि वदन्ति॥

व्याप्तिनिश्चायकमनुमानं यथा— प्राणादिमत्वं सात्मकत्वव्याप्यं सात्मकत्वाभावव्यापकीभूताभाव प्रतियोगित्वात्, योयद्भावव्यापकीभूताभावप्रतियोगी, स तद्व्याप्यः, यथा वह्निव्याप्यो धूमइ ति "यो ब्राह्मणो न सहन्तव्यः", "या गौः सा न पदास्प्रष्टव्या" इत्यादि व्याप्तिनिश्चयः', "ब्राह्मणो न हन्तव्यः गौ र्नपदास्प्रष्टव्या" इत्याद्यागमजन्य इति ॥

शब्दो न प्रमाणम्—अनृत व्याघात पुनरुक्तदोषेभ्य इति यदाशङ्कितं तदपि नसम्यक्—

अनृताभिधायित्वात् "पुत्रकामः पुत्रेष्ट्या यजेत" इति वाक्यमप्रमाणमिति कथनमयुक्तम्— कर्तृवैगुण्ये, कर्मवैगुण्ये साधनवैगुण्येवासति अविधिनाकृतमकृतंभवतीति वचनप्रामाण्यानुरोधेन केनचिदनुष्ठित पुत्रेष्टेः फलादर्शनमात्रेण श्रुतेरप्रामाण्यकल्पनाऽयोगात् ॥

व्याघातात् "शावोस्याहुतिमभ्यवहरति यउदिते जुहोति" इत्यादि वाक्यमप्रमाणमिति भाषणं नसम्यक्, योऽभ्युपगतकालमतिक्रम्य अन्यस्मिन्काले जुहोति तत्र दोष उच्यते । विधिभ्रंशे निन्दा-विधानात्, परस्पर व्याहतार्थाभिधायित्वाभावात् अप्रमाण्यशङ्काया एवायोगादिति ॥

पुनरुक्तदोषात् "त्रिः प्रथमामन्वाहत्रिरुत्तमाम्" इति वाक्यमप्रमाणमित्यपि नचारु । यागेऽग्नि सामिन्धनार्थाः सामधेनीनामका एकादशसङ्ख्याका ऋचः वेदे प्रसिद्धा एव, तत्र श्रूयते "पञ्चदश-सामधेनीस्त्वाह" इति । एकादशानामृचां पञ्चदशत्वञ्च प्रथमान्त्ययोःऋचोः त्रिरभ्यासेन सम्पद्यते। तदेवोक्तं "त्रिःप्रथमामन्वाहत्रिरुत्तमाम्" इत्यनेन । इत्थंचात्राभ्यासस्य सार्थकत्वात्, सार्थकाभ्यासस्य दोषत्वानभ्युपगमादिति ॥

वेदैकदेश दृष्टान्तानां प्रामाण्ये व्यवस्थापिते सति एतद्दृष्टान्तबलेन निखिलाम्नायस्याप्रामाण्य-साधनप्रयतनञ्च चार्वाकस्य दूरोत्सारितमिति किमुवक्तव्यम् । अनेक दोषकलुषितत्वात् प्रत्यक्षमेकमेव प्रमाणमिति वादश्चार्वाकस्य निर्युक्तिको हेय इति ॥

श्रीमद्भगवत्पादै श्चार्वाकमतदूषणसर्वस्वं सङ्गृहीतमनुव्याख्याने "चार्वाकैरुच्यतेमानमक्षजं ना परं क्वचित् । देह आत्मापुमर्थश्च कामार्थाभ्यां विना नहि । यद्येवं दर्शनेनास्य कोर्थः प्रत्यक्षगोचरः । लब्धस्तेनैव हि नरैः शास्त्रात्किं मोहनं विना । स्वपरार्थ विहीनत्वात्स्वमतेनैव निष्फलम् । किमित्युन्म-त्तवच्छास्त्रं वृथा प्रलपति स्वयम् । देहादन्योनुभवत आत्माभाति शरीरिणाम् । मम देह इति व्यक्तं ममार्थ इतिवत्सदा । प्रत्यक्षस्यैव मानत्वमिति केनावसीयते । यदि तत्साधकं वेद प्रामाण्येन कथं भवेत् । नचान्या मानता क्वापि प्रमाणेनावसीयते । स्वमते नार्थरहित उपेक्ष्यः पक्ष ईदृशः" इति एवं तत्त्वनिर्णयादावपि दूषणं निरूपितमस्ति ॥

## प्रमाणविषये बौद्धवैशेषिकमत विमर्शः

बौद्धा वैशेषिकाश्च प्रत्यक्षमनुमानंचेति प्रमाणद्वितयमेवेत्यातिष्ठन्ते तत्र तथागतानामाशयः लेशतो निरूप्यते, तथाहि—विषयस्य प्रत्यक्षपरोक्ष भेदेन द्वैविध्यात् तृतीयराशेरभावात् विषयानुगुण्येन प्रमाणमपि द्वयमेव प्रत्यक्षमनुमनंचेति, तदुक्तं न्यायमञ्जर्याम्—

तेहि प्रमेयद्वैविध्या त्प्रमाणं द्विविधं जगुः ।
नान्यः प्रमाणभेदस्य हेतु र्विषयभेदतः ॥ इति ॥

वैशेषिकाणांतु अस्येदं कारणमित्यादि सूत्रेणानुमानलक्षणमभिधाय "एतेन शाब्दं व्याख्यातम्" इति सूत्रयतांभावः स्पष्टंज्ञायते तथाहि—शब्दो ज्ञानजननसमर्थ एव, अथापि "एतानि पदानि स्मारितार्थ संसर्ग ज्ञान पूर्वकाणि—आकाङ्क्षादिमत्पद कदम्बकत्वात्, भूतले घटोस्तीति वाक्यवत्" इत्यनुमानेन साध्य शरीर प्रविष्टतया पदार्थसंसर्गावगाहि प्रतीतिरूपागमफलं सिद्ध्यतीति शब्दः अनुमानभावमेव भजते, नानुमानातिरिक्त प्रमाणपदवीमधिरोढुमीष्टे इति ॥

प्रथमतस्तथागतमतं निरस्यते—तथाहि—प्रत्यक्षपरोक्षविषयो द्विविध एव नतु तृतीयराशिरस्तीति वदन् प्रष्टव्यः, तृतीयविषयासत्त्वनिर्णयः किं निर्विकल्पकेन प्रत्यक्षेण शक्यसम्पादनः ? उत सविकल्पकेन प्रत्यक्षेणेति । नाद्यः, निर्विकल्पकस्य विशिष्टवैशिष्ट्यानवगाहित्वेन वस्तुव्यवस्थपन शक्तिवैधुर्यात्, सविकल्पकस्यैव वस्तुव्यवस्थापनस्वाभाव्यात् । नापि द्वितीयः—सविकल्पकस्य तन्मतेऽप्रमाणत्वात्, अप्रमाणस्य वस्तुव्यवस्थापकतायाः क्वाप्यदर्शनात् । तदुक्तं न्यायमञ्जर्याम् ॥

"यत्तावदिदमाख्यायि राश्यन्तर निराकृतौ ।
प्रत्यक्षस्यैव सामर्थ्यमित्येतन्नोपपद्यते ॥
पूर्वापरानुसंधान सामर्थ्य रहितात्मना ।
भारः कथमयं वोढु मविकल्पेन पार्यते ॥" इति

अतएवानुमानेनापि तृतीयराशेरभावनिर्णयो न भवितुमर्हति । अनुमानसामान्यस्य विशिष्टवैशिष्ट्यावगाहित्वात् सविकल्पकत्वनियमेन तन्मते सविकल्पकसामान्यस्य प्रमाणत्व नियमात्-अप्रमाणस्य वस्तुव्यवस्थापकत्वायोगात् ॥

अपिच प्रत्यक्ष परोक्ष भेदेन विषयस्य द्वैविध्यात् प्रत्यक्षमनुमानंचेति प्रमाणं द्विविधमेवेत्युक्तिः नयुज्यते । यथानुमानविषयतयापरोक्षत्वं विषयस्य सम्प्रतिपन्नं, तथा शब्दविषयतयापि परोक्षत्वाभ्युपगमे बाधकाभावात्, उभयथापि परोक्षव्यवहारस्याभियुक्तानुभवमूलस्य दुरपह्नवत्वात् ॥

किंच निर्विकल्पकस्य प्रत्यक्षस्य वस्तुस्वरूपावगाहिन एव प्रामाण्यमङ्गीक्रियते तथागतेन, एतच्च निर्विकल्पक निरासावसरे निरसिष्यते ॥

सविकल्पकस्य प्रत्यक्षादेः सांवृतव्यावहार्यापर पर्याय मिथ्यावस्त्ववगाहन स्वाभाव्यादप्रमाण्याङ्गीकारे विपुलं दूषणमुद्भावि वार्तिके—

"तस्माद्यन्नास्ति नास्त्येव यच्चास्ति परमार्थतः ।
तत्सत्यम्, अन्यन्मिथ्यैव न सत्यद्वय कल्पना ॥ १ ॥
तुल्यार्थत्वेपि तेनैव मिथ्यासंवृति शब्दयोः ।
वञ्चनार्थमुपन्यासो लालावक्त्रासवादिवत् ॥ २ ॥
प्रतियोगिनि दृष्टेव जाग्रज्ज्ञाने मृषा भवेत् ।
स्वप्नादि बुद्धिमिथ्यात्व तव भेदोपि किं कृतः" ॥ ३ ॥ इति

आदिम श्लोकद्वयं सुबोधार्थमिति नव्याख्यायते । अन्तिम श्लोकार्थः नातीव सुबोधः, अतो विव्रियते। प्रतियोगिनि—स्वाप्नगजादि ज्ञानविरोधिनि, जाग्रज्ज्ञाने—जाग्रत्कालीन गजाद्यभावज्ञाने, दृष्टे—प्रामाणिके सति, अस्माकं-सत्यमिथ्याविवेकवताम्, स्वप्नादिबुधिः—स्वाप्नगजादिबुद्धिः, मृषा—मिथ्यार्थावभासिका भवेत्, तव—सर्वमिथ्यात्ववादिनः, स्वाप्नजाग्रज्ज्ञानयोर्भेदः, किंकृतः-किंनिवन्धनः,। बाधकत्वेनाभिमतस्य जाग्रद्गजाद्यभावज्ञानस्यापि मिथ्यार्थावभासत्वात् स्वाप्नगजादेर्मिथ्यात्वं नसिध्यतीति भावः इति ॥

अतः प्रमाणविषये तथागतापेक्षया प्रत्यक्षस्य सविकल्पकस्य यथावस्थितार्थावगाहित्वं वदन् चार्वाक एव अत्यन्तं माननीय इत्यत्र नविषयलेशोप्यस्तीति आस्तिक तन्त्रिकाणां सघण्टाघोषं भाषणं समुचितमेवेति। यद्यप्यत्र वहुवक्तव्यमस्ति तथापि ग्रन्थगौरवभयान्नेह वितन्यते ॥

कणादमतं प्रमाणविषये लेशतो विमृश्यते।गौतमो न्यायशास्त्रप्रवर्तकः "शब्दोनुमानमर्थस्यानुपलब्धेरनुमेयत्वादि" त्यादि सूत्रैः शब्दस्यानुमानत्वमाशङ्क्य, "आप्तोपदेश सामर्थ्यार्दर्थसम्प्रत्ययः" इत्यादि सूत्रेण अनुमानानन्तर्भावं सयुक्तिकं समर्थयामास । अयमाशयः, गृहीतसङ्गतेः पुरुषस्य शब्दसम्प्रत्ययसमनन्तरं व्याप्तिपक्षधर्मताज्ञानादि गहनप्रवेशं विनैव पदार्थसंसर्गावगाहिज्ञानोत्पादस्य, अस्माद्वाक्यादमुं विशिष्टार्थं शाब्दयामीत्यनुभवस्यच सर्वानुभवसिद्धस्य दुरपह्नवत्वात् शब्दस्यानुमान विधया वाक्यार्थप्रत्यायकत्ववादः कणादस्य नक्षोदक्षमः।अपिच, इदंवाक्यं संवादि आप्तवाक्यत्वादित्यनुमानेनैव वाक्यार्थज्ञानमागमफलं निर्वहीतीत्यपि नसम्यक्, वाक्यश्रवणसमनन्तरं गृहीतसङ्गते वाक्यप्रयोक्तरि आप्तत्वज्ञानानपेक्षणेनापि पदार्थसंसर्गावगाहिप्रत्ययस्य आविगोपालानुभव सिद्धस्यापलापे वहुतर लोकविरोधस्य जागरूकत्वात् इति । तदेतत्सर्वं सङ्गृहीतं प्रमाणलक्षण टीकायाम् ॥

"प्रत्यक्षानुमाने एवेति कणादः सौगताश्च, तेषां किमागमो नबोधकः, बोधकोपिवा नयथार्थः, यथार्थोपित्रान्यतरान्तर्भूतः, पक्षत्रयमप्यनुभव विरुद्धमिति" इति ॥

## प्रमाणत्रय वादस्य औचित्य समर्थनम्

अथ साङ्ख्याः, भासर्वज्ञश्च प्रत्यक्षमनुमानमागमश्चेति त्रीण्येव प्रमाणानीति प्रतिपद्यते । द्वैतिनः अयमेव स प्रमाणः रमणीयः पन्था इति जानते। एवमन्येपि ॥ एषामयमाशयः उपमानार्थापत्त्यनुपलब्धि सम्भवैतिह्यादीनि प्रत्यक्षानुमानागमेषु यथायथमन्तर्भवन्ति, प्रत्यक्षादि त्रितयातिरिक्त प्रमाणपदवीं नाधिरोहन्तीति तेषामन्तर्भाव प्रकाराश्च क्रमशः सङ्क्षेपेण निरूप्यन्ते ॥

## उपमान विषये विमर्शः

शाबराः पुनः सादृश्यप्रमासाधनमुपमानं त्रिविधं मन्यन्ते तत्राद्यं यथा—गृह्यमाणानुयोगिक स्मर्यमाणप्रतियोगिक सादृश्यप्रमासाधनं, दृष्टगुःकश्चन कदाचिद्विपिनं गतः गवयमपश्यत्, अस्मार्षीच्च तत्सदृशींगाम्, एक सम्बन्धि ज्ञानस्यापरसम्बन्धि स्मारकता स्वाभाव्यात्। अनन्तरंच गोसदृशोयंगवय इति प्रमिणोतीति यत्, तदेव ज्ञानमुपमितिरितिगीयते। तत्करणं पूर्वकालिकं ज्ञानमुपमानमिति भण्यते॥

द्वितीयमुपमानं यथा—गृह्यमाण प्रतियोगिक स्मर्यमाणानुयोगिक सादृश्यप्रमासाधनं स्मर्यमाणप्रतियोगिक गृह्यमाणानुयोगिक सादृश्य ज्ञानम्। गां दृष्ट्वा वनं गतस्य गोसदृशोयं गवय इति ज्ञानं

समजनि, पश्चात् गवयसदृशो गौरिति प्रत्येति । इयमेव प्रतीति रूपमतिः । तत्करणं पूर्वतन गोसदृशोयं गवय इति ज्ञानमुपमानमिति कथ्यते । तृतीयमुपमानं यथा—साहश्यप्रमासाधनं निर्दोषवाक्यं यथागौस्तथा गवय इति ॥

तदेतन्नहृदयंगमम्—प्रत्यक्षानुमानागमेषु यथायथमन्तर्भावान्निरुक्तोपमानानाम् । अन्तर्भाव-प्रकारश्चेत्थम्—प्रथममुपमानं प्रत्यक्षे, तृतीयमुपमानम् आगमेऽन्तर्भवतीति सुस्पष्टं विदितं भवति । द्वितियोपमानस्यतु अनुमानेऽन्तर्भावप्रकारो निरूपणीयोऽवशिष्यते । तत्प्रकारश्चेत्थम्—"गौर्गवय सदृश; (गवय प्रतियोगिक सादृश्यानुयोगी) गवयानुयोगिक सादृश्य प्रतियोगित्वात्, यो यदनुयोगिक सादृश्य प्रतियोगी सतत्प्रतियोगिक सादृश्यानुयोगी—यथा यमो यमान्तरेण सदृशः" इति ॥

## नैयायिकाभिमतोपमानविषये विमर्शः

गौतम न्यायावलम्बिन एवोपमानमतिरिक्तं प्रमाणं ब्रुवते, नतु काणादाः । उपमानस्वरूपंच पूर्वं निरुपितादन्यथैवाचक्षते यथाहुः—

"अव्युत्पन्न पदोपेत वाक्यार्थस्यच संज्ञिनि ।
प्रत्यक्ष प्रत्यभिज्ञानमुपमानमिहोच्यते ॥ १ ॥
तत्रातिदेश वाक्यार्थस्त्रिविधः परिकीर्तितः ।
साधर्म्य धर्ममात्रंच वैधर्म्यंचेति भेदतः ॥ २ ॥
प्रमेयं तस्य सम्बन्धः संज्ञायाः संज्ञिना सह ।
तत्प्रतीतिः फलंचात्र नासौ मानान्तराद्भवेत्" ॥ ३ ॥ इति

अयमर्थः, अव्युत्पन्नेन—अगृहीत वाच्यवाचकभावेन पदेनोपेतं यद्वाक्यम् अतिदेशवाक्यमिति व्यवह्रियमाणं, तस्य योर्थः साधर्म्यादिः । तस्य पूर्वं वाक्येनानुभूतस्य पश्चात् संज्ञिनि गवयादौ, यत्प्रत्यक्षेण प्रत्यभिज्ञानं तदुपमानम् । "अकृत समय संज्ञास्मरणसहायं तत्समभिव्याहृत वाक्यार्थ प्रत्यभिज्ञा प्रत्यक्षमुपमानम्" इति प्रमाणलक्षण वाक्यमपि निरुक्तार्थकमेव ॥

साधर्म्य—वैधर्म्य—धर्ममात्रंचेति अतिदेश वाक्यार्थस्य त्रैविध्येन तत्प्रतिसन्धानात्मकमुपमान-मपि त्रिविधं गीयते अगृहीत सङ्गतिकस्य गवयादि पदविशेषस्य पशुविशेषे वाच्यवाचकभाव प्रतीतिः प्रत्यक्षानुमानागमेभ्यो नजायते । अतो मानान्तरमुपमानमङ्गीकरणीयमिति ॥

तत्र साधर्म्योपमानं यथा—गोसदृशो गवय इति वाक्यं श्रुतवान् नागरिकः कश्चन कदाचिदरण्यं गतः तत्र गोसदृशं पशुविशेषमपश्यत् । अथ श्रृङ्गग्राहिकया अनुपदिष्ट वाच्यवाचकभावं गवयपदं स्मरेति । अनन्तरं अयमसौ गोसदृशो य आप्तेनोपदिष्ट इति प्रत्यक्षेण प्रतिसन्धत्ते, ततः "अयं गवयपदवाच्यः" इति यज्ज्ञानं जायते, तज्ज्ञानमुपमितिः । उपमानंच अयमसौ गोसदृशो य आप्तेनोपदिष्ट इति प्रत्यक्षप्रत्यभिज्ञानम् । इदमेव साधर्म्योपमान व्यवहारभाजनं भवति ॥

## वैधर्म्योपमानं यथा

कीदृगश्व इति प्रश्ने केनचित् "अश्वो गवादिवद्द्विशफो नभवति" इत्युच्चरितम्। तद्वाक्यं श्रुतवान् कश्चिदश्वं पश्यन्, पूर्वोपदिष्टं अश्वो गवादिवद्द्विशफो नभवतीति वाक्यमनुसन्धाय, "अयमसौ गोविसदृशः" इति प्रतिसन्धत्ते। अथ "अयमश्वपद वाच्यः" इति मनुते। इदमेव ज्ञानमुपमितिरिति कथ्यते। तत्करणंच "अयमसौ गोविसदृशः य आप्तेनोपदिष्टः" इति तुरङ्गमे गोविजातीयत्व प्रत्यभिज्ञानं वैधर्म्योपमानमिति व्यवह्रियते॥

## धर्ममात्रोपमानं यथा

क्रमेलकः कीदृश इति प्रश्ने "दीर्घग्रीवः प्रलम्बोष्ठः कण्टकाशीपशुः क्रमेलकः" इत्युदीच्येन केनचिदुदीरितम्। तद्वाक्यं श्रुतवतः दाक्षिणात्यस्य उत्तरापथे करभ दर्शनसमनन्तरं क्रमेलक पदस्मरणेच सति "अयमसौ तद्धर्मा" इति प्रतिसन्धत्ते। इदमेव प्रतिसन्धानं धर्ममात्रोपमानमिति उदीर्यते। अनेन प्रतिसन्धानेन "अयं पशुः क्रमेलक पदाभिधेयः" इति मन्यते। इदमेव ज्ञानमुपमितिरिति गीयते इति—एतदपि मतं नशोभते अधुना निरूपितानां त्रयाणामुपमानानामनुमानेऽन्तर्भावात्। साधर्म्योपमानस्यानुमानेऽन्तर्भाव प्रकारश्चेत्थम्—अयं गवयपदवाच्यः अगोत्वे सति गोसदृशत्वात्, यो नगवयपदवाच्यः स अगोत्वेसति गोसदृशो नभवति यथा घट इति। वैधर्म्योपमानस्यानुमानेन्तर्भाव एवम्—अयमश्वपदाभिधेयः, द्विशफत्वशून्यत्वेसति पशुत्वात् योनाश्वपदवाच्यः सद्विशफत्व शून्यत्वेसति पशुर्नभवति, यथा गवादिरिति। धर्ममात्रोपमानस्यानुमानेऽन्तर्भाव प्रकारस्तु अयं क्रमेलकशब्दाभिधेयः, दीर्घग्रीवत्वेसति, प्रलम्बोष्ठत्वेसति, कण्टकाशित्वेसति पशुत्वात्, यः क्रमेलकपदवाच्यो नभवति स दीर्घग्रीवत्वादिमान्न-भवति, यथा महिषादिरिति॥

नचोपमानानां सर्वेषां यथायथं प्रत्यक्षादि प्रमाणत्रयेऽन्तर्भावस्य सुनिरूपत्वेपि साक्षात्करोमि, अनुमिनोमि, शाब्दयामीत्यनुव्यवसायानां परस्पर विलक्षणज्ञानविषयकत्वं यथाङ्गीक्रियते, तथा उपमिनोमीत्यनुव्यवसायस्य प्रत्यक्षानुमिति शाब्दविलक्षण ज्ञानविषयकत्वं दुरपह्नवमकामेनापि अङ्गीकरणीयमिति-वाच्यम्। तथासति आपादयामि, अवधारयामीत्यनुव्यवसायबलादपि आपत्त्यवधारणादि रूप विलक्षणज्ञान स्वीकारपत्ते दुष्परिहरत्वात्। आपत्ति निर्धारणादेश्च प्रत्यक्षादिषु यद्यन्तर्भावः स्वीक्रियते तदा उपमितेरपि अनुमित्यादावन्तर्भावस्य सूपपादत्वादिति॥

## अर्थापत्तिविमर्शः

अर्थापत्तिस्वरूपं महत्तर विचारपदव्यारूढमपि लेशतो निरूप्य, अनुमानेऽन्तर्भावप्रकारः प्रदर्श्यते। प्रभाकराः प्रमाणानां प्रत्यक्षानुमानागमोपमानार्थापत्ति भेदेन पञ्चविधत्वाभ्युपगमेनार्थापत्तेरपि पञ्चविध प्रमाण प्रभवत्वात्पाञ्चविध्यं मन्यन्ते। भाट्टास्तु प्रत्यक्षादि प्रमाणपञ्चकेन सहाभावस्य षष्ठस्य प्रमाणस्य स्वीकारात् षट् प्रमाणप्रभवत्वेनार्थापत्तेरपि षड्विध्यं प्रतिपद्यन्ते अर्थापत्ति शब्दस्य करणे फलेच प्रयोगो दृश्यते। करणविवक्षया अनुपपद्यमान प्रमितिरर्थापत्तिः, साच बहिर्भावेन विनाऽनुपपद्यमानस्य जीवतो गृहाभावस्य प्रमितिः तयाच बहिर्भावप्रमा भवति। फलविवक्षयातु अर्थापत्तिशब्दस्य अनुपपद्यमानार्थ

दर्शनात्तदुपपादके बुद्धिरर्थः । बहिर्भावं विनाऽनुपपद्यमानस्य जीवित्वे सति गृहाभावस्य दर्शनात् तदुपपादकस्य बहिर्भावस्य प्रमितिः । इयमेव फलभूतार्थापत्तिः । करणभूतार्थापत्तिस्तु जीवतोगृहाभावस्य प्रमितिरित्यवधेयम् ॥

१. प्रत्यक्षपूर्विकार्थापत्ति यथा—वह्नेर्दाहशक्ति कल्पना । वह्नेर्दाहशक्तिं विना प्रत्यक्षावगतं दहन संसर्ग प्रभवं दाहाख्यकार्यमनुपपद्यमानं सत् वह्नेर्दाहशक्तिं कल्पयतीति ॥

२. अनुमान पूर्विकार्थापत्ति यथा—मयूखमालिनः गमनशक्तिकल्पना । यतो मरीचिमाली देशान्तर प्राप्तिमान् अतोगतिमानित्यनुमितं गमनं रवेरनुपपन्नं सत् गमनशक्तिं कल्पयति इति ॥

३. उपमान पूर्विकार्थापत्ति यथा—उपमानज्ञानावगत गवयसारूप्यविशिष्ट गोपिण्डरूप प्रमेयान्यथानुपपत्त्या तज्ज्ञान ग्राह्यत्व शक्तिकल्पनेति ॥

४. शब्दपूर्विकार्थापत्तिः श्रुतार्थापत्तिरिति व्यपदिश्यते । "पीनो देवदत्तः दिवा नभुङ्क्ते" इति वाक्यं श्रुतवतः पुरुषस्य दिवाऽभुञ्जाने देवदत्ते रात्रिभ जनं विनापीनत्वानुपपत्त्या रात्रिभोजन कल्पनेति ॥

अर्थापत्तिपूर्विकार्थापत्ति यथा—शब्दस्य वाचकत्वशक्तिं विना शब्दकरणिकाया अर्थप्रतीतेरनुपपत्त्या शब्दस्य वाचकत्वशक्ति कल्पना । इयमेकार्थापत्तिः । एतत्पूर्विकार्थापत्तिस्तु शब्दस्य नित्यत्वं विना वाचकत्व शक्त्यनुपपत्त्या शब्दस्य नित्यत्व कल्पनेति । अभाव पूर्विकार्थापत्तिरधिका प्रभाकरैः स्वीक्रियते । सा यथा—जीवतश्चैत्रस्य बहिर्भावमन्तरेण गृहासत्त्वाऽनुपपत्त्या बहिर्भाव कल्पनेति । यद्यप्यत्र बहुवक्तव्यमस्ति अथापि ग्रन्थगौरव भयाद्विरम्यते । नैयायिका अर्थातत्तः प्रमाणान्तरत्वमेवं निराकुर्वन् । तथाहि—शक्तिरूपपदार्थस्य शशविषाण सहोदरत्वेन आद्यानां तिसृणामर्थापत्तीनां शक्तिविषयाणां कथाशेषता किमुवर्णनीया । एवं शब्दनित्यत्वस्यैवाभावेन शब्दनित्यत्वविषयिणी अर्थापत्तिपूर्विकार्थापत्ति गगनकुसुमायमानेति ॥

अपिच श्रुतदृष्टार्थभेदेन श्रुतार्थापत्तिः, दृष्टार्थापत्तिरित्यर्थापत्ते द्वैविध्यमपि प्रतिपन्नम् । अथापि तयोरनुमानेऽन्तर्भावः सूपपादः समुचितश्च भाति । अनुमान प्रयोगस्तु एवं—विप्रतिपन्नो देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वेसति पीनत्वात् । यो रात्रौ नभुङ्क्ते स दिवाऽभुञ्जानत्वेसति पीनो नभवति यथा चैत्र इति ॥

एवं, विप्रतिपन्नश्चैत्रो बहिर्वर्तते जीवत्वेसति गृहेऽसत्वात् । यो नबहिर्वर्तते सजीवित्वेसति गृहेऽसन्नभवति यथाह" मिति । शक्तिः पदार्थान्तरं, शब्दनित्यत्वंच प्रमितमेव भवतु, आद्यानां तिसृणामर्थापत्तीनां शक्तिविषयाणां, एवमर्थापत्तिपूर्वकार्थापत्तेः शब्दनित्यत्वविषयिण्याः प्रमितविषयकत्वमेवाऽऽस्ताम्, अथापि सर्वासामर्थापत्तीनां व्यतिरेक्यनुमानेऽन्तर्भावः समुचितः सूपपादश्च । तदुक्तं न्यायमञ्जर्याम्—

"एषा विचार्यमाणातु भिद्यते नानुमानतः ।
प्रतिबन्धाद्विना वस्तु नवस्त्वन्तर बोधकम् ॥ १ ॥

यत्किञ्चिदर्थमालोक्य नच कश्चित्प्रतीयते ।
प्रतिबन्धो हि नाज्ञातः प्रयाति मतिहेतुताम् ॥ २ ॥
न साद्योजात बालादे रुद्भवन्ति तथा धियः ।
न विशेषात्मना यत्र सम्बन्ध ज्ञान सम्भवः ।
तत्राप्यस्त्येव सामान्यरूपेण तदुपगृहः ॥ ३ ॥

अपिच तेन विना नोपपद्यत इतिच व्यतिरेकभणितिरियं, व्यतिरेकश्च प्रतीतः तस्मिन्न सत्युपपद्यत इत्यन्वयमाक्षिपति । "अन्वयव्यतिरेकौच गमकस्यलिङ्गस्य धर्म इति कथमर्थापत्ति र्नानुमानम् । केवलव्यतिरेकी हेतुरन्वयमूल एव गमक इति वक्ष्यामः" इति । यथाहुः श्रीमद्भगवत्पादाः "अर्थापत्त्युपमे अनुमाविशेषः" इति । नचार्थापयामीति विलक्षणानुव्यवसायानुरोधेनाऽर्थापपत्तेः प्रत्यक्षाद्यतिरिक्त प्रमाणत्वं दुरपह्नवमिति वाच्यम् । घटं पश्यामि, घटं स्पृशामि गन्धं जिघ्रामि, शब्दं श्रुणोमि, रसमास्वादयामीत्याद्यनुव्यवसायानां साक्षात्कार प्रभेद चाक्षुषादिविषयकत्वं यथाऽविप्रतिपन्नं, तथा अर्थापयामीत्यनुभवस्यानुमिति विशेषविषयकत्वाङ्गीकारे बाधकाभावादिति ॥

## अभाव प्रमाण विमर्शः

अभावस्य प्रत्यक्षादित्रये यथायथमन्तर्भाव एवं—अभावविषय ज्ञानकरणमभाव प्रमाणम् । अभावप्रतियोगिनां प्रत्यक्षानुमानिकागमिकार्थभेदेन त्रैविध्यात् अभाव प्रमाणस्यापि त्रैविध्यम् । तत्र प्रत्यक्षयोग्यार्थ प्रतियोगिकाभावविषयक प्रमितिकरणं यथायथं प्रत्यक्षेऽनुमानेचान्तर्भवति । तथाहि—अत्र घटोस्ति नवेति परामर्शविना झडिति नास्त्यत्र घटइति यदा मनुते तदा तज्ज्ञानंच यथायथं चाक्षुषादिकं, तत्करणंच चक्षुरादीन्द्रियम् । यदापुनः अत्रघटोस्ति नवेति परामर्शपूर्वकमनुपलब्धिरूप लिङ्गेन नास्त्यत्र घट इति जानाति तदा तज्ज्ञानमनुमितिः । तत्करणंचानुमानम् । अनुमानप्रयोगस्तु घटोत्र नास्ति योग्यत्वेसति अनुपलब्धेरिति । तदुक्तम्—प्रमाणलक्षणे—"अभावोनुमाप्रत्यक्षंच परामर्शापरामर्श विशेषात्" इति । अनुमानिकार्थ प्रतियोगिकाभावविषयक प्रमिति करणमनुमानं, तथाहि-अयं चक्षुष्मान् रूपद्रष्टृत्वादित्यनुमानगम्यं यच्चक्षुः तत्प्रतियोगिकाभाव विषयकप्रमितिः अयं चक्षूरहित इति तत्करणमनुमानेऽन्तर्भवति । तत्प्रकारश्च एवम्—अयं चक्षूरहितः रूपज्ञानशून्यत्वात् इति । आगमिकार्थ प्रतियोगिकाभाव विषयक प्रमितिकरणंतु आगम एव । तथाहि—इदानीमत्रदेशे कौरवाद्यभावावगाहि प्रतीतिः भारतादि प्रमाणबलादेव सम्पादनीया । अत्र देशे कालविशेषे कौरवाणां सत्वावगमोपि भारताद्यागमादेवेति तादृशाभावावगाहि प्रमितिकरणं भारताद्यागम एवेति ॥

अत्रेदमवधेयम्—बाह्येन्द्रिय योग्यार्थप्रतियोगिकाभाव विषयक प्रमाणमेव परामर्शापरामर्शविशेषात् यथायथमनुमायां प्रत्यक्षेचान्तर्भवति, नतु एवं साक्षियोग्यार्थ प्रतियोगिकाभावविषयक प्रमाणमनुमायोऽन्तर्भवति । साक्षिणः सुखादिस्वरूपे निश्चयरूपत्वेन ममेदानीं सुखमस्ति नवेति परामर्शाभावादिति । तदुक्तं पद्धतौ "सुखाद्यभावप्रमितिस्तु साक्षिप्रत्यक्षेणैव" इति । एवं प्रमाण लक्षणादाविति । भट्टादीनामनुपलब्धेरतिरिक्त प्रमाणतावादोपि नशोभते । यथाहि—प्रत्यक्षयोग्यार्थ प्रतियोगिकाभावविषयक ज्ञानएवानुपलब्धेरुपयोगः स्वीक्रियते तैः । तदुक्तम्—ज्ञानकरणाजन्यानुभवासाधारण कारणमनुपलब्धिरूपं प्रमाण" मिति अनुपलब्धिरेकादशप्रकारेत्यभाणि न्यायमञ्जर्याम्—

ननुचानेन मार्गेण यद्यभावो निरस्यते ।
एकादशप्रकारेषाऽनुपलब्धिः क्वगच्छतु ॥" इति

एकादशप्रकारा नात्र निरूप्यन्ते ग्रन्थगौरव भयात् । अनुपलब्धेरतिरिक्त प्रमाणभावमात्रं निरस्यते सयुक्तिकं तथाहि—चक्षुषा "नात्र घटोस्तीति" ज्ञाने जननीये अनुपलब्धेः सहकारि कारणत्वावलम्बनेनैव समञ्जस्यात्तस्याः प्रमाणत्वमेव नाङ्गीकर्तव्यमस्ति, सतिचेवं तस्याः पृथक् प्रमाणत्वकथायाः कावकाश इति । किंच, अनुपलब्धे निर्व्यापरत्वं तैरेवाङ्गीकृतं प्रत्यक्षादेः प्रमाणस्य सव्यापारत्वमङ्गीकृत्य, निर्व्यापाराया अनुपलब्धेः प्रमाणत्ववादो नोचितः।एवं सहकारिकारणत्वमपेष्टेणानुपलब्धेः प्रमाणत्वाङ्गीकारे अन्येषां सहकारिकारणानामालोकादीना मपि प्रमाणभावो दुष्परिहरः स्यादिति । नचाभावस्येन्द्रिय सन्निकर्षाभावा त्कथमभावज्ञानमक्षजमिति वाच्यम् । भाववदभावस्यापि इन्द्रियसन्निकर्षे वाधकाभावात् । अपिच अनुपलब्धेः प्रमाणान्तरत्वे एवं दूषणमुद्भावि न्यायकुसुमाञ्जलौ "अवश्याभ्युपगन्तव्यत्वे कारणत्वं सिध्येत्, नतु मानान्तरत्वम्, अन्यथा भावोपलम्भेपि अभावानुपलब्धिरेव प्रमाणं स्यात् नेन्द्रियम्, अभवोपलम्भे भावानुपलम्भवत् भवोपलम्भे अभावानुपलम्भस्यापि वज्रलेपायमानत्वादिति" इति । किंच, अनुपलब्धिः किं ज्ञाताप्रमाणं भवति ? उताऽज्ञाता ? नाद्यः, अनुपलब्धेरभावरूपाया ज्ञाने जननीये अनुपलब्ध्यन्तरज्ञानमनुसरणीयम्, एवमनुपलब्ध्यन्तरज्ञाने जननीये अनुपलब्ध्यन्तर ज्ञानमवश्यमाश्रयणीयमिति अनवस्थायाः स्पष्टत्वात् । नापि द्वितीयः, यदज्ञातकरणजन्यं तत्प्रत्यक्षं, यथा रूपरसादि साक्षात्कार इति व्याप्तेः सम्प्रतिपन्नत्वात् । तादृश व्याप्तिज्ञानमूलकस्य "अनुपलब्धिजन्यज्ञानं साक्षात्कारः अज्ञातकरणजन्यत्वात्" इत्यनुमानस्य जगरूकत्वात् । साक्षात्कारेचानुपलब्धेः प्रमाणत्वाभावस्य सर्वैसम्प्रतिपन्नत्वादित्यादि दूषणानि जाग्रतीति ॥

यदाच पुरुषः अन्धकार भूयिष्ठ प्रदेशे हस्तप्रसारणादिना घटाभावं जानाति, तदा तज्ज्ञानमनुपलब्धिरूप लिङ्गजन्यम् । अनुमानप्रयोगस्तु इत्थम्—अत्रेदानीं घटो नास्ति योग्यत्वेसत्यनुपलभ्यमानत्वादिति । ज्ञायमानलिङ्गस्य अनुमानत्वेऽनुमलब्धे र्ज्ञायमानाया अनुमानत्वम् । लिङ्गज्ञानस्यानुमानत्वेऽनुपलब्धिज्ञानस्यैवानुमानत्वमिति । विस्तरस्तु "अर्थापत्त्युपमाभावा अनुमान्तर्गताः कचित् । प्रत्यक्षान्तर्गतो भावः सुखादिर्नियमेनच । अन्यत्र झडिति प्राप्तः" इत्यादि भक्तिपादीयानुव्याख्यान सुधयोरवगन्तव्य इति ॥

सम्भवैतिह्ययोरनुमानागमयोरन्तर्भावात्तयोः पृथक् प्रामाण्यवादः पौराणिकानां नशोभते । अल्पप्रमाणसाधनं बहुलज्ञानं सम्भव इति करणविवक्षयोक्तं प्रमाणलक्षण टीकायाम् । प्रमाणपद्धतौतु बहुलज्ञानेऽल्पज्ञानं सम्भव इत्युक्तं फलविवक्षया । अतोनयो ग्रन्थयो र्विरोधो नाशङ्कनीयः । उभयत्रापि सम्भवव्यवहारस्य दर्शनात् । चैत्रे रूप्यशतकमस्तीति श्रुतवतः तस्मिन् पञ्चाशद्रूप्याणि सन्तीति यज्ज्ञानं जायते तज्ज्ञानमनुमितिः तत्करणंच रूप्यशतक ज्ञानम् । अनुमानप्रयोगस्तु—चैत्रः पञ्चाशद्रूप्यवान्—रूप्यशतकत्वात् यथाहमिति । ऐतिह्यं नाम—अनिर्दिष्टवक्तृकं प्रवादपारम्पर्यम् । यथा अत्र वटे पिशाचोस्तीति वाक्यम् ।अस्य वाक्यस्येदं प्रथमोच्चारणकर्ताऽयमिति नज्ञायते । इदं वाक्यं यथावस्थितार्थबोधकं वेदागम एव नो वेदागमाभास इति ॥

परिशेषस्यातिरिक्तप्रमाणस्य सत्वात् त्रीण्येव प्रमाणानीत्युक्ति र्नयुज्यत इति केचिदाक्षिपन्ति एतदपि नसाधु । तस्यानुमानेऽन्तर्भावात् । तथाहि—प्रसक्तव्यावृत्तिप्रतीतिः परिशिष्यमाणप्रमासाधनं परिशेषः, चैत्रमैत्रावेताविति सामान्यतो जानन्तं प्रातिस्वीकरूपेणाजानन्तं पुरुषं प्रति केनचिदाप्तेन शृङ्गग्राहिकया नायं चैत्र इति वाक्ये उच्चरितेसति तस्य पुरुषस्य एकस्मिन् चैत्रभेदबुध्द्युत्पादेन अन्यस्मिन् मैत्रोयमिति धीर्जायते । इयं धीरनुमान जन्या । अनुमानप्रकारस्तु " अयं मैत्रः—चैत्रमैत्रयोरन्यतरत्वेसति अचैत्रत्वात् व्यतिरेकेण चैत्रवत् " इति । एवमुपक्रमोपसंहार तदेकरूप्याभ्यासापूर्वताफलार्थवादान तात्पर्यविशेषानुमापकत्वात्, समाख्या वाक्यप्रकरण स्थानानामर्थविशेषानुमापकत्वादनुमान एवान्तर्भावात् त्रीण्येव प्रमाणानीत्युक्ति निर्दोषैव । उपक्रमादीनां लक्षणानि तात्पर्यनिर्णायकत्वंच प्रमाणलक्षणानुव्याख्यान सुधादौ विस्तरशो निरूपितानि सन्ति, नात्र मयानिरूप्यन्ते ग्रन्थगौरव भयात् ॥

ननु नयनाङ्गुल्यादि दोषानामर्थविशेषज्ञापिकानां, वर्णज्ञापकरेखादीनांच सत्वात् कथं त्रीण्येव प्रमाणानीत्युक्तिः शोभतामितिचेन्न । तेषामनुमानेऽन्तर्भावात् । अन्तर्भाव प्रकारश्चैवम्—अयं फलद्वय-कर्मकर्मवत्कर्तृकान्वयबोधक वाक्यप्रयोगेच्छावान् विलक्षणचेष्टावत्त्वादिति । "क" इति रेखा ककारे शक्ता विलक्षणरेखात्वादिति । किंच शृङ्गग्राहिकया रेखाविशेषाणां वर्णविशेषेषु वाच्यवाचकभावः गुरुणा शिष्यं प्रत्युपदिष्टोऽक्षराभ्यासाऽवसरे, अनन्तरं गुरुप्रदर्शित रेखा सजातीयरेखाविशेषं यदापश्यति तदा तत्र वर्णविशेषवाचकत्वं स्मरति, एक सम्बन्धिज्ञानस्यापरसम्बन्धि स्मारकत्वस्वाभाव्यादित्येतत्सर्वेषां हृदयपथारूढमस्ति, तदुक्तं न्यायामृते असतः साधकत्वाभावे बाधकोद्धार प्रकरणे "रेखायाश्चवर्णे पदस्यार्थ इव सङ्केतितत्वेन रेखास्मारित वर्णस्यैवार्थबोधकत्वात् " इति । तथाच त्रीण्येव पमाणानि प्रत्यक्षमनुमानमागमश्चेति विभागो युक्ततमः, उपमानार्थापत्त्यादीनामाशङ्कितानां सर्वेषां प्रत्यक्षामनुमानागमेषु यथायथमन्तर्भावादिति सिद्धम् ॥

अपिच प्रत्यक्षमनुमानमागमइति त्रीण्येव प्रमाणानीति श्रुति स्मृतय उद्घोषयन्ति । तथाहि— "नेन्द्रियाणिनानुमानं वेदाह्येवैनं वेदयन्ति तस्मादाहुर्वेदाः" इति श्रुतिः, यदि अन्यत्प्रमाणमभविष्यत् तदपि अवक्ष्यच्छ्रुतिः अकथनेन प्रत्यक्षानुमानागमान्यन् प्रमाणं किमपि नास्ति " उपमानार्थापत्त्यादिकं सर्वं यथायथं प्रमाणत्रयेऽन्तर्भूतमिति सिद्धम् । एवं "अत्मावा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति बृहदारण्यकोपनिषत् । अर्थापत्त्यादेरनुमानात्पार्थक्ये परब्रह्मणः अर्थापत्त्यादिविषयत्वबोधनाय मन्तव्य इति पदं नालमिति तद्बोधानाय किमपि पदमावश्यकं स्यात् । तथाऽप्रयोगेण मन्तव्य इत्यनेनैवार्थापत्त्यादि विषयत्वमपि बोधितं भवतीति अकामेनापि अङ्गीकरणीयं प्रतिवादिनेति । अपिच—"प्रत्यक्षमनुमानंच शास्त्रंच विविधागमम् त्रय सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥" इति मनुस्मृतिः । मन्वर्थ मुक्तावल्यां "तदेवच प्रमाणत्रयं मनोरभिमतम्, उपमानार्थापत्त्या देश्चानुमानान्तर्भावः" इति । अशेष जगद्व्यवस्थापन-शीलचतुरानननुपमानुग्रहाऽऽसादिताशेषविद्या सम्पदामान्यतमेन स्वायंभुव मनुनारचितेयं धर्मसर्वस्व प्रकाशिकास्मृतिरशेषावनितले मान्यतमा राराज्यते इति स्वभावोक्तिरेव । नतु लेशतोपि उत्प्रेक्षेत्यत्राशेषस्य लोकस्यान्तरात्मैव प्रमाणम् । नात्राधिकं निरूपणीयमस्तीति विरम्यते प्रमाणत्रितयव्यवस्थापक प्रमाणोपन्यासादिति ॥

प्रमाणं द्विविधं केवलप्रमाणं, अनुप्रमाणंचेति । केवलप्रमाणस्य लक्षणं यथावस्थितार्थ विषयीकारिज्ञानत्वम् । अनुप्रमाणस्य लक्षणं यथावस्थितार्थ विषयीकारिज्ञानसाधनत्वम् । प्रमाणसामान्य-

लक्षणंतु यथावस्थितार्थ विषयीकारित्वम् । ननु ज्ञानस्य यथावस्थितार्थ विषयीकारित्वसम्भवेपि अनुप्रमाणास्येन्द्रिय लिङ्गागमत्रितयस्य यथावस्थितार्थ विषयीकारित्वमसम्भवीतिचेदुच्यते । ज्ञानस्य साक्षाद्यादृशार्थ विषयीकारित्वमस्ति, तत्साधनानामिन्द्रियादीनामपि साक्षादेव तादृशार्थ विषयीकारित्वमस्ति । नहि इन्द्रियादीनि किमपि अविषयीकृत्य ज्ञानं जनयितुं प्रभवन्ति । तदुक्तं सुधायां "ज्ञानविषय एवहि करणानां विषयः, नहि किमप्यविषयीकुर्वन्त्येतानि (करणानि) ज्ञानं जनयन्ति नाप्यन्यविषयाणि, अतिप्रसङ्गात्" इति । एवंच यथावस्थितार्थ विषयीकारित्वं ज्ञानरूप केवलप्रमाणे, तत्साधनेषु इन्द्रियलिङ्गागमेषुच वर्तत इति नासम्भवस्यावकाश इति ॥

नच यथार्थज्ञानसाधन एव प्रमाण शब्दप्रयोगस्य सत्त्वात् यथार्थज्ञाने प्रमाणशब्दप्रयोगाभावात् केवलप्रमाणानुप्रमाणभेदेन प्रमाणद्वैविध्योक्तिरयुक्तेति वाच्यम् । करणल्युडन्त प्रमाणशब्दस्य यथार्थज्ञानसाधन इव भावल्युडन्तप्रमाणशब्दस्य यथार्थज्ञाने प्रयोगस्य बहुत्र दर्शनात् । केवलप्रमाणानुप्रमाणलक्षणयोः प्रविष्टं ज्ञाने यथावस्थितार्थविषयीकारित्वं नाम सन्मात्रविषयकत्वं, तच्च सद्विषयकत्वेसति, असद्विषयकत्वं, अत इदं रजतमिति भ्रमे तत्साधने दुष्टेन्द्रियादौच नातिव्याप्तिः, सर्वस्यापि ज्ञानस्य धर्मिणि अभ्रान्तत्वनियमेन भ्रान्तेरपि सद्रूपधर्मिविषयकत्वेपि, शुक्तिरेवात्यन्तासद्रजतात्मना प्रत्यभादिति औत्तरकालिकानुभवानुरोधेन रजतस्यात्यन्तासत्त्वाभ्युपगमात् रजतरूपासद्विषाकत्वस्यैव सत्त्वेन तदभावस्यायोगात् । नचैवं शशविषाणं नास्तीति ज्ञाने अभावांशे असतः शशविषाणस्य प्रतियोगितासम्बन्धेन विषयीकरण सत्त्वात्, एवं इदं रजतं जानामीति भ्रमविषयकानुभवे रजतरूपासद्विषयकत्वसत्वादुभयत्राव्याप्तिरिति वाच्यम् । प्रतियोगित्व विषयत्वातिरिक्त सम्बन्धेनासद्विषयकत्वस्यैव विवक्षणात्, एवंच शशविषाणं नास्तीति ज्ञाने अभावांशे शशविषाणस्य प्रतियोगितासम्बन्धेनैव विषयीकरणात्, इदं रजतं जानामीति भ्रमविषयकानुभवेच ज्ञानांशे रजतस्य विषयतासम्बन्धेनैव विषयीकरणादुभयत्राव्याप्तेरनवकाशात् । सन्मात्रविषयक ज्ञानत्वरूपं केवलप्रमाणलक्षणंच सर्वांशे प्रमाया एवेत्युक्तं भवति एवमेव वक्तव्यम्, संशयो विपर्ययश्च यथार्थज्ञानमिति अभियुक्तव्यवहारस्य काप्यदर्शनात् । प्रत्युत संशयविपर्ययोरयथार्थज्ञान प्रभेदत्वेन सर्वैस्तान्त्रिकैरभ्युपगमात् ॥

यथावस्थितेत्यक्षरार्थस्वारस्य पर्यालोचनायां यत्र येन सम्बन्धेन यदस्ति तत्र तेन सम्बन्धेन तद्विषयीकारित्वमित्यर्थवर्णनं समुचितं भाति नचेदं लक्षणं इदं रजतमिति भ्रमेवर्तते । इदम्पदार्थे शुक्तौ येन सम्बन्धेन इदंत्वमस्ति, तत्र तेनैव सम्बन्धेन इदंत्वस्य विषयीकरणादिति वाच्यम् । "ज्ञेयमनतिक्रम्य वर्तमानं यथावस्थितमेव ज्ञेयं यद्विषयीकरोति, नान्यथा, तत्प्राणम्" इति प्रमाणपद्धति वाक्यपर्यालोचनया यथावस्थितार्थमात्रविषयीकारित्वं प्रमाणसामान्यलक्षणं पर्यवस्यति । केवलप्रमाणलक्षणंतु यथावस्थितार्थमात्र विषयीकारिज्ञानत्वमित्युक्तं भवति यथावस्थितार्थ विषयीकारित्वस्य पूर्वोक्तरीत्या भ्रमे सत्वेपि मात्रशब्दार्थस्य—यत्र येन सम्बन्धेन यन्नास्ति तत्र तेन सम्बन्धेन तदविषयकत्वस्यासत्त्वात्, इदम्पदार्थे शुक्तौचाविद्यमानस्य रजतत्वस्य विषयीकरणात् । नच यत्र येन सम्बन्धेन धर्मितावच्छेदकातिरिक्तं यदस्ति तत्र तेन सम्बन्धेन तद्विषयीकारिज्ञानत्वमिति परिष्काराश्रयणादपि इदं रजतमिति भ्रमे धर्मिणि विद्यमानस्य धर्मितावच्छेदकातिरिक्तस्य कस्याप्यविषयीकरणादतिव्याप्तिवारणसम्भवात् । तदर्थं गुरुतरमात्रशब्दार्थ निवेशो नयुक्त इति वाच्यम् । एवमपि संशयेऽतिव्याप्तेरवारणात्, तत्र धर्मिणि विद्यमानस्य धर्मिताऽवच्छेदकातिरिक्तस्यान्यतर प्रकारस्य विषयीकरणात् । तथाच संशयेऽतिव्याप्तिवारणाय गुरुभूतस्यापि मात्रशब्दार्थस्य निवेशनीयत्वादितिदिक् ॥

## केवल प्रमाण विभागः

केवल प्रमाणं चतुर्विधं ईश्वरज्ञानं लक्ष्मीज्ञानं योगिज्ञानं, अयोगिज्ञानंचेति । तत्र ईश्वरज्ञानम्—सर्वविषयकं स्वतन्त्रंच । लक्ष्मीज्ञानम्—ईश्वरेतराधीनमीश्वरज्ञानभिन्नं ज्ञानम् । योगिज्ञानं—योगप्रभाव सम्पादितातिशयोपेतं ज्ञानम् । अयोगिज्ञानम्—योगिव्यतिरिक्तजीव ज्ञानमिति ॥

## अनुप्रमाण विभागः

अनुप्रमाणं त्रिविधं प्रत्यक्षमनुमानमागमश्चेति । तत्र प्रत्यक्षं निर्दोषार्थेन्द्रियसन्निकर्ष इत्युक्तं प्रमाणलक्षणपद्धत्यादौ व्यापारप्राधान्यविवक्षया क्वचिच्च निर्दोषार्थसन्निकृष्टं निर्दोषेन्द्रियमिति धर्मिप्राधान्य-विवक्षया । आद्यपक्षस्य "निर्दोषेन्द्रियसंयोगः प्रत्यक्षमिति गीयते" इति बृहद्भाष्योक्त ब्रह्मतर्कानु-सारित्वात्, द्वितीयपक्षस्य "अदुष्टमिन्द्रियंत्वक्षम्" इति तत्वनिर्णयोक्त ब्रह्मतर्कानुसारित्वात् पक्षद्वयमपि प्रामाणिकमेवेति ॥

केषांचिदर्थदोषाणामिन्द्रियदोषाणांच दूरीकरणाय निर्दोषेति अर्थेन्द्रिययोर्विशेषणम् । अर्थदोष-अतिदूरस्थत्वम्, अतिसामिप्यम्, सौक्ष्म्यं, व्यवधानं, समान द्रव्याभिघातः, अनभिव्यक्तत्वं, सादृश्यंचेः त्यादयः । इन्द्रियदोषाः—बाह्येन्द्रियाणां मनोनधिष्ठितत्वंकाचकामलपित्ताङ्गुल्यवष्टम्भादयः । एतेषु दोषेषु यथासम्भवं व्यस्तेषु मिलितेषु वा सत्सु क्वचिदिन्द्रियेण ज्ञानमेव नजायते क्वचिच्च विपरीतज्ञानमुत्पद्यते ॥ ज्ञानेन्द्रियं द्विविधं स्वरूपेन्द्रियं—प्राकृतंचेति । स्वरूपेन्द्रियमेव सक्षीति व्यवह्रियते । तस्य विषयाः—आत्मस्वरूपं, तद्धर्माः सुखादयः, भावरूपविद्या, मनः, तत्परिणामा बाह्येन्द्रियज्ञासुखाद्याः, कालः, अव्याकृताकाशः, प्राच्यादि देशविशेषाः, प्रामाण्यं, अप्रामाण्यंचेत्यादयः । प्राकृतं षड्विधं—घ्राण रसन चक्षुस्त्वक्श्रोत्र मनोभेदात्, तत्र घ्राणेन्द्रियस्य विषयाः—गन्धस्तद्विशेषाः सौरभादयः । रसस्त-द्विशेषाःमाधुर्यादयो रसनेन्द्रियस्य विषयाः । महत्वसमानाधिकरणोद्भूत रूपवन्ति द्रव्याणि, सङ्ख्यादयो गुणाः महद्रूपवद्द्रव्यनिष्ठाः, कर्माणि, जातयश्च चक्षुस्त्वगिन्द्रयोर्विषयाः । वायुस्पर्शोपि त्वचोविषयः । शब्दः श्रोत्रविषयः । मनसस्तु बाह्येन्द्रियाधिष्ठानेनैते सर्वे विषयाः । मनः बाह्येन्द्रिय नैरपेक्षेण स्मरण-साधनं भवति रागद्वेषलोभादयो मनसो दोषः । एवंच निरुक्त दोषविधुरयोरर्थेन्द्रिययोः सन्निकर्षात् तत्तदिन्द्रियोग्यार्थ विषयकप्रत्यक्षं जायत इति प्रत्यक्षविचारेणालम् ॥

## अनुमानं लेशतो निरूप्यते

अनुमानं, उपपत्तिः, युक्तिः, लिङ्गम्, व्याप्यमिति पर्यायः । व्याप्तिर्नाम—अविनाभावः, साहचर्य नियमः, अव्यभिरितः साध्यसम्बन्धः, स्वाभाविकः साध्यसम्बन्धः हेतुनिष्ठ इति यावत् । लिङ्ग चक्षुरादिन्द्रियवन्नाज्ञातकरेणम्, किंतु ज्ञातकरणम् । ज्ञानमेव लिङ्गमनुमितिं जनयितुं प्रभवतीति । नकेवलं धूमत्वेन ज्ञातं धूमरूपलिङ्गंवह्न्यनुमितिजनने समर्थम् । नारिकेल द्विपवासिनः देशान्तरंगतस्य धूमत्वेन धूमज्ञाने सत्यपि वह्न्यनुमित्यनुदयात् । अपितु वह्निव्याप्यत्वेन ज्ञात एव धूमो वह्न्यनुमितिं जनयति । एतावतापि नालम् । ज्ञातव्याप्तिकस्यापि इदानीं व्याप्तिस्मरणविधुरस्य वह्न्यनुमित्यनुदयात् । किंनु वह्निव्याप्यत्वेन गृह्यमाणं (वर्तमानकालावच्छिन्न ज्ञानविषयीभूतम्) धूमरूपं लिङ्गंकरणमिति

वक्तव्यम्। एवमुक्तावपि धूमो वह्निव्याप्य इति ज्ञानमात्रादनुमित्यापत्तिः, तद्वारणाय वह्निव्याप्यत्वेन समुचितदेशवृत्तित्वेनच गृह्यमाण धूम एवानुमानमिति वक्तव्यम्। तदुक्तं प्रमाणपद्धतौ "अनुमानस्य द्वयं सामर्थ्यं व्याप्तिः समुचितदेशादौ सिद्धिश्चेति" इति साध्यव्याप्यत्वेन समुचितदेशवृत्तित्वेनच लिङ्गज्ञानंवानुमानमित्यपि सुवचम्। "तदुक्तं प्रमाणपद्धतौ—"तथाच व्याप्तिज्ञानतत्स्मरणसहितं लिङ्गस्य सम्यग्ज्ञानं, सम्यग्ज्ञातं वा लिङ्गं व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयदनुमानमित्युक्तं भवति" इति॥

उपपत्तिशब्देन निर्दोषोपपत्तिरेव ग्राह्या। तस्यामेवोपपत्तिशब्दस्य मुख्यवृत्तेः, हेत्वाभासेष्वामुख्यवृत्तेः स्वीकारात्। तदुक्तं सुधायां "शब्दानां खलु मुख्यामुख्यभेदेन द्वेवृत्ती, एवं चोपपत्तिशब्दादुपपत्ताविव तदाभासेपि प्रतिपत्तावुत्पन्नायां तद्व्यवच्छेदेन मुख्यार्थोपदर्शनार्थं तत्र निर्दोषग्रहणं कृतम्, अत्र पुनरन्तर्गतं निर्दोषत्वं मुख्यमेवार्थमुपादाय युक्तिरेवेत्युक्तम्" इति अनुमानाभासव्युदासाय निर्दोषेति अनुमानाभासो नाम—सदोषानुमानम्। हेतुत्वेनाभिमतं यत्तत्त्वे ज्ञानमेवोत्पादयितुं नप्रभवति, ज्ञानमुत्पादयद्वा अयथार्थज्ञानं जनयति, तेचानुमानदोषाः विरोधासङ्गत्यादयः। अनुमानप्रभेदाः, एवमनुमानदोषप्रदा ग्रन्थगौरवभयान्नेह निरूप्यन्ते॥

## आगम निरूपणम्

निर्दोषः शब्द आगमः, नतु आप्तिमूलकः शब्द इति तथासति वेदस्यासङ्ग्रहप्रसङ्गात्। नच वेद ईश्वरेणाऽऽप्ततमेन प्रणीत इति वाच्यम्। ऋग्वेद एवाग्नेरजायतेति असर्वज्ञप्रणीतत्वस्यापि श्रवणात्। सम्प्रदायप्रवर्तकतया तद्वाक्यमुपचरितमिति चेन्न। गमकाभावात्। तस्माद्यज्ञादिति ईश्वरविरचितत्व बोधकवाक्यमेव गमकमस्तीति चेन्न। ऋग्वेद एवाग्नेरजायतेति वाक्यानुरोधेन तस्माद्यज्ञादिति वाक्यस्य सम्प्रदाय प्रवर्तकत्वार्थकत्वस्य सम्भवात्, विनिगमनाविरहात्। नचाग्नेरसर्वज्ञत्वात्, ईश्वरस्यच सार्वज्ञात् अग्निविरचितत्वबोधक वाक्यस्योपचरितार्थकत्वं वक्तव्यमेवेति वाच्यम्। अद्यपर्यन्तं ईश्वरस्य सार्वज्ञासिद्धेः। नच विप्रतिपन्नं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन कर्ता सर्वज्ञः सिध्यतीति वाच्यम्। अनेनानुमानेन सकर्तृकत्वसिद्धावपि सार्वज्ञासिद्धेः, महत्तर गोपुरादिवत् असर्वज्ञबहुकर्तृकत्वेनाप्युपपत्तेः। नच यः सर्वज्ञः स सर्वविदित्यादिवेदेनैव ईश्वरस्य सार्वज्ञासिद्धिः सुलभेति वाच्यम्। चक्रकापातात्—तथाहि—ईश्वरस्य सार्वज्ञे [illegible] द्धे तस्माद्यज्ञादित्यादिना वेदस्य सर्वज्ञप्रणीतत्वसिद्धिः, वेदस्य सर्वज्ञ प्रणीतत्वसिद्धौच वेदस्य प्रामाण्यसिद्धिः, वेदस्य प्रामाण्यसिद्धौ यःसर्वज्ञः ससर्वविदित्यादि वेदेन ईश्वरस्य सार्वज्ञसिद्धिरिति, किंच वेदस्य पौरुषेयत्वाङ्गीकारे, 'वाचाविरूपनित्यया, नित्ययानित्ययास्तौमि ब्रह्मतत्परमं पद' मिति श्रुतिर्वाचनित्या अनित्यावावस्मृतयो याश्चान्यावाच इति, विज्ञेयं परमं ब्रह्मज्ञापिका परमाश्रुतिः। 'अनादि नित्या सातश्च विनानांनसगम्यत' इत्यादि बहुतर श्रुतियाकोपो दुष्परिहरः॥

ननु "तस्मात्तेपानात्त्रयोवेदा अजायन्त" "ऋचः सामानिजज्ञिरे" इत्याद्युत्पत्तिबोधक श्रुति वाक्यानां का गतिरितिचेत्, तेषां श्रुतिवाक्यानामादिकालीनव्यक्तिविषयत्वेनाप्युपपत्तेः। तथाच वेदस्यापौरुषेयत्वं निराबाधं सिद्धम्, तदुक्तं तत्वप्रकाशिकायम्—"नहि लशुनगृंजनाद्यनस्य पापहेतुत्वं, यज्ञादेः पुण्यसाधनत्वंवाऽनुमानेन शक्यसाधनम्। अतो वाक्यमेवेति वक्तव्यम्, तदपि नतावत्पौरुषेय, मूलान्तरान्वेषणेनानवस्थानात्, अतस्तन्नित्यमेवापेक्षितम्, तथाच किमनयाकल्पनया, श्रुतिसिद्धं वेदनित्यत्वमेवाङ्गीक्रियतां" इति॥

शब्ददोषाः सोदाहरणं प्रदर्श्यन्ते—तथाहि—वाच्यहीनत्वेनाबोधकत्वं, कचटतपानां जबगडदत्वादित्यादौ अन्वयाभावेनाबोधकत्वं, जरद्गवः कम्बलपादुकाभ्यामित्यादौ, विपरीतबोधकत्वं, शून्यं जगत्कारणं—जगन्मिथ्येत्यादौ, ज्ञातज्ञापकत्वं, स्फीतालोकमध्यवर्तिघटप्रतिपादके अत्र घटोस्तीत्यादौ। अप्रयोजनत्वं, काकस्य कतिवादन्ता इत्यादौ । अनभिमत प्रयोजनत्वं, विरक्तंप्रति वाणिज्योपदेशे। अशक्य साधनार्थ प्रतिपादकत्वं रोगार्तंप्रति हिममहीधरोत्तर सानुसिद्धमृतसञ्जीविन्यानयनोपदेशस्य। लघूपायेसति गुरूपायोपदेशनं तृषितं दाक्षिणात्यं प्रति गीर्वाणतरङ्गिणी समीपे कूपखननोपदेशवाक्ये। एवं प्रतारकत्वाद्यो दोषा ग्राह्याः । तथाच दोषरहितः शब्दः श्रोत्रपथंगतः, रेखाविशेषैर्गृहीतोवा वाच्यवाचकभाव लक्षणसम्बन्ध स्मरण सापेक्षः, तात्पर्यादिज्ञानसापेक्षश्च स्वार्थबोधने प्रभवतीति ॥

ननु पदानां पदार्थानांच वाच्यवाचकभावलक्षणसम्बन्धज्ञाने जननीये पूर्वमेव पदानां पदार्थानांच ज्ञानमावश्यकम्, सम्बन्धज्ञाने यावत्सम्बन्धिज्ञानस्यापेक्षणात्, तथाच पदार्थानां ज्ञानस्य पूर्वमेव निष्पन्नत्वात् किमागमस्य प्रयोजनम्, आगमजनित ज्ञानस्य पदार्थविषयकत्वादितिचेत् अत्रेदं समाधानं, यथा पूर्वं ज्ञातयोरपि धर्मधर्मिणोः संसर्गविशेषावगाहि ज्ञानमनुमानस्य प्रयोजनमिति अविवादं, तथापूर्वं ज्ञातानामेव पदार्थानां तात्पर्यादिज्ञान सहकारेण संसर्ग विशेषावगाहि ज्ञानमागमस्य प्रयोजनम्, एवमङ्गीकारे बाधकभावादविवादाच्च आगमस्य साफल्यं निराबाधमेवेति । आगमो द्विविधः पौरुषेयः, अपौरुषेयश्चेति पौरुषेयः सदागमो दुरागमश्चेति द्विविधः । अपौरुषेयः सर्वोपि सदागम एव । सदागमादुरागमाश्च निर्धारिताः श्रीमद्विष्णुतत्वविनिर्णये—

"ऋगाद्या भारतंचैव पञ्चरात्रमथाखिलम्। मूलरामायणंचैव पुराणंचैतदात्मकम्॥
येचानुयायिनस्त्वेषा सर्वे तेचसदागमाः। दुरागमास्तदन्ये" इति

## प्रामाण्य विचारः

प्रामाण्यस्वरूपविषये बहवो विवादाः समुलभ्यन्ते तथाहि—तार्किकाः—प्रमाकरणं प्रमाणं, प्रमाच—यथार्थानुभवः, अनुभवस्तु स्मृतिव्यतिरिक्तं ज्ञानं; तथाच तद्वद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्व विशिष्ट, स्मृतिव्यतिरिक्तज्ञानं प्रमा, तत्करणं प्रमाणमिति आतिष्ठन्ते। इदं नचारु, तद्वद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्वविशिष्टज्ञानत्वस्यैव प्रमाव्यवहारौपयिकत्वेन स्मृतिव्यावृत्तरूपस्य प्रमाव्यवहारोपयिकत्वाङ्गीकारस्याऽसामञ्जस्यात्। नच "स्मृतिहेतोः प्रमाणान्तरतापत्तेस्तु भीतास्तान्त्रिकाः शास्त्रे प्रमाव्यवहारौपयिकं स्मृतिव्यावृत्तं रूपमनुमन्यन्ते" इति प्रामाण्यवाद दीधितिपर्यालोचनया स्मृतिव्यावृत्तरूपस्य प्रमाव्यवहारोपयिकत्ववर्णनं समुचितमेवेति वाच्यम् । संस्काररूपार्थ सन्निकर्षविशिष्ट मनसा स्मृति जननाभ्युपगमे बाधकाभावात्, स्मृतिकरणस्य मनसः प्रत्यक्ष एवान्भावात् प्रमाणान्तरतापत्तिभयस्यैवाभावादिति ॥

उदयनः प्रमाव्याप्तं प्रमाणमिति मनुते तदुक्तं न्यायकुसुमाञ्जलौ "मितिः सम्यक्परिच्छित्ति स्तद्वत्ताच प्रमातृता। तदयोगव्यवच्छेदः प्रामाण्यं गौतमेमते" इति इदमपि नसम्यक्–प्रमेयसामान्यस्य ईश्वरप्रमाव्याप्तत्वादतिव्याप्तेः । साधनाश्रयान्यतरत्वेसति प्रमाव्याप्तं प्रमाणम् । ईश्वरसङ्ग्रहायसत्यन्ते आश्रयग्रहणमित्युक्तिरपि नशोभते, कर्तरि ल्युटोऽननुशासनात् प्रमाकर्तरि प्रमाणपदप्रयोगासम्भवात्। यथार्थज्ञानेऽव्याप्तेश्च, भावल्युटोनुशासनसत्वात् यथार्थज्ञाने प्रमाणशब्दस्य साधुत्वात् इति प्रभाकराः

अनुभूतिः प्रमाणम्, अनुभूतिर्नाम—स्मृतिव्यतिरिक्तज्ञानमिति सङ्गिरन्ते एतदपि नयुक्तम्। स्मृतौ, यथार्थज्ञानसाधनेषुचाव्याप्तेः अपिच संशयविपर्यययोः सर्वसम्प्रतिपन्नयोरपलापासम्भवात्तत्रातिव्याप्तेः सर्वज्ञानयाथार्थ्यस्य सर्वथा असम्भवात्। असम्भवप्रकारश्च सुधायां विपुलमुपपादितः। ग्रन्थगौरव भयान्नेह वितन्यते मया॥

किञ्च सर्वज्ञानेष्वपि आत्मा, ज्ञानस्वरूपं, विषयश्चेतित्रितयंभासते, सर्वस्मिन्ज्ञाने आत्मस्वात्मांशयोः प्रमाणत्वं प्रत्यक्षत्वंचास्तीति तेषां मतम्। स्मृतिव्यतिरिक्तज्ञानस्यैव प्रमाणत्वस्वीकारे स्मृतेरात्म स्वात्मांशयोरप्रामाण्यं स्यात्, तत्राव्याप्तिरपि दूषणमस्तीति। आनाधिगतार्थज्ञानं प्रमा, तत्साधनं प्रमाणमिति ब्रुवते भाट्टाः, एवमन्येपि, तदुक्तम्—"प्रमाचाज्ञाततत्वार्थ ज्ञानमेवात्रभिद्यते। तस्मादज्ञात-तत्वार्थ ज्ञानसाधनमेव नः॥ प्रमाणमिति निर्णीतम्" इति इदमपि असमञ्जसम्—संस्कारद्वारा प्रमाजनितस्मरणस्य, प्रमामूलकानुवादजनितज्ञानस्यच मूलभूत प्रमासमानविषयकज्ञानत्वेपि उभयोः प्रमात्वानङ्गीकारस्य निर्युक्तिकत्वेनानौचित्यात्। नह्येकस्मिन्नर्थे संप्लवमानं प्रत्यक्षमनुमानमागमोवाऽप्रमाण शङ्कापथमारोहति अर्थवैपरीत्येहि अप्रमण्यं स्यात्। नहि प्रत्यक्षेण गृहीतो घटः पुनः प्रत्यक्षेण, अन्येनवा प्रमाणेन गृह्यमाणः अघटो भवति। नापि धूमेन लिङ्गेन वह्निमत्तयाऽनुमितः पर्वतः तथा आलोकेन लिङ्गेनानुमीयमानः, पर्वतोवह्निमानिति शब्देन गृहीतोवा निर्वह्निर्भवितुमर्हति॥

एतन्मते दूषणमुद्भावि न्यायकुसुमाञ्जलौ—"नापि यथार्थत्वविशिष्टमेतदेव (अनधिगतार्थ-ज्ञानत्वमेव) धारावहनबुद्ध्यव्याप्तेः। नच तत्तत्कासकलाविशिष्टतया तत्राप्यनधिगतार्थत्वमुपपादनीयम्। क्षणोपाधीनामनाकलनात्। नचाज्ञातेष्वपि विशेषणेषु तज्ज्ञानित विशिष्टता प्रकाशत इति कल्पनीयम्। स्वरूपेण तज्ज्ञनने अनागतादिविशिष्टतानुभव विरोधात्। नचैतस्यां (ज्ञाततायां) प्रमाणमस्ति" "तत्सद्भावेपि (ज्ञाततासद्भावेपि) वा स्मृतेरपि तथैव प्रामाण्यप्रसङ्गात्। जनकागोचरत्वेपि उत्तरोत्तर-स्मृतौ पूर्वपूर्वस्मरणजनित ज्ञाततावभासनात्। अस्तुवा प्रत्यक्षे यथातथा। गृहीतविस्मृतार्थ श्रुतौ कावार्ता? अप्रमैवासावितिचेत् गतमिदानीं वेदप्रामाण्यप्रत्याशया। नह्यनादौ संसारे स्वर्गकामो यजेतेति वाक्यार्थः केनाचिन्नावगतः? सन्देहेपि प्रामाण्यसन्देहात्। नच तत्रापि कालकलाविशेषाः परिस्फुरन्ति। नचैकजन्मावच्छेदपरिभाषयेदं लक्षणम्। तत्राप्यनुभूतविस्मृतवेदार्थे प्रत्यप्रामाण्यप्रसङ्गात्" इति। अनधिगतार्थग्राहिज्ञानत्वं प्रमात्वमिति वदतामद्वैतिनां मतेपि इदं सर्वदूषणं नशक्यपरिहारम्। सङ्गृहीतंच दूषणं श्रीमद्भगवत्पादैः श्रीमद्विष्णुतत्वविनिर्णये—"नच प्रमाणबहुत्वेदौर्बल्यम्। दार्ढ्यमेवहि बहुवाक्यसंवादे दृष्टम्। तथासत्यभ्यासदेरपि अप्रामाण्यहेतुत्वं स्यात्। अभ्यासस्यच तात्पर्यलिङ्गत्वं सर्वेषां सिद्धम्। तदनङ्गीकारे तत्पक्षेपि नवकृत्वस्तत्त्वमसीत्यभ्यासस्यानुवादकत्वेनाप्रामाण्यं स्यात्" इति। अतः अनाधिगतार्थग्राहिज्ञानत्वं प्रमात्वमिति पक्षः हेय एवेति॥

सौगतास्तु निर्विकल्पकमेकमेव प्रमाणं, सविकल्पकं सर्वमप्रमाणमित्यभ्युपयन्ति, तदपि नचारु। सविकल्पकसामान्यस्य प्रामाण्यापलापे बहुतरलोकविरोधस्य जागरूकत्वात् उक्तंच बौद्धधिकारे—"लोकस्यपि व्यतिक्रमे विचारस्य याहच्छिक वाङ्मात्रत्वापत्तेः" इति। अपिच सविकल्पकानन्तरमेवार्थक्रिया दर्शनात् तदन्यथानुपपत्त्या प्रामाण्यं सविकल्पकस्य दुर्निवारम्। किंचार्थेन्द्रियसन्निकर्षोत्तरं सविकल्प-कस्यैव जननात् निर्विकल्पकज्ञानं शशविषाणसहोदरभावमेव भजते "एतज्जन्मनि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वादनुमितिवत्" इत्यनुमानेन मण्युक्तेन विशिष्टबुद्धिप्रति

विशेषणज्ञानस्य कारणत्वं सिध्यति, कारणस्य विशेषणज्ञानस्यापि सप्रकारकत्वे विशिष्टबुद्धित्वात् विशेषणज्ञानान्तरं कारणं कल्पनीयम्, एवं तस्यापि विशेषणज्ञानस्य सप्रकारकत्वे विशेषणज्ञानान्तरं कारणं कल्पनीयमित्यनवस्थाभयेन प्राथमिकं विशेषणज्ञानमेव निर्विकल्पकमङ्गीक्रियत इति नैयायिकवादोपि नशोभते। विशिष्टबुद्धौ सर्वत्र विशेषणज्ञानं कारणमिति नैनैवाऽनङ्गीकारात्, अनुव्यवसाये सर्वत्र प्रकारताविशेष्यतयोः, प्रकारिताविशेष्यितयोर्वा पूर्वमनुपस्थितयोरपि भानस्य स्वीकारात्। तदुक्तं दीपिकाप्रकाशिकायाम्—"अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयो र्भानस्य सर्वसम्मतत्वात्" इति॥

एवमभावत्वस्यानुपस्थितस्य प्रकारत्वं वर्णितं दिनकरीये "अत्र नव्याः, अभावत्वस्याखण्डोपाधित्वे मानाभावः, किंतु भावभिन्नत्वं, समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्न प्रतियोगिताकसत्ताभावरूपं, तच्च पूर्वानुपस्थितमपि प्रकारः............नच सत्ताभावरूपस्याभावत्वस्यानुपस्थितस्य प्रकारत्वे विशेषणधियो हेतुत्वे व्यभिचार इति वाच्यम्। विशेषणभेदेन हेतुतायाभिन्नत्वेन तत्र तद्धेतुत्वानुपगमात्, फलानुरोधित्वात्कल्पनाया इति प्राहुः" इति। एवं सामान्यलक्षणप्रत्यासत्त्यनङ्गीकारपक्षे व्याप्तिग्रहविषयो वह्निर्नपर्वते विशेषणमनुमितौ, किंत्वन्य एव वह्निः, सच पूर्वमनुपस्थित एव। अन्यविशेषणज्ञानस्य कारणत्वेऽतिप्रसङ्गो दुर्वारः। एवं बहुत्र स्थलेषु व्यभिचारः प्रादर्शि तर्कताण्डवे। बहुत्र व्यभिचारदर्शनात् जन्यविशिष्टज्ञानत्वेन जन्यविशेषणज्ञानत्वेन कार्यकारणभावोऽसम्भवदुक्तिक एवेति। अपिच—इदमित्थमितिहि सर्वापि धीः सप्रकाराऽनुभूयते। अन्यथा निष्प्रकारकधीवन्निर्विषयधीरपि स्यात्। एवमिच्छाद्वेषादयोपि निष्प्रकारका अतीन्द्रिया अपिस्युरित्याद्यनेकानुपपत्ति भाजनत्वान्निर्विकल्पकज्ञानं नाङ्गीकरणीयमिति॥

**प्रामाण्यस्य, अप्रामाण्यस्यच स्वतस्त्व परतस्त्वविषये बहवो मतभेदा उपलभ्यन्ते। तथाहि** ज्ञानानां प्रामाण्यमप्रामाण्यंच स्वत एवेति मन्यन्ते साङ्ख्याः। गौतमीया वैशेषिकाश्च प्रामाण्यं अप्रामाण्यंच परत इति बुध्यन्ते। बौद्धास्तु प्रामाण्यं परतः, अप्रामाण्यं स्वत इति सङ्गिरन्ते। मीमांसकाः प्रामाण्यं स्वतः अप्रामाण्यं परत इति प्रतिपन्नाः—तत्र भाट्टाः ज्ञानसामान्यस्यातीन्द्रियत्वात् ज्ञानविषयकप्रत्यक्षस्याभावात् प्राथमिक ज्ञानग्रहात्मिकया ज्ञानजन्य ज्ञाततालिङ्गकानुमित्या प्रामाण्यं गृह्यत इति वदन्ति। मुरारिमिश्रास्तु प्राथमिकज्ञानग्रहरूपेणानुव्यवसायेन प्रामाण्यमवगाह्यत इत्याहुः। गुरवस्तु या सामग्री विषयग्राहिका, सैव विषयाऽलिङ्गित ज्ञानग्राहिकापि भवतीति अर्थेन्द्रियसन्निकर्षोत्तरं विषयं तदालिङ्गितज्ञानं ज्ञानांतरंच विषयीकुर्वदेव ज्ञानं जायते, तच्च ज्ञानं स्वात्मकज्ञानविषयत्वरूपां स्वप्रकाशतां भजते, अनेन ज्ञानेन प्रामाण्यं गृह्यते, जायमानं सर्वं ज्ञानं प्रमाणं सदेव जायते ज्ञायतेच, अतोऽप्रामाण्यमेव नास्तीत्यातिष्ठन्ते। अस्मन्मतेतु प्रामाण्यं स्वतोजायते ज्ञायतेच, अप्रामाण्यं परतोजायते ज्ञायतेचेति। या सामग्री यज्ज्ञानजनिका, सैव सामग्री तज्ज्ञानगत याथार्थ्य लक्षणप्रामाण्यस्यापि जनिका भवति, एवं या सामग्री यज्ज्ञानग्राहिका सैव सामग्री तज्ज्ञान गतयाथार्थ्यलक्षण प्रामाण्यस्यापि ग्राहिका भवति। तथाच इदमुदितं भवति, ज्ञानगतयाथार्थ्यलक्षण प्रामाण्यस्योत्पत्तौ स्वतस्त्वंनाम ज्ञानजनकमात्राधीन जन्मत्वं, तच्च—ज्ञानजनकाधीनोत्पत्तिमत्वेसति, ज्ञानजनकान्याधीनोत्पत्तिशून्यत्वं। घटज्ञानगत याथार्थ्यस्योत्पत्तौ स्वतस्त्वनिरूपणावसरे स्वतस्त्वपरिष्कारप्रविष्ट ज्ञानपदेन घटज्ञानमुपादेयम्। एवं तत्तत्प्रामाण्याश्रयज्ञानं ज्ञानपदेनोपादेयमित्युक्तं भवति॥

नचेदं प्रामाण्यस्य स्वतस्त्वं नित्यज्ञानप्रामाण्येऽव्याप्तमिति वाच्यम्। "प्रत्यक्षानुमानागमास्तज्जनितंच ज्ञानं प्रमाणमिह विवक्षितम्" इति सुधानुरोधेन जन्यज्ञानगत प्रामाण्यस्यैव लक्ष्यत्वात्। नचैवमपि

इदं रजतमिति भ्रमे ज्ञानजनके सत्यपि प्रामाण्यानुत्पत्तेरन्वय व्यभिचारात्प्रामाण्यस्य ज्ञानजनाकमात्राधीन जन्मत्वमसम्भवीति वाच्यम् । ज्ञानजनकमात्राधीन जन्मत्वमित्यस्य ज्ञानजनकामत्रधीन जननयोग्यत्वमित्यर्थाश्रयणात् इदं रजतमिति भ्रमे प्रामाण्यनुत्पत्तावपि निरुक्तजननयोग्यत्वाक्षतेरसम्भवस्यानवकाशात्। फलोपधान विवक्षणे कृतेपि ज्ञानजनकमात्राधीन जन्मत्वमित्यत्रत्य मात्रपदस्य केवलार्थकत्वेन प्रामाण्यविरोधिसामग्र्यसमवहित ज्ञानजनकाधीनोत्पत्तिकत्वं स्वतस्त्वमित्यर्थस्य लाभात् इदं रजतमिति भ्रमस्थले ज्ञानजनकस्य प्रामाण्यविरोधि सामग्रीसमवहितत्वस्यैवसत्वात् प्रामाण्यानुत्पत्तावपि क्षतेरभावात् । नचैवमपि सामान्यविरोधि सामग्र्यसमवहिते ज्ञानजनके कस्मिंश्चित्सत्यपि प्रामाण्यानुत्पादा न्नायं परिष्कारो युक्त इति वाच्यम् । मात्रपदस्य कार्त्स्न्यार्थकत्वस्यापि स्वीकारेण यावत्कारणसमुदायस्य सामग्रीत्वात् , प्रामाण्यविरोधिसामग्र्यसमवहित ज्ञानजनकसामग्र्यधीनोत्पत्तिकत्वमित्यर्थस्य लाभात् , पूर्वोक्त भ्रमस्थले ज्ञानजनकस्य कस्यचित्सत्त्वेपि यावत्कारणसमुदायरूपसामग्र्या अभावात् प्रामाण्यानुत्पत्तावपि अनुपपत्तेरभावात् । नच ईदृश स्वतस्त्वपरिष्कारे प्रामाण्यविरोधि सामग्र्य समवहितत्वनिवेशात् , दोषस्य विरोधिसामग्रीत्वात् दोषाभावस्य कारणत्वमशक्यवारणमिति वाच्यम् । "अदुष्टमिन्द्रियंत्वक्षं तर्कोदुष्टस्तथानुमा आगमो दुष्टवाक्यंच" इति ब्रह्मतर्कानुरोधेन, एवम् "निर्दोषार्थेन्द्रियसन्निकर्षः प्रत्यक्षम्, निर्दोषोपपत्तिरनुमा, निर्दोषः शब्द आगमः" इति प्रमाणलक्षणानुसारेणच घटंप्रति दण्डगतदार्ढ्यस्येव दोषाभावस्य कारणतावच्छेदकसाधारण प्रयोजकत्वस्यैवाङ्गीकारात् ॥

अपिच "इन्द्रियादीनामौत्सर्गिकीशक्तिः प्रामाण्य जनने, दोषापवादादप्रामाण्यमपि जनयति" इति सुधापर्यालोचनया दोषाभावस्य कारणत्वं नेष्यते । नचैवं सति "दोषाभावस्य कारणत्वे नास्माकमनिष्टम्" इति देवताधिकरणटीकाविरोधो जागर्तीति वाच्यम् । घटंप्रति कुलालपित्रादि साधारणं यत् स्वविरहप्रयुक्त विरहप्रतियोगिकार्यकत्वरूपं प्रयोजकत्वं तत्परत्वं टीकास्थकारणत्वशब्दस्याश्रित्य विरोधस्य परिहार्यत्वात् । यद्वा अप्तोक्तस्वरूप गुणजन्यत्वस्येव दोषाभावजन्यत्वस्य स्वीकारे वेदापौरुषेयत्वविघाताभावात् , वेदापौरुषेयत्वस्यैव तत्र प्रस्तुतत्वात् तदभिप्रायेणाभ्युपगम वादेन दोषाभावस्य कारणत्वोक्तेः । तत्रैव टीकायां "तावता वेदापौरुषेयत्वाव्याघातात्" इत्युत्तर वाक्यानुरोधेन एवमाशयवर्णनस्यौचित्यात् । दोषाभावस्य प्रामाण्यकारणत्वे दूषणं जागर्ति, तदुक्तं "दोषाभावो नप्रमाण्यकारणं, यादृच्छिक संवादादिषु प्रमाज्ञानोदयात्" इति तत्वनिर्णय टीकायाम् । एवं "तर्हि दोषाभावः कारणमायातमिति चेन्न तथासत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात्" इति सुधायां जिज्ञासाधिकरणे । एवमन्यत्र बहुत्र ग्रन्थेषु दूषणमुपपादितमस्ति ॥

उक्तंहि वार्तिके दोषाभावस्य प्रामाण्ये प्रयोजकत्वमेव, नतु कारणत्वम् । "तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः । अप्रामाण्यद्वयाभावस्तेनोत्सर्गोऽनपोदितः ।" इति । अस्यार्थः, गुणाधीनदोषाभावतः, अबोधकत्वरूपं विपरीतबोधकत्वरूपंवा यदप्रामाण्यद्वयम् , तदभावः, तेन—दोषाभावस्याप्रामाण्य निरासे उपक्षीणशक्तिकत्वेन, ज्ञानसामान्य सामग्रीत एव प्रमाजायत इत्युत्सर्गो न भग्न इति ॥

ननु "तथासत्युत्सर्गापवादयोः क्वाप्यभावप्रसङ्गात्" इति वाक्येन प्रतिबन्धकाभावस्य दोषाभावस्य कारणत्वे उत्सर्गापवादविलोपप्रसङ्गो दूषणमुदभावि; तच्च कथमुपपादनीयं इतिचेत्—स्वसामग्रीबलात् यत्कार्यं प्रसक्तं तदौत्सर्गिकम् । सत्यपि पुष्कलकारणे यद्वशात् कार्याभावः, विपरीतकार्यंवा,

तदपवादकमिति भण्यते। प्रतिबन्धकाभावस्यापि कारणत्वस्वीकारे तस्यापि सामग्रीकोटिप्रवेशापत्त्या, प्रतिबन्धकसत्त्वस्थले तत्सामग्र्यभाव विपरीतसामग्रीसद्भावाभ्यामेव कार्याभावस्य, विपरीतकार्यस्य- चोपपत्त्या, सर्वानुभवसिद्धोत्सर्गापवादभावः दत्तजलाञ्जलिः स्यादिति । करणानामुत्पत्तौ स्वतस्त्वं— ज्ञानजननशक्त्यभिन्न तद्गतयाथार्थ्यजननशक्तिमत्त्वम् । अथवा ज्ञानजनन शक्तिवत्सहज याथार्थ्यजनन शक्तिमत्वं इति, ज्ञानगत याथार्थ्यस्य ज्ञप्तौ स्वतस्त्वंनाम स्वाश्रयज्ञानग्राहकमात्रग्राह्यत्वं, स्वाश्रयज्ञानग्राहकेण साक्षिणैव ग्राह्यज्ञानगतप्रामाण्यं गृह्यत इतिभावः । तर्कताण्डवे " ज्ञानगतयार्थार्थ्यस्य ज्ञानग्राहकमात्र- ग्राह्यत्वं स्वतस्त्वम् " इति सुधारूढं स्वतस्त्वपरिष्कारत्रयं प्रादर्शि । आद्यं ग्राह्यप्रामाण्यविरोध्युपस्थापक सामग्र्यसमवहित ग्राह्यप्रामाण्याश्रय तत्तज्ज्ञानविषयक साक्षिज्ञानविषयत्वनैयत्यमिति ॥

अस्य समन्वय इत्थं, ग्राह्यप्रामाण्यस्य—घटत्ववद्विशेष्यकत्वावच्छिन्न घटत्वप्रकारकत्वस्य, यद्विरोधि—घटत्ववद्विशेष्यकत्वावच्छिन्न घटत्वप्रकारकत्वाभावादिकं, तदुपस्थापकसामग्री–दोषशङ्कादि- रूपा, तदसमवहितं, ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञानविषयकं यत्साक्षिज्ञानम्—घटमहं जानामीत्याकारकं, तेन घटत्ववति घटत्वप्रकारकत्वरूप प्रामाण्यं गृह्यत एवेति । एवमन्यत्रापि प्रामाण्ये समन्वयो ज्ञातव्यः ॥

द्वितीय परिष्कारश्च—तत्तज्ज्ञानप्रामाण्यस्य ग्राह्यप्रामाण्याश्रय तत्तज्ज्ञानविषयक साक्षिज्ञान विषयत्वयोग्यत्वमिति । अस्मिन्परिष्कारे योग्यत्वनिवेशात् ग्राह्यप्रामाण्यविरोध्युपस्थापकसामग्र्यसमवहि- तत्वं न निवेशनीयं प्रयोजनाभावात्, प्रामाण्यविरोध्युपस्थापकसामग्र्यांसत्यां साक्षिणा ग्राह्यज्ञानप्रामाण्यस्या- ग्रहणेपि साक्षिज्ञानविषयत्वयोग्यत्वसत्वात् कस्याश्चिदपि अनुपपत्तेरभावात् । प्रामाण्यस्य साक्षिज्ञान- विषयत्वं योग्यत्वं नामज्ञानग्राहकैकशक्तिविषयत्वमित्युक्तं प्रकाशे । तथाच ग्राह्यप्रामाण्याश्रयतत्तज्ज्ञान ग्राहकैक शक्तिविषयत्वमिति पर्यवसितम् । इदंच प्रतिबन्धकसमवधानेपि प्रामाण्ये वर्तते, औत्सर्गिक- शक्तेरनपायादिति । इदं परिष्कारद्वयं स्वमतासाधारणम् ॥

तृतीय स्वतस्त्वपरिष्कारः मीमांसकादिमत साधारणः उभयासिद्धप्रामाण्याविषयकज्ञानाभिन्न, ग्राह्यप्रामाण्याश्रय तत्तज्ज्ञान विषयक ज्ञानविषयत्वनैयत्यं तत्तज्ज्ञानप्रामाण्यस्येति । अस्यसमन्वय प्रणाली इत्थम्, स्वतस्त्ववादिनो द्वैतिनः, भट्टः, गुरुः, मुरारिमिश्र इति त्रयोमीमांसकाः, अद्वैतिप्रभृतयश्च । एकैक एकैक प्रणालीमनुसरति । तथाहि तत्रभट्टः ज्ञानसामान्यस्यातीन्द्रियतावादी । अतः ज्ञानेन ज्ञातता, समानविषयाजायते । तल्लिङ्गकपरामर्शेन घटत्वप्रकारक ज्ञानविशेष्यत्वव्याप्य घटत्वप्रकारक ज्ञाततावान् घट इत्याकारकेण जनितया घटोघटत्वप्रकारक ज्ञानविशेष्य इत्यकारकानुमित्या घटत्ववति घटत्वप्रकार- कत्वरूपं ग्राह्यज्ञानप्रामाण्यं गृह्यत इति वदति । गुरुर्ज्ञानसामान्यस्य मितिमातृमेयत्रितय विषयकत्वादी स्वप्रकाश घटादिज्ञानेन घटादिज्ञानानिष्ठ घटत्ववद्विशेष्यकत्वावच्छिन्न घटत्वप्रकारकत्वादिरूपं प्रामाण्यं गृह्यत इति भणति ॥

मुरारिमिश्रस्तु प्राथमिकज्ञानग्रहरूपेणानुव्यवसायेन ग्राह्यज्ञानप्रामाण्यं विषयीक्रियत इति वक्ति । द्वैतिनां रीतिः प्रदर्शितैव । भिन्नभिन्न प्रक्रियावलम्बनात् स्वतस्त्ववादिभिरनेकैः सह परतस्त्ववादिनः तार्किकस्य विचार एकदा न घटते । अतः स्वतस्त्वपरिष्कारप्रविष्टेन उभयेत्यनेन भट्टतार्किकोभयं, गुरु- तार्किकोभयं, मिश्रतार्किकोभयं, द्वैतितार्किकोभयं मायावाद्यादि तार्किकोभयंवा ग्राह्यम् । तथाच उभयसिद्धप्रामाण्याविषयिकम्—प्रामाण्याविषयकत्वेनोभयसम्मतं यज्ज्ञानं—अयं घट इत्यादिज्ञानं तद्भिन्नं

ग्राह्यप्रामाण्याश्रय तत्तज्ज्ञानविषयिकं यज्ज्ञानं सिद्धान्ते साक्षिज्ञानं, भट्टमते ज्ञाततालिङ्गकानुमितिः, गुरुमते स्वप्रकाशघटादिज्ञानं, मिश्रमतेऽनव्यवसायः तेन गृह्यत एवेत्येवं रूपं तद्विषयत्वनैयत्यं स्वतस्त्वं त्वन्मते निराबाधमेवेति ॥

ननु ज्ञानगत प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं कुतोऽङ्गीकरणीयं, परतस्त्वाभ्युपगमे बाधकाभावादिति चेत्-न-अनवस्थायादुष्परिहरत्वात् । प्रामाण्यस्यावश्यवेद्यत्वानभ्युपगमात् अनवस्थाया नावकाश इति वाच्यम् । निरशङ्कप्रवृत्तौ जननीयायां प्रवर्तक ज्ञाने प्रामाण्या वेदनस्याऽवश्यकत्वात् । तथाहि—ज्ञानं तावत् स्वविषयज्ञानेच्छामनपेक्ष्यैव ज्ञानेन गृह्यत इत्यविवादं, ज्ञातेतस्मिन् प्रामाण्यस्य, अप्रामाण्यस्यवानवगमे विशेषदर्शनाभावात् प्रामाण्यसंशयो दुर्निवारः, प्रामाण्यसंशयेसति अर्थसंशयः । अवश्यमेव जायेत, तथाचार्थनिश्चयाभावात् निःशङ्काप्रवृत्तिर्विलीयेत, निःशङ्कप्रवृत्तौचार्थनिश्चयस्य कारणतायाः सर्वसम्प्रतिपन्नत्वात् । नच सफलप्रवृत्तिजनकत्वलिङ्गकानुमित्या प्रामाण्यं गृह्यत इति तथासति अनुमितिप्रामाण्यमपि अन्येन गृह्यत इति वाच्यम् । अनुमितिप्रामाण्य ग्राहकस्यापि प्रामाण्यमन्येन गृह्यत इत्यङ्गीकारेऽनवस्थायाः स्पष्टत्वात् इति । प्रामाण्यस्य साक्षिवेद्यत्वे कथं नानवस्थेति आक्षेपः समाधेयोऽवशिष्यते । साक्षी खलु वृत्तिज्ञानं गृह्णन् तत्प्रामाण्यं गृह्णातीति वृत्तिज्ञानानां स्वतः प्रामाण्यम् । साक्षी स्वप्रकाशत्वात् स्वगतप्रामाण्यमपि अवगाहते, साक्षिणः यथार्थत्वनियमात् , नाहार्यसंशयविषयत्वस्यावकाशः । तदुक्तं " साक्षिसिद्धेत्वसंशयात् " इति ॥

ननु प्रामाण्यस्योपत्तौ ज्ञप्तौच स्वतस्त्वाङ्गीकारे नास्तिक समयजनित ज्ञानस्यापि प्रामाण्यं स्वत उत्पद्येत ज्ञायेतच, तत्रापि ज्ञानहेतोः, ज्ञानग्राहकस्यचानपायत् । नचेष्टापत्तिरिति वाच्यम् । वेदविरोधिनो नास्तिकसमयस्य यथार्थज्ञानजनकत्वाङ्गीकारे वेदप्रामाण्यं विलीयेत । वस्तुनोद्वैरूप्यंवाऽपद्येतेतिचेत् । ज्ञानजनकमिन्द्रियं लिङ्गंशब्दोवा स्वजन्यज्ञानेप्रामाण्यमुत्पादयत्येवेति न नियमः, किंतु ज्ञानकरणानामिन्द्रियादीनां प्रामाण्यजननेच औत्सर्गिकीशक्तिरस्ति, दोषसन्निधाने सहजशक्ति प्रतिबन्धेन अप्रामाण्यं जनयतीन्द्रियादिकम् । एवं ज्ञानग्राहकः साक्षी स्वग्राह्यज्ञाने प्रामाण्यं गृह्णात्येवेति ननियमः, अपितु साक्षिणः स्वग्राह्यज्ञाने प्रामाण्यग्रहणेच औत्सर्गिकीशक्तिरस्त्येव, अथापि विसंवादादि रूपापवादकेसति नैसर्गिकशक्तिकुण्ठनेन अपतादकाहितशक्त्याऽप्रामाण्यं गृह्णाति वेत्रजनक नैसर्गिक शक्तिमतोपि वेत्रबीजस्य दावदग्धस्य सहजशक्तिप्रतिबन्धेन आहितशक्त्या कदलीकाण्डरूप कार्यान्तरोत्पादकत्वं नाप्रामाणिकम् । तथाच नास्तिकसमयप्रणेतुः मिथ्याज्ञानविप्रलम्भाऽपटुकरणत्वादीनां दोषाणां सत्त्वात् तन्मूलको नास्तिकसमयः स्वजन्यज्ञानेऽप्रामाण्यमेव जनयति । एवं बाधकप्रत्ययलक्षणापवादात् साक्षिणाऽप्रामाणमेव गृह्यते । नास्तिकसमयस्य मिथ्याज्ञानादिमूलकत्वमेव नास्तीति तु नशङ्कापथमप्यारोहति । वेदविरोधित्वात् । नास्तिकसमयविरोधित्वात् वेदस्यैवाप्रामाण्यं कुतो नवक्तव्यमिति चेत्—वेदस्यनित्यतायाः निर्दोषतायाश्च वाचाविरूपनित्ययेत्यादि बहुतरश्रुति सम्प्रतिपन्नत्वात् वेदस्याऽप्रामाण्यशङ्काया दूरतो निरासादिति ॥

करणप्रामाण्यस्य यथार्थज्ञानजनकत्वरूपस्य ज्ञप्तौ स्वतस्त्वं नाम—ज्ञानजनकत्व ग्राहकमात्र ग्राह्यत्वम् । अस्यार्थः, करणगतं ज्ञार्थजनकत्वं येन गृह्यते; तेनैव तन्निष्ठं यथार्थज्ञानजनकत्वं गृह्यत इति । ज्ञानजनकत्वग्राहकं—रूपादिज्ञानं करणसाध्यं कार्यत्वात् , । छिदादिवत् चक्षुः ज्ञानकरणं इन्द्रियत्वात् श्रोत्रादिवदित्याद्यनुमानं, चक्षुरादिकं ज्ञानकारणमित्यादि वाक्यं वा तेनैव चक्षुरादिष्ठं प्रामाण्यं गृह्यते,

ज्ञानजनत्वशक्तेरवगाहने प्रमाजनन शक्तिमानस्यावश्यकत्वात्, उभयोः शक्त्योरभेदात् । नचैवंसति प्रमाणपद्धत्यादौ करणगतप्रामाण्यस्य ज्ञप्तौ परतस्त्वोक्तिः कथं युज्यत इति वाच्यम् । इन्द्रियादिस्वरूपं यथायथं साक्षिणानुमानेनच गृह्यते । इन्द्रियादिगतयथार्थज्ञानजनकत्वंतु इन्द्रियादिस्वरूपग्राहकानुमानाद्यतिरिक्तेनानुमानादिना गृह्यते, अतः करणग्राहकमात्र ग्राह्यत्वरूपं स्वतस्त्वं नघटत इत्यभिप्रायेण परतस्त्वकथनात् । इत्थंच करणप्रामाण्यस्य ज्ञप्तौ परतस्त्व स्वतस्त्वोक्ति विवक्षाभेदेन युज्यत एवेति ग्रन्थासङ्गते र्नावकाश इति ॥

अप्रामाण्यंनाम—अप्रमात्वं, अप्रमाजनकत्वंच एतदुभय परत एव जायते ज्ञायतेच । तथाहि—भ्रमे अर्थस्यासत्त्वेन सन्निकर्षायोगात् पित्तादिदोषाणां तत्स्थानाभिषिक्तताया आवश्यकत्वात्, दोषोत्कर्षेण भ्रमोत्कर्षदर्शनात्, अनन्यथासिद्धान्वयव्यतिरेकवत्त्वाच्च दोषोऽप्रमायां हेतुरङ्गीकार्यः । इत्थंच ज्ञानजनकमात्राधीनजन्मत्वाभावरूपं, ज्ञानजनकातिरिक्त कारणजन्यत्वरूपं वा परतस्त्वमप्रमात्वरूपाप्रामाण्यस्योत्पत्तौ निराबाधं सिद्धम् । अयतार्थज्ञानजनकानां प्रमाणाभासानां ज्ञानजननशक्तिभिन्नायाथार्थ्य जननशक्तिमत्त्वमुत्पत्तौ परतस्त्वम् । तदुक्तं प्रमाणपद्धतौ—"अप्रामाण्यजननेत्वन्या शक्ति र्दोषवशादाविर्भवति" इति । प्रमात्वरूप प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं यद्वर्णितं तदभावरूपमेवाप्रमात्वरूपाप्रामाण्यस्यज्ञप्तौ परतस्त्वम् । अयथार्थज्ञानजनकत्वरूपाप्रामाण्यस्य ज्ञप्तौ परतस्त्वंनाम—ज्ञानजनकत्वग्राहकमात्राग्राह्यत्वम् । दोषादिज्ञानानपेक्षणेन भ्रमजनकत्वस्य साक्षिणा क्वाप्यग्रहणादिदं परतस्त्वं निराबाधमिति ॥

ननु साक्षिणाऽप्रामाण्यस्यापि ग्रहणे "अप्रमाणज्ञानस्वरूपमात्रं साक्षिवेद्यं, तदप्रामाण्यंत्वनुमेय मित्याचार्याः" इति पद्धतिविरोधो जागर्तीतिचेत्—दोषासहकृत साक्षिणाऽप्रामाण्यं नगृह्यत इति तस्याऽनुमेयत्ववर्णनात् । तदुक्तं वादावल्याम् "नचाप्रामाण्यं क्वचिदपि निरपेक्षसाक्षिणा निश्चितचरम्" इति सुधायाम् "साक्षी अपवादकसद्भावेऽप्रामाण्यमपि गृह्णात्येव" इति । ननु प्रामाण्यस्य स्वतस्त्वेऽनभ्यासदशायां संशयो दुर्घट स्यात्, ग्राह्यप्रामाण्याश्रयस्य ज्ञानस्य ग्रहे तत्र प्रामाण्यग्रहावश्यकत्वात्, तस्याग्रहे धर्मिज्ञानाभावात्, संशये धर्मिज्ञानकारणताया अङ्गीकारादितिचेत्—असति प्रतिबन्धकेहि प्रामाण्यस्य साक्षिज्ञानविषयत्वनैयत्याभ्युपगमात् प्रतिबन्धकसमवधाने साक्षिणाऽप्रामाण्यग्रहणेपि निरुक्तप्रामाण्यस्वतस्त्व परिष्कारस्य दोषासंस्पर्शात् अत्र समाधिः विस्तरेणोपपादितस्तर्कताण्डवे ॥

तथाच इदं प्रमाणम्, एतच्चाप्रमाणमिति विवेचनायां सप्रमाणं निष्पन्नाया सत्यामशेषाम्नायैरुपक्रमादि बलाद्विष्णुरेव सर्वोत्तमः प्रतिपाद्य इत्यादि विषयजालं स्वयमवगन्तुम्, अन्यानवगमयितुमपि नातीव क्लेशोऽनुसरणीयस्स्यादिति । तदेवंभूतैः प्रमाणैः पदार्थानां नित्यत्वानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्य शमदमादिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवण मनन निदिध्यासनानि आदरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारेसति अत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्ति विशिष्टानन्दादि स्वरूपाविर्भावलक्षणा मुक्तिर्भवतीति ॥

महीशूर पुरी राजन्नृपवर्यै र्निरन्तरम् ।
गीर्वाणवाणीशालायां पोषितायां विशेषतः ॥ १ ॥

काणादे गौतमे न्याये प्रामुख्यं भजताधुना ।
महताविदुषाऽस्थाने कृष्णमूर्त्यभिधेनच ॥ २ ॥

मानत्रयस्य युक्तत्वं कथितं सोपपत्तिकम् ।
अनेन प्रीयतां श्रीशः सन्तुष्येद्भारतीपतिः ॥ ३ ॥

नपाण्डित्यान्नमात्सर्यान्नचार्थादिव्यपेक्षया ।
कृतोयं किन्तु वाग्बुद्धिशुद्ध्यर्थं केवलं मम ॥ ४ ॥

मयाच रचिते ग्रन्थे गुणः सन् दृश्यते यदि ।
स एव साधुभिर्ग्राह्यो दोषस्त्यज्याश्च सर्वथा ॥ ५ ॥

प्रार्थये सप्रमाणमोहं भूयोभूयश्च शान्तधीः ।
अनुग्राह्यश्च सर्वेषां शान्तानां यतचेतसाम् ॥ ६ ॥

नमोमहद्भ्योऽस्तुनमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः ।
ये ब्राह्मणागामवधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तुराज्ञाम् ॥ ७ ॥

प्रमाणत्रयविमर्शः समाप्तः

अस्मद्गुर्वन्तर्गत
श्रीमद्धनुमद्भीममध्वान्तर्गत
रामकृष्णवेदव्यासात्मकेष्टदेवता
कुलदेवतात्मक श्रीलक्ष्मीनृसिंहःप्रीयताम् ॥

# ॥ अखिलाऽम्नायैक वेद्यो हरिः ॥

लेखकः—पण्डितरत्नं, महा विद्वांसः,
नेरूरु, कृष्णाचार्याः,
व्याकरणप्रधानाध्यापकाः श्रीमन्महाराजसंस्कृत महापाठशाला मैसूरु



श्रीमध्व वादिराजाख्य ऋजुपुङ्गव पूजितौ ।
वन्दे विज्ञान दातारौ वेदव्यास हयाननौ ॥ १ ॥

सूत्रार्थ सुमणिस्फूर्ति सूत्रार्थस्फूर्तिसंयुताः ।
सूत्रादयस्तत्वदेवाः मे दिशन्त्वनिशं पराम् ॥ २ ॥

विक्षिप्त सङ्ग्रहात्क्वापि क्वाप्युक्तस्योपपादनात् ।
अनुक्तकथनात्क्वापि सफलोयं श्रमो मम ॥ ३ ॥

दोषाम्बुदस्य गुणलेश परिग्रहेण मूढेऽपिमय्यति तरां करुणां विधाय ।
अभ्यर्थये कृतिमिमां कृतिनो भवन्तः प्रेमस्पृशा नयदृशा परिशीलयन्तु ॥ ४ ॥

श्रीपादराजप्रणीत 'वाग्वज्रायुधा' ख्य ग्रन्थाद्यपद्यत्वेन श्रुते "श्रीमन्मध्वमते हरिःपरतर" इति श्लोके श्रूयमाणं 'अखिलाम्नायैकवेद्यो हरि' रिति प्रमेयं प्रमाणाधीनं, प्रमाणानि च प्रत्यक्षानुमानागम रूपाणि। आगमाश्च द्विविधाः, पौरुषेया अपौरुषेयाश्चेति । पौरुषेयाः पुराणादयः पुरुषप्रणीता इत्यर्थः, अपौरुषेयाः पुरुषाप्रणीता इत्यर्थः। अपौरुषेयाः परमपुरुष निश्वास मयाश्चत्वारो वेदाः तैरेव वेद्यो हरिरिति समर्थनीयम्। कथमिति चेत् अखिलाश्चते आम्नायाश्च अखिलाम्नायाः केवलाश्चते अखिलाम्नायाश्च अखिलाम्नायैके तैर्वेद्यः । तदर्थश्च अखिलाम्नायेतर प्रत्यक्षानुमानावेद्यत्वेसति अखिलाम्नायवेद्यत्वम्; अखिलाम्नाय मात्रकरणक ज्ञान विषयत्वं हरेरिति फलति ॥

तत्रेमाः शङ्का प्रवर्तन्ते । (१) कोसौ आम्नाय शब्दार्थः, (२) सच नित्यो वा अनित्यो वा (३) पौरुषेयः, अपौरुषेयो वा (४) प्रमाणं वा अप्रमाणं वेति। आम्नाय शब्दार्थः वेदः श्रुतिः अदृष्टवाक्यं, म्ना अभ्यासे अभ्यासार्थकात् म्ना धातोः आम्नायते अभ्यस्यते इति व्युत्पत्या कर्मणि अकर्तरि च कारके संज्ञायामिति सूत्रेण घञ् प्रत्यये घकार ञकारयो रित्संज्ञायां तस्य लोप इति लोपे अकारमात्रे उर्वरिते सति आतो युक् चिण् कृतो रिति युगागमे सति निष्पन्नस्य एकप्रकारा सकृदुक्ति कर्मत्वमर्थः तच्च शब्दान्तरासाधारणमिति असाधारण्येन व्यपदेशा भवन्तीति न्यायेन भूतभवद्भविष्यद्भिरखिलैरपि एक प्रकारेण पठ्यमानत्वं तच्च अनादि नित्यत्वे एव सङ्गच्छते। आम्नाय इति महा (अन्वर्थ) संज्ञाकरणेन श्रुतीनां अनादिनित्यत्वं लभ्यते ॥

ननु उत्पन्नो गकारः विनष्टो गकार इति प्रतीतेः वर्णानां उत्पादविनाशशालित्वेनानित्यत्वात् अनित्यवर्णसमुदायात्मकत्वेन वेदस्याप्यनित्यत्वापत्तिरिति चेन्न। सोयंगकार सोयंमकार इति प्रत्यभिज्ञाया एव मानत्वात्। एतत्कालिक गकारे पूर्वकालिक गकाराभेदः भासते स चाभेदः वर्णानां अनित्यत्वेन संभवतीति उत्पन्नो गकारः विनष्टो गकार इति प्रतीतेः गकाराभिव्यंजकध्वनेः उत्पादविनाश शालित्वाभ्युपगमेनादोषात्। न च वर्णानां नित्यत्व सर्वगतत्वयो स्सतोरपि स्वतः क्रमशून्यत्वात् क्रमेण विना पदवाक्यभावाभावात् पदवाक्ये विना प्रामाण्याभावभिया क्रमः पौरुषेय एव स्वीकार्य इति अस्मादादि बुद्धेरनित्यत्वात् अस्मादादिबुद्ध्युपाधिक क्रमविशेष विशिष्टवर्ण समुदायात्मक वेदस्याप्यनित्यत्वापत्तिरिति वाच्यम्। अस्मादादिबुद्धेरनित्यत्वेपि ईश्वरबुद्धेर्नित्यत्वात् ईश्वरबुद्ध्युपधिक क्रम विशेष विशिष्ट वर्ण समुदायात्मक वेदस्य नित्यत्वांगीकारेणादोषात्॥

किञ्च वेदस्य नित्यत्वं वेदेनैवावगम्यते नित्यया अनित्यया स्तौमि ब्रह्म तत्परमं पदम्, श्रुतिर्वाव नित्या अनित्यावावस्मृतयः, अनादिनिधनानित्या वागुत्सृष्टास्वयंभुवा, नित्यावेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः, नित्यावेदाः पुराणाद्याः इत्यादि प्रमाणैरिति॥

ननु वेदः पौरुषेयः, वाक्यसमूहत्वात्, भारतादिवदिति चेन्न। उक्त प्रमाण विरुद्धत्वेन बाधितत्वात्। विपक्षे बाधकतर्काभावेनाप्रयोजकत्वात्। यदि वेदः पौरुषेयः स्यात् तदा धर्माधर्माद्यसिद्धिः स्यात् इति प्रतिकूल तर्कपराहतेश्च। अत एवोक्तं तत्वनिर्णये। तदभावे सर्वसमयाभिमत धर्माधर्माद्यसिद्धेरिति। ननु ऋचः सामानि जज्ञिरे इत्यादि श्रुत्या वेदानां उत्पत्तिः प्रतीयत इति चेन्न। तस्याः अभिव्यक्ति विषयत्वेन उत्पत्ति-विषयकत्वाभावात्। न चैवमपि चक्रे वेदतरोःशाखाः ऋचः सऋचउध्दत्व ऋग्वेदं कृतवान्प्रभुरित्यादिपुराणवाक्यैरुत्पत्तिरेवावगम्यत इति वाच्यम्। शाखाविभाग करण विषयकत्वेन वेदोत्पत्तिविषयत्वाभावात्। अध्ययन विश्रमार्थं शाखादि विभागस्यावश्यकत्वात्। यदि वेदः (पुरुष प्रणीतः) पौरुषेयः स्यात् पुरुषाणां प्रमादाज्ञानसंशयविपर्ययाश्रयः स्यात् तत्प्रणीत ग्रन्थस्य प्रामाण्यानापत्तेः। अपौरुषेयागमानंगीकारे च धर्मादीनां स्वर्गादिहेतुत्वासिद्धिः प्रसङ्गः। एतादृश धर्माधर्मयोः स्वर्ग नरक विशेषकारणत्वमित्यत्र प्रत्यक्षानुमानयोरप्रवृत्तेः। पौरुषेयागमस्य चाप्त्यनिश्चयेन तदनिर्णायकत्वात्। ननु वेदस्यापौरुषेयत्वेपि सर्वस्यापि वेदस्य प्रामण्यं अस्तीति चेन्न। अहं ब्रह्मास्मि तत्वमसीत्यादेः ऐक्य भ्रम जनकत्वेनाप्रामाण्यादिति चेन्न। आपाततः तत्वमस्यादि वाक्यनां ऐक्य भ्रम जनकत्वेपि उपक्रमादि षड्विध तात्पर्यलिङ्गैः निर्णीतार्थक एव वेदः प्रमापकः अन्यथा भ्रमजनक इति सिद्धान्तात्। वेदप्रामाण्यस्य यथार्थ ज्ञानसाधनत्वरूपस्य विशेषतः तत्वनिर्णयादौ उक्तत्वेन तद्विषये लेखनस्यानावश्यकत्वमिति दिक्॥

ननु परब्रह्मरूपहरेः यतोवाचो निवर्तन्ते अशब्दमस्पर्शमरूपमव्ययम् अवचनेनैव प्रोवाच यद्वाचानभ्युदितमित्यादि श्रुतिभ्यः अवाच्यत्वोपपादनादिति चेन्मैवम्। निरुक्त "यतो वाच" इत्यादि श्रुतेः साकल्येन वागविषयत्वेनोपपत्तेः। "सर्वेवेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः, औपनिषद पुरुष" इत्यादि श्रुति स्मृतिभिः वाच्यत्वस्योपपादनात्। नचैवमपि परब्रह्मरूपहरेः वाच्यत्वाभ्युपगमे वाचकस्य गृहीतसम्बन्धस्यैव बोधकत्वात्सम्बन्धज्ञानस्य सम्बन्धिज्ञानाधीनत्वात्सम्बन्धिनः परब्रह्मणः औपनिषदत्वाच्छब्दान्तरेणैव तज्ज्ञानाधीनमिति अनवस्थापत्तिरिति वाच्यम्। शब्दानां परब्रह्मवाचकत्वाङ्गीकारे यौगिकपदानां वाक्यतुल्यतया पृथक्छक्तिग्रहानपेक्षत्वेन अनवस्थायाः दूरतोपास्तत्वात्।

परब्रह्मरूपहरेः परीत्या लक्ष्यत्वपक्षे किमस्य पदस्य लक्ष्यमिति प्रश्ने अवाच्ये ब्रह्मणि लक्षकान्तरपदस्य प्रयोक्तव्यात् तदर्थं वाच्यसम्बन्धितया ज्ञानस्यापेक्षित्वात् तदर्थं लक्षकान्तरपदप्रयोगावश्यकत्वमूलकतया अनवस्थायाः दुर्वारत्वाच्च । अखिलाम्नायेषु स्वरवर्णपदवाक्य महावाक्यानां सत्वात् यः सर्ववेदगपदवाक्य-वर्णस्वरादिभिः । "तत्तद्वाच्यगुणे तत्वात् उच्यते सोऽस्तुनोऽर्थद" इत्युक्त्या परब्रह्मरूपहरेः वाक्य-वाच्यत्वस्यावश्यकतया वाक्ये शक्तिरङ्गीकार्येति चेन्न, नैयायिकमीमांसकैः वाक्ये शक्तेरनङ्गीकारादा-कांक्षादिवशात्कृप्तपदशक्त्यैव विशिष्टार्थबोध सम्भव इत्याशयात् । नच तथासति कृत्तद्धितसमासाश्चेति सूत्रे समासग्रहणस्य नियमार्थकत्ववर्णनपर महाभाष्यस्य वाक्यान्वयादिति सूत्रभाष्ये वाक्यस्य एवमेवान्वयो युज्यते इत्युक्तेः । "अव्यक्तः कर्मवाक्यैश्च वाच्य एकोमितात्मक" इत्यणुभाष्यस्य । सुधायामपि द्वितीयाध्यायारम्भे—नारायणे स्वरवर्ण पदवाक्य महावाक्य रूपस्य समस्तस्य शास्त्रस्य साक्षात्परममुख्ययावृत्या नतु लक्षणया तथा महातात्पर्येण नतु पारार्थ्येन ? समन्वयः प्रथमाध्याये समर्थित इत्यर्थ इत्युक्तेश्च निरालम्बनतापत्तिरिति वाच्यम् । कृत्तद्धितेति सूत्रस्य समास ग्रहणस्य नियमार्थ-कत्वानङ्गीकारे नैय्यायिकमते कृत्तद्धितेतिसूत्रे अर्थवत्पदासम्बन्धात् कृद्ग्रहणे गतिकारक पूर्वस्यापि ग्रहणमिति परिभाषया मूलकेनोपदंशमित्यस्य कृदन्ततदादित्वात्प्रातिपदिकत्वापत्तेः दुरपह्नवत्वात् । समासग्रहणस्य नियमार्थकत्वाभ्युपगमेच नियमेन परत्वाद्बाधस्याङ्गीकारेण मूलकेनोपदंशमित्यादौ वाक्ये शक्तिमभ्युपेत्य अर्थवत्वात् अर्थवत्सूत्रेण प्राप्तप्रातिपदिकत्व वारण सम्भव इत्याशयाः द्वाक्ये शक्तेरङ्गीकारेण सुधाद्याकरग्रन्थस्य महाभाष्यस्य च साङ्गत्योपपत्तेः, "देवानांप्रिय" इति च मूर्खे इति वार्तिकेन मूर्ख-रूपार्थे 'देवानांप्रिय' इति वाक्ये य शक्तेरङ्गीकाराच्च । तस्मात्स्वरादीनामपि पदवद्वाचकत्वं सिद्धमेवेत्यलम् ॥

केचित्साम्प्रदायिकाः सुधायाम्—'ओतंत्वप्राचीद्योङ्कार' इत्यनुव्याख्यान व्याख्यावसारे एतदुक्तं भवतीत्याद्युक्त्वा किं नाम निगमनिरुक्तव्याकरणबलेन अवयवार्थावगमेसति तत्संसर्ग सम्भावनायां प्रसिद्धमन्यथापूर्वमर्थं गमयति वाक्यस्य रूपत्वात्तेषां । नहि वाक्यं सङ्गतिग्रहणापेक्षमर्थं अवबोधयति अधिगतार्थत्वप्रसङ्गात्, अशक्यत्वाच्च तदेतौ औङ्कारब्रह्मशब्दावपि यौगिकौ जिज्ञास्यमानं गुणपरिपूर्णं प्रतिपादयन्तौ जीवजडातिरिक्तमेव किञ्चिदवगमयत इत्युक्त्या, अशक्यवाच्चेति प्रतीकमुपादाय परिमळे—'वाक्यशक्तेरभवेन तद्विशिष्टशक्यविषयत्वाच्चे' त्युक्त्या, वाक्यान्वयादिति सूत्रटीकायां 'पृथक् पृथक् वाचकतया स्थितस्य वाक्यस्य अन्ततो भगवत्परत्वं तच्च तात्पर्यविषयत्वमेवे' त्युक्त्याच वाक्यसमन्वयः तात्पर्यसमर्थनमेवेत्याहुः ॥

एवंच परब्रह्मरूपहरेः वाच्यत्वेसिद्धे, सर्ववेदगपदवाक्य वर्णस्वरादि वाच्यत्वेच सिद्धे, वाक्य महावाक्य तात्पर्यविषयत्वेच सिद्धे, अखिलाम्नाय मात्रकरणक ज्ञानविषयत्वं सिद्धमेवेति सर्वं सुस्थित-मित्यलम् ॥

करकृतमपराधं प्रमादाज्ञानसंशयविपर्ययाश्रयकृतमपराधं क्षन्तुमर्हन्तिसन्तः

# ॥ भाट्टसंग्रह सारसंग्रहः ॥

न्याय, वेदान्त, मीमांसविद्वांसः
न्याय प्रवीणाः
वेदान्तशिरोमणयः
चतुर्वेदी, रामचन्द्राचार्याः
मीमांसाध्यापकाः श्रीमन्महाराजसंस्कृत महापाठशाला, मैसूरु.

## प्रस्तावना



अयि महोदयाः आस्तिकशिरोमणयः, निगमशरणाः सुरभारतीप्रणयिनः, तत्रभवतां सविधे किंचिद्विज्ञापयामि, प्रचितमिदं भुवनतले यत् निखिला अपि मानवाः स्वस्मै हितं कामयन्ते जिहासन्ति चाहितमिति। तत्र हितसाधनं धर्मः, अहितसाधमधर्म इति "धर्मो विश्वस्य जगतः प्रतिष्ठा" "यज्ञेन यज्ञमयजन्त देवाः" इत्यादि प्रमाणप्रमितं तौ च धर्माधर्मौ वेद एम बोधयितुमीष्टे इति "वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः इति प्रामाणदवगच्छामः। स च वेदः मीमांसापरपर्याय विचारपदशास्त्रोपकृत एव स्वफलं निष्पादयितुमलमिति" धर्मे प्रमीयमाणे हि वेदेन करणात्मना, इतिकर्तव्यताभागं मीमांस-पूरयिष्यति इत्यभियुक्तवचनाज्जानीमः। ईदृशं विचारशास्त्रं पूर्वमीमांसानामकं भगवतो नारायणावतारस्य बादरायणस्यान्तेवासी महर्षिर्जैमिनिः प्रबबन्ध, यत्र च मतभेदेन द्वादश षोडश वा अध्यायाः लक्षणा परनामकाः ग्रथिता विराजन्ते। तेष्वपि तृतीयषष्ठदशमा अध्याया अष्टपादाः, अन्ये च चतुष्पादाः। अहत्येदंशास्त्रं सहस्राधिकरणी द्वादशाध्यायित्वपक्षे। षोडशाध्यायीत्वपक्षे तु परःसहस्राधिकरणी इति प्रसिद्धिः। तस्यास्य शास्त्रस्य नैके ग्रन्थाः भाष्यवार्तिकादयः साक्षात् परम्परया वा व्याख्यायै प्रवृत्ताः प्रकाशन्ते। तान् सर्वानुपजीव्य तत्र तत्र विक्षिप्योक्तान् "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः"। इति कारिकापरिगणिता नवयवान् एकत्र सङ्कलयितुकामाः श्रीमातो राघवेन्द्रतीर्थचरणा भाट्टसङ्ग्रहनामकं ग्रंथरत्नं प्राचीकशन्। ग्रंथस्यास्य सारसङ्ग्रहं प्रबन्धमेकं रचयन्तु इति श्रीयुतत्नां गरलपुरीय (नंजनगूडीय) परिमलग्रंथ प्रकाशनमंदिर कार्यालयस्य कार्यदर्शिना-मभिप्रायानुसारेण यथामति प्रकृतप्रबन्धनिर्माणे कुतूहली सवृत्तोऽहं। प्रबन्धेऽस्मिन् सम्भाविता गुणा-अस्मद्गुरुगताः, दोषाश्च मद्गता इति भवन्त आकलयन्तु इति प्रार्थये सविनयं वाचकमहाभागान्॥

## भाट्टसंग्रहकर्तुः गुणपरिचयः

ग्रंथकर्तारः श्रीराघवेन्द्रतीर्थचरणाः परमहंसपरिव्राजकाः षडङ्गवेदपारगाः द्वैतवेदान्तग्रंथानां मनेकेषां प्रणेतारः चतुर्दशविद्यास्थानविशारदाः स्वचरणारविंदसेवकेभ्यः ऐहिकामुष्मिकफलानां वितरणे कल्पतरवः मन्त्रालयनामके सुप्रसिद्धे क्षेत्रे बृन्दावनमधिरूढा विराजन्त इति निश्चप्रचम्। एते स्वचिकीर्षितभाट्टसङ्ग्रहस्य भाष्यवार्तिकटीकादिकं मूलं, ग्रन्थेऽस्मिन् क्रियमाणा कर्मचिंता भगवदाराधन-

रूपा, अनया चाराधितं ब्रह्म प्रसन्नं भवतु" इति ग्रन्थांते निरूपयन्ति। तेन विज्ञायते न ग्रन्थोऽयं स्वकपोलकल्पितपदार्थपरः परं तु पूर्वाचार्यप्रणीत प्रमाणमूलकपदार्थपर इति । अपि च "प्रतिष्ठादि-कामनया पांडित्यमदेन वां न ग्रंथो रचितः" अपि तु भगवत्प्रसादसाधनज्ञानांतरङ्गचित्तशुद्धिसम्पादकस्य नित्यनैमित्तिककर्मानुष्ठानस्यौपयिकत्वात् कर्मज्ञानं मीमांसाशास्त्रद्वारा अधीतवेदैस्त्रैवर्णिकैः सर्वैरपि सम्पाद-नीयमिति बोधनमुखेन उक्तपरम्परया भगवत्प्रसादकामनयैवेति ॥

## ग्रन्थशैली विमर्शः

ग्रन्थस्यास्यादिमं पद्यं "नत्व धर्मं वेदगम्यं जैमिन्यादि मुनीनपि । करोमि बालबोधाय भाट्टो क्त्न्यायसङ्ग्रहम् ॥ १ ॥ इति अन्तिमे चे पद्यं "यदाराधनरूपाणि कर्माणि निखिलान्यपि । तद्ब्रह्म मे प्रसन्नं स्यादनया कर्मचिंतया ॥ २ ॥ भाष्यवार्तिकटीकादि नाना ग्रन्थावमर्शिना। राघवेन्द्रेणयतिना कृतोऽयं भाट्ट सङ्ग्रहः ॥ ३ ॥ इति ग्रन्थेऽस्मिन् प्रत्यधिकरणं क्रमशः सर्वावयवनिर्देशः प्रथमसूत्रार्थवर्णनं च समुल्लसतः। द्वित्र सूत्रात्मकाधिकरणेषु तु सर्वेषां सूत्राणामक्षरार्थवर्णनमुपलभ्यते । क्लिष्टानां विषय-वाक्यानामक्षरार्थकथनं, उपयुक्तश्रौतप्रक्रियाप्रदर्शनं, तैत्तीरीयशाखासमाम्नातानां विषयवाक्यानां काण्ड-प्रपाठकादिस्थाननिर्देशः, अस्मादधिकरणादारभ्य एतदधिकरणपर्यंतमयमंशो निरूप्यत इति प्रकरणार्थ-पिण्डीकरणं, क्वचित् भाष्यवार्तिककारमतविवेचनं, दृष्टांतविधया उपदिदिक्षितानां विषयाणां तत्तन्निर्णाय-काधिकरणीय प्रथमसूत्रग्रहणेन अध्यायपादाधिकरणसंख्यानिर्देशेन च स्थानपरिचयसंपादनं, कुत्रचित् (उपवीताधिकरणे) "अत्र वार्तिके षट्सूत्राणि भाष्ये लिखितानि इत्युक्तं दृश्यन्तेच तानि भाष्यपुस्तकेषु तत्कथमुक्तमिति चिंत्यं" इत्यादिरूपेण विमर्शनं । श्लोकोक्तलक्षणादेः संवादरूपेण प्राचीनोदाहृतप्रमाण-सङ्कलनं, स्वरचर्चादिविषये व्याकरणस्य विशेषतः सक्षीकरणं इत्यादयो गुणा राराजन्ते। इमे च गुणाः यथासम्भवं सौभरस्थन्तरशेषलक्षणबलाबलाहीनाद्यधिकरणेषु उपलभ्यन्ते । प्रकरणांतराधिकरणे "गुणाधिकरण वैषम्यं शास्त्रदीपिकादौ ज्ञेय" मित्युक्त्या ग्रन्थोऽयं पार्थसारथिमिश्रकालोत्तरकालिक इति विज्ञायते। बलाबलाधिकरणे शब्दसामर्थ्यार्थसामर्थ्यरूपयोः लिङ्गयोर्विरोधे उदाहरणप्रदर्शनादयः सूक्ष्मविचारा अपि ग्रन्थेऽस्मिन् निबद्धा इति ॥

ईदृशगुणगणपरिष्कृतं ग्रन्थरत्नं भाट्टसङ्ग्रहनामकं अचिरान्मुद्राप्य विद्वद्रत्नपरीक्षकाणां करकमलेषु प्रापणेन प्रकाशनीयमिति परिमलग्रंथप्रकाशकमंदिरकार्याध्यक्षमहोदयान् विज्ञापये श्रीयुतैः कार्यदर्शिभिर्निर्दिष्टनियमनुसृत्य आदिमास्त्रयोऽध्यायाः निरूप्यन्ते ॥

## शुभं भूयात् मङ्गलाशंसनं

श्रीमत्पूर्णमनीषसद्गुरुगुरोः वेदार्थबोधोद्यत— ।
श्रीमद्व्यासमहामुनेरनुचरं श्रीजैमिनिं नौमि तम् ॥
येन प्रोक्तमशेषसज्जनहितं मीमांसिकादर्शनम् ।
धर्माधर्मविवेचकैः बहुविधैः न्यायैर्युतं शोभनैः ॥ १ ॥

प्रायष्टीकाततेर्यो विवृतिमनुगुणां ह्यष्टवेदांतजात— ।
व्याख्यां खंडार्थसंज्ञां व्यतनुत ललितां तत्वमंजर्युपाह्वाम् ॥
व्याख्यां भाष्यस्य चाणोः सरसविशदकृन्मन्त्रजातार्थगुच्छं ।
सूत्राणां न्यायमुक्तावलिमपिविवृत्तिं दीपिकां तन्त्रयुक्तां ॥ २ ॥
चक्रे जैमिनिसूत्रसारविवृतिं यो भट्टवाक्सङ्ग्रहा— ।
भिख्यामागमकल्पसूत्रशबरोक्त्यादीन् विमृश्याकरान् ॥
तं तुङ्गातटिनीगमंत्रगृहगं श्रीराघवेन्द्रं महा— ।
भष्याचार्यपदं नमामि हृदयाद्यष्टाङ्गयुक् सादरम् ॥ ३ ॥
श्रीमज्जैमिनिदर्शनस्य विपुला व्याख्या लसंव्युत्तमाः ।
प्रख्याताच्छबरादितः प्रकटिता गम्भीरभावान्विताः ॥
नैवात्राधिकृतेस्तथाप्यवयवाः बालैः सुबोद्धुं क्षमाः ।
इत्यालोच्य सुभाट्टसङ्ग्रहकृतिं श्रीराघवेन्द्रोऽतनोत् ॥ ४ ॥
कृतेरमुष्याहृदयप्रकाशं प्रबन्धमेकं प्रकटीकरोमि ।
हरेर्गुरूणां चरणौ प्रणम्य तेषां प्रसादादपि मन्दसंवित् ॥ ५ ॥

## अध्यायपादार्थसङ्ग्रहः

धर्मे प्रमाणानि प्रथमाध्यायार्थः । वेदस्यापौरुषेयतया प्रामाण्यं ॥ १ ॥ अर्थवादमन्त्राणां प्रामाण्यप्रकारः ॥ २ ॥ पौरुषेयस्मृत्याचाराणां प्रामाण्यं ॥ ३ ॥ नामधेय प्रामाण्यं ॥ ४ ॥ इति क्रमेण पादार्थाः । धर्मस्वरूपावान्तरभेदो द्वितीयाध्यायार्थः । श्रुतार्थापत्तिसमाधिगम्यापूर्वभेदानुसारिकर्मभेदौपयिकार्थः ॥ १ ॥ शब्दान्तराभ्याससंख्यासंज्ञागुणरूपप्रमाणपञ्चकगम्यः कर्मभेदोशब्दितो भावनाभेदः ॥ २ ॥ प्रकरणान्तरप्रमाणको भावनाभेदः ॥ ३ ॥ प्रयोगभेदः ॥ ४ ॥ इति पादार्थाः । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपषट्प्रमाणकः शेषशेषिभावः तृतीयाध्यायार्थः । श्रुतिप्रमाणकविनियोगः ॥ १ ॥ लिङ्गप्रमाणकविनियोगः ॥ २ ॥ वाक्याद्यवशिष्टप्रमाणकविनियोगः ॥ ३ ॥ श्रुत्यादित्रयस्य प्रकरणेन विरोधसदसद्भावौ ॥ ४ ॥ शेषकार्याणउपांशुयाजाद्याज्यादितः कर्तव्यत्वतदभावौ ॥ ५ ॥ अनारभ्यवादनिरूपणं ॥ ६ ॥ अङ्गप्रधानयोः सामानविध्यचिन्ता, वाक्यप्रकरणयोः विरोधभाशभावद्वारिका ॥ ७ ॥ समाख्यायाः पूर्वैः सह व्यक्तो विरोधः ॥ ८ ॥ इति पादार्थाः । शेषिणः अनुष्ठापकत्वरूपं प्रयोजकत्वं, शेषस्य अनुष्ठेयत्वरूपं प्रयोज्यत्वं चतुर्थाध्यायार्थः । साक्षाद्यज्ञसाधनानां ह्यविरादीनां तत्संबंधिनां तुषोपवापादीनां प्रयोजकत्वाप्रयोजकत्वे ॥ १ ॥ परम्परया साधनानां स्वरुशाखादीनां प्रयोजकत्वाप्रयोजकत्वे ॥ २ ॥ पुरुषार्थयोः क्रतुफलयोः प्रयुक्तिः ॥ ३ ॥ करणतया अवगतानां प्रधानफलप्रयुक्तत्वसदसद्भावौ ॥ ४ ॥ इति पादार्थाः । श्रुत्यर्थपाठस्थनमुख्यप्रवृत्तिरूपषट्प्रमाणगम्यः क्रमः पंचमाध्यायार्थः । श्रुत्यादिभिः सामान्यतः क्रमचिंतनम् ॥ १ ॥ विशेषतः तच्चिंतनं ॥ २ ॥ प्रकृतिविकृतिसाधारण्येन अनेकप्रधानसमवाये क्रमविशेषचिंतनम्, विकृतिषु प्राकृतानां पदार्थानां विवृद्धौ क्रमविशेषचिंतनम् ॥ ३ ॥ उक्तप्रमाणानां विरोधे बलाबलचिंतनम् ॥ ४ ॥ इति पादार्थाः । धर्मजन्यफलभोक्तृत्वरूपाधिकरचिंतनं षष्ठाध्यायार्थः साक्षादधिकारपरस्वर्गकामादिनामपदालोचनया

अधिकारिव्यवस्था ॥ १ ॥ कर्तृसंख्यावाचकाख्यातपर्यालोचनया प्राप्ताधिकारिव्यवस्था ॥ २ ॥ किंचिदङ्गत्यागेऽपि अधिकारनिमित्तत्वासिद्धिः ॥ ३ ॥ द्रव्यापचारनिमित्तकप्रायश्चित्ताधिकारचिंतनम् ॥ ४ ॥ कालाद्यपचारनिमित्तकप्रायश्चित्तचिंतनम् ॥ ५ ॥ सत्राधिकारचिंतनम् ॥ ६ ॥ अधिकारापवादचिंता ॥ ७ ॥ क्रत्वनङ्गकर्माधिकारचिंतनम् ॥ ८ ॥ इति पादार्थाः। उक्तषट्कस्य अन्यसम्बन्धमनपेक्ष्य धर्माणां प्रत्यायकं प्रत्यक्षमानुमानिकं वा शास्त्रं उपदेशापरपर्यायं प्रतिपाद्यं । भविष्यति षट्के अन्यत्रैव प्रतीतायाः कृत्स्नायाः धर्मसन्ततेः अन्यत्र कार्यतः प्राप्तिरूपः अतिदेशः प्रतिपाद्यः । सामान्यातिदेशः सप्तमाध्यायार्थः । स चातिदेशस्त्रिविधः प्रत्यक्षवचनेन, नाम्ना, अनुमानिकेन चोदकवाक्येनेति । वाचनिकातिदेशः ॥ १ ॥ तदर्थातिदेशः ॥ २ ॥ नामातिदेशः ॥ ३ ॥ आनुमानिकवचनातिदेशः ॥ ४ ॥ इति पादार्थाः। विशेषातिदेशः अष्टमाध्यायार्थः। चोदनावाक्यगतनिर्वपत्यादिशब्दसामानिमित्तातिदेशः॥ १॥ चोदनावाक्यगतशब्दार्थ हविः सामान्यानिमित्तकातिदेशः ॥ २ ॥ पदार्थाश्रितक्रमादिसाम्यनिमित्तकातिदेशः ॥ ३ ॥ अतिदेशापवादाः ॥ ४ ॥ इति पादार्थाः । ऊहः नवमाध्यायार्थः सः प्राकृतदेवतादिपदार्थकार्यार्थानां मंत्रादीनां प्राकृतपदार्थस्थानापन्नवैकृतपदार्थकार्यार्थितया प्राप्तानां तदनुगुणतया अन्यथाप्रयोगरूपः । स च त्रिविधः मन्त्रोहः, सामोहः, संस्कारोह इति । मन्त्रगतप्रातिपदिकांशोहः ॥ १ ॥ सामोहसंस्कारोहौ ॥ २ ॥ मन्त्रगतवचनांशोहः ॥ ३ ॥ अभ्यासापवादः ॥ ४ ॥ इति पादार्थाः । बाधो दशमाध्यायार्थः । स च चोदकप्रापित प्राकृताङ्गानुष्ठानबुद्धेः भ्रान्तित्वनिश्चयः । बाधः ॥ १ ॥ विकृतिषु चोदकप्राप्तानां केषांचिद्बाधः ॥ २ ॥ प्राकृतपदार्थानुवादेन विहितानां अप्राकृतधर्माणां अबाधः ॥ ३ ॥ प्रकृत्यपेक्षया अधिकधर्मोपदेशरूपाभ्युच्चयः ॥ ४ ॥ विकृतिषु प्राकृतधर्मैकदेशोपदेशे बाध्याबाध्यविवेकः ॥ ५ ॥ सामविषयकबाधाबाधचिंता ॥ ६ ॥ दर्शपूर्णमासविकृतिमात्रे बाधाबाधचिंता ॥ ७ ॥ पर्युदासादिनिमित्तकबाधः ॥ ८ ॥ इति पादार्थाः । तन्त्रावापौ एकादशाध्यायार्थः। सकृत् कृतं बहूनामुपकारकं तन्त्रम् । आवृत्या उपकारि आवापः । फलकरणयुक्तया भावनया अन्वीयमानानामङ्गानां तन्त्रताचिंतनम् ॥ १ ॥ फलकरणेतिकर्तव्यतायुक्तया भावनया सम्बध्यमानानामङ्गानां तन्त्रताचिंतनम् ॥ २ ॥ प्रधानभिन्नकालकर्तव्यानामङ्गानां तन्त्रावापचिंतनम् ॥ ३ ॥ अनुक्तदेशकालानांमङ्गानां तन्त्रावापचिंता ॥ ४ ॥ इति पादार्थाः । प्रसङ्गः द्वादशाध्यायार्थः । स च अन्योपकारार्थं कृतेन अन्यस्योपकारसिद्धिरूपः । प्रधानार्थानां धर्मणां तदङ्गेषुउपकारकत्वानुपकारकत्वचिंता ॥ १ ॥ अप्रधानार्थानामपि अन्यत्रोपकारानुपकारकत्वचिंता ॥ २ ॥ अर्थविवक्षावतां मन्त्राणां विकल्पसमुच्चयचिंतनम् ॥ ३ ॥ अर्थविवक्षाहीनमन्त्राणां अन्येषां च विकल्पसमुच्चयचिंतनम् ॥ ४ ॥ इति पदार्थाः ॥

## अधिकरणार्थ संग्रहः

## प्रथमाध्यायः

### प्रथमः पादः

### ॥ अथातो धर्मजिज्ञासा ॥

स्वाध्यायोऽध्येतव्यं इत्यत्र श्रुतमध्ययनं अर्थज्ञानफलकं दृष्टे सम्भवति अदृष्टकल्पनाया अयोगात्, एवं च शास्त्रस्यास्य धर्मो विषयः, अनुष्ठानद्वारास्वर्गादिसाधनत्वात् धर्मज्ञान फलं, अध्ययनवान् त्रैवर्णिकोऽधिकारी, यथायोगं सम्बन्धः, इति विषयाद्यनुबन्धचतुष्टयात् आरम्भणीयमिदं शास्त्रम् ॥ १ ॥ जिज्ञासितयोक्तो धर्मः श्रेयःसाधनत्वे सति चोदनागम्यत्वलक्षणेन सविधिकवाक्यरूपप्रमाणेन च

युक्तः ॥ २ ॥ धर्मे चोदनैव प्रमाणं चोदना प्रमाणमेवेति परीक्षा (युक्तायुक्तचिन्तारूपा) कर्तव्या ॥ ३ ॥ धर्मे प्रत्यक्षं न प्रमाणं वर्तमानमात्रग्राहित्वस्वाभाव्यात्, अनुमादिकमपि तत्र न प्रमाणं तस्य प्रत्यक्षावगत-व्याप्तिसादृश्यादिमूलकत्वेन प्रत्यक्षाविषये धर्मे प्रवृत्तेरयोगात् ॥ ४ ॥ कारीर्या वृष्टिकामो यजतेत्यादितः प्रसिद्धवृष्ट्यादि पदसमभिव्याहारेण अलौकिकभावनादौ लिङादेः सङ्गतिग्रहसम्भवेन वाक्यस्य बोधजनकत्वे सिद्धे संवादाभावेऽपि, अपवादाभावे ज्ञानजनकशक्त्यैव प्रमाजनकत्वस्य, ज्ञानजनन शक्तिग्राहकेणैव प्रमाजननशक्तिग्रहणस्य, उत्पत्तौ ज्ञप्तौ च स्वतः प्रामाण्यायाः सम्भवेन प्रामाण्यं सिध्यति चोदनायाः ॥ ५ ॥ वर्णसमुदायात्मकशब्दस्य अबाधितप्रत्यभिज्ञाबलात् नित्यत्वावगमेन शब्दार्थसम्बन्धस्य औत्पत्तिकत्वसिद्धेः युक्तं चोदनायाः प्रामाण्यं ॥ ६ ॥ पदानामेवपदार्थप्रतिपादनद्वारा वाक्यार्थप्रत्यायकत्व-सम्भवेन युक्तं चोदनायाः प्रामाण्यं ॥ ७ ॥ वेदस्य कर्तृस्मरणाभावादपौरुषेयत्वेन तदन्तर्गतचोदनायाः अपि तथात्वेन प्रामाण्यमुपपद्यते ॥ ८ ॥

## अथ द्वितीयः पादः

अर्थवादानां विध्यपेक्षितप्राशस्त्यसमर्पणमुखेन विध्येकवाक्यत्वात् प्रामाण्यं ॥ १ ॥ औदुम्बरादि-वाक्यस्य विधिप्रत्ययाश्रवणादिना विधायकत्वासम्भवेन युक्तमुक्तं विध्येकवाक्यतया प्रामाण्यं ॥ २ ॥ शूर्पेण जुहोतीत्यादौ श्रुतस्य शूर्पस्य दर्वीपिठरादिभिर्विकल्पादीनामयोगात् हेतुविधायित्वासम्भवेन अर्थवादविधयैव प्रामाण्यं ॥ ३ ॥ मन्त्राणां अर्थप्रकाशनरूपदृष्टप्रयोजनकत्वेन धर्मे प्रामाण्यं ॥ ४ ॥

## अथ तृतीयः पादः

अष्टकादिस्मृतीनां वेदमूलकत्वेन प्रामाण्यं, विप्रकीर्णार्थानां एकत्र सन्क्षेपणात् सार्थक्यंच ॥ १ ॥ श्रुतिविरुद्धानां वेष्टनादिस्मृतीनां वासोलिप्सामूलकत्वेन अप्रामाण्यमेव॥ २ ॥ वैसर्जनहोमियवासोऽध्वर्यु-र्गृह्णाति इत्यादिस्मृतेः वेदविरोधाभावेऽपि लोभमूलकत्वेनाप्रामाण्यंमेव ॥ ३ ॥ (इदमधिकरणद्वयं (2-3) भाष्यरीत्या उक्तम्) भट्टरीत्या तु उच्यते—श्रुतिविरुद्धस्मृतीनां यावन्मूलश्रुतिदर्शनं अर्थाननुष्ठान-लक्षणमप्रामाण्यं, श्रुतिदर्शनोत्तरं विकल्प एवेति ॥ ३ ॥ क्षुत आचामेदिति स्मृतिः आचमनरूपधर्मि-प्रापकत्वात्, "वेदं कृत्वे" ति श्रुत्या धर्म्यविरोधेनैव क्रमरूपधर्मप्रापिकया विरोधाभावात्, प्रमाणमेव। वार्तिकरीत्या तु शाक्यादिस्मृतिस्थानां अहिंसादिपराणां वाक्यानां वेदविरोधाभावेऽपि पुराणन्याय-मीमांसादिविद्यास्थानेषु अपरिगणनात् अप्रामाण्यमेव । वसन्तोत्सवादीनामाचाराणां वैदिकैर्धर्मत्वेना-नुष्ठीयमानत्वात् स्मृतिद्वारा श्रुतिमूलकत्वेन प्रामाण्यमेव । इति वर्णकद्वयमधिकम्। यववराहादिशब्दानां शास्त्रीयधर्मावबोधे शास्त्रप्रसिद्धेरेवान्तरङ्गतया बलीयस्त्वेन वाक्यशेषानुरोधेन दीर्घशूकसूकरादावेव मुख्यत्वं इति भाष्यकारः ॥ ४ ॥ वार्तिककारस्तु पीत्वादिशब्दानामविप्लुतव्यवहारतया बलीयस्या आर्यप्रसिध्या वृक्षादावेव मुख्यत्वं । (क) मातुलकन्यापरिणयनाद्याचाराणां प्रत्यक्षस्मृतिविरुद्धत्वात् स्मृतिवत् साक्षात् श्रुतिमूलकत्वाभावेन स्मृतितौल्याभावाच्च अप्रामाण्यमेव (ख) त्रिवृच्चर्वादिशब्दानां विधिवाक्यशेषयोरेकवाक्यतासिद्धये स्तोत्रीया नवकौदनादिपरत्वमेव इति वर्णकत्रयं मन्यते ॥ ५ ॥ पिकादिशब्दविषयिणी म्लेच्छप्रसिद्धिः आर्याणामर्थविशेषे पिकादिशब्दानां अप्रयोगात् क्लृप्तत्वाच्च मानमेव ॥ ६ ॥ कल्पसूत्रषडङ्गमन्वादिस्मृतयः दृढकर्तृस्मरणात् वेदमूलकत्वनैव प्रमाणम् ॥ ७ ॥ होलाकाद्याचाराः सर्वे सर्वत्रानुष्ठेयाः आचरितृमात्रवृत्तेः जातिगुणोर्दुर्वचत्वात् ॥ ८ ॥ गोशब्द एव सास्नादिमति साधुः न गाव्यादिशब्दः पूर्वपूर्वव्याकरणमूलकत्वेन निश्चित प्रामाण्यकव्याकरणमूलकत्व-

तद्भावाभ्यां ॥ ९ ॥ वैदिकाः शब्दा अर्थाश्च लौकिकेभ्यस्तेभ्य अभिन्ना एव प्रत्यभिज्ञानात्, अर्थभेद-प्रतीत्यौपयिकधर्मभेदस्य भेदप्रयोजकत्वेन अताद्दशस्य व्यपदेशभेदादेः अप्रयोजकत्वाच्च ॥ १० ॥ शब्दानां जातिरेव वाच्या लाघवात्, अवहननादिविधिषु लक्षणया व्यक्तिभानसम्भवाच्च ॥ ११ ॥

## अथ चतुर्थः पादः

उद्भिदादिपदं विध्यर्थभावनाकरणांशे गुणत्वेन नामत्वेन वा अन्वयेन विध्यन्तर्भावात् धर्मे प्रमाणमेव ॥ १ ॥ उद्भिदादिपदं गुणविधित्वपक्षे मत्वर्थलक्षणापत्तेः नामधेयमेव ॥ २ ॥ चित्रादिपदस्य वाक्यभेदापत्या न गुणविधित्वं ॥ ३ ॥ अग्निहोत्रपदं विधितगुणप्रापिशास्त्रान्तरसद्भावात् न गुणविधिः ॥ ४ ॥ श्येनादिपदं उपमानोपमेयभावबोधकार्थवादस्वारस्यात् न गुणविधिः ॥ ५ ॥ वाजपेयादिशब्दाः तत्प्रख्य-शास्त्रात्, तन्त्रसम्बन्धे विरुद्धत्रिकद्व्यापत्तेश्च न गुणविधयः ॥ ६ ॥ आग्नेयादिशब्दाः विधित्सित-गुणप्रापकमन्त्रविधायकशास्त्रस्यादर्शनात् वाक्यभेदादीनामभावाच्च न नामधेयम् ॥ ७ ॥ बर्हिरादि पदानि जातिवाचकानि अव्यभिचारात् ॥ ८ ॥ प्रोक्षणीशब्दस्य क्लृप्तावयवशक्तिरूपयोगबलेन प्रकृष्टोक्षणसाधन-वाचित्वमेव ॥ ९ ॥ निर्मन्थ्यशब्दोऽपि मथनकर्मत्वकस्य सर्वदा अभावेऽपि भूतपूर्व तदादाय प्रयोगोपपत्तेः यौगिक एव ॥ १० ॥ वैश्वदेवशब्दः अष्टयागानां नामधेयमेव नामत्वस्य यागाष्टके प्राचीनप्रवणरूपदेशां सम्बन्धसिद्धिफलकत्वात् ॥ ११ ॥ यदष्टा कपालो भवति इत्यादौ श्रुताः अष्टाकपालादिशब्दाः अर्थवादाः (अंशिनः द्वादशकपालस्य स्तुतिप्रतिपादकाः) उपक्रमोपसंहारयोरेकवाक्यत्वसम्भवात् ॥ १२ ॥ यजमानशब्दः प्रस्तरस्तावकः यागनिर्वृत्तिरूपयजमानगुणयोगेन गौण्याः वृत्याः ॥ १३ ॥ अग्निशब्दः प्रजापतिमुखजातत्व-रूपगुणयोगेन ब्राह्मणस्तावकः ॥ १४ ॥ आदित्यशब्दः तेजस्वित्वरूपसादृश्येन यूपस्तावकः ॥ १५ ॥ अपशुशब्दः गवाश्वगतप्रशंसालकगौणवृत्या अर्थवादः ॥ १६ ॥ सृष्टिशब्दः सृष्टिलिङ्गकमन्त्रनिष्ठभूम्ना सृष्ट्यसृष्टिमन्त्रसमुदायस्तावकः ॥ १७ ॥ प्राणभृच्छब्दः प्राणस्य प्राणमिति लिङ्गसमवायात् गौण्या स्तावकः ॥ १८ ॥ शर्कराः घृतेनैवांजनीयाः संदिग्धार्थनिर्णायकार्थवादात् ॥ १९ ॥ स्रुवादिनि यथासामर्थ्यं द्रवावदानादौ प्रवर्तन्ते, अशक्यार्थे विध्ययोगात् ॥ इति प्रथमाध्यायः समाप्तः ॥

---

# अथ द्वितीयाध्यायः

## प्रथमः पादः

सोमेन यजेतेति विधिवाक्यघटकं एकमेव पदं अपूर्वप्रतिपादकं, अन्यथानेकादृष्टकल्पनापत्तेः ॥ १ ॥ तत्र धात्वर्थादेवापूर्वं भावनया पदश्रुतेः प्रत्यासन्नत्वात् ॥ २ ॥ अपूर्वमस्ति यागावान्तरव्यापारत्वकल्पनेन श्रुतिविरोधाभावात् ॥ ३ ॥ अवघातादितः अपूर्वं न निष्पद्यते तथासति दृष्टार्थत्वहानापत्तेः ॥ ४ ॥ सम्मार्जनादि गुणकर्म, ईप्सिततमत्ववाचिद्वितीयया स्रुगादीनां साध्यत्वावगमात् ॥ ५ ॥ स्तोत्रशस्त्रे प्रधानकर्मणी, स्तौतिशंसत्योः गुणगुणिसम्बन्धमात्रे शक्तत्वात् ॥ ६ ॥ यजते ददातीत्यादीनि मन्त्रगता-ख्यातानि अभिधायकानि यच्छब्दादियोगेन प्रतिबद्धविधिशक्तित्वात् ॥ ७ ॥ मन्त्रस्य लक्षणमस्ति अनुष्ठानौपयिकार्थाभिधायकवाक्यत्वरूपस्य, मंत्रत्व प्रकारकाभियुक्तप्रसिध्याख्यस्य वा तस्य संभवात् ॥ ८ ॥ ब्राह्मणस्य लक्षणमस्ति वेदत्वे सति मन्त्रत्वरूपस्य तस्य सुवचत्वात् ॥ ९ ॥ अग्नये इति पदस्थाने सूर्यायेति पदप्रक्षेपरूपस्य ऊहस्य, त्र्यार्षेयादेः प्रवरस्य, नामधेयस्य च न मन्त्रत्वं, मंत्रैकवाक्यत्वादेरप्रयोज-

कत्वात्, अभियुक्तप्रसिद्धेश्चाभावात् ॥ १० ॥ ऋचां लक्षणमस्ति पादत्वेन उपेतत्वे सति वृत्तबद्धमंत्रत्वरूपस्य तस्य सुवचत्वात् ॥ ११ ॥ साम्नो लक्षणमस्ति मंत्रत्वसमानाधिकरण गानत्वरूपस्य तस्य सम्भवात् ॥ १२ ॥ यजुषो लक्षणमस्ति ऋक्सामभिन्नत्वेसति वेदत्वरूपस्य तस्य सम्भवात् ॥ १३ ॥ परसम्बोधनपरा (निगदाः) यजूंष्येव संज्ञाभेदस्य नितरां गद्यन्ते उच्चैस्त्वेनोच्चार्यन्ते इति योगेन यजुष्ष्वेवोपपत्तेः ॥ १४ ॥ देवस्यत्वेत्यादि निर्वपामीत्यंत पदजातं, एकवाक्यतावत्, विभागे साकांक्षत्वे सति अविभागे एकार्थत्वरूपायाः तस्याः सम्भवात् ॥ १५ ॥ इषेत्वोर्जेत्वेति वाक्यं न एकवाक्यं, छेदनानुमार्जनादिरूप नानादृष्टार्थप्रकाशकत्वेन एकार्थत्वासम्भवात् ॥ १६ ॥ रजाशाया हराशायेति शेषिणोः तनूरित्यादिः वैदिकः शेषोऽनुषंजनीयः सर्वानन्तरं सकृत्पठितुमशक्तेः, बुद्धिस्थत्वादेरविशेषाच्च ॥ १७ ॥ अच्छिद्रेण पवित्रेणेत्यादिः शेषः चित्पतिस्त्वा पुनात्वित्यादिपूर्वमन्त्रयोरप्यनुषज्यते पावनक्रियाप्रकाशकपदैकवाक्यत्वात् ॥ १८ ॥ (वर्णकान्तरं) गच्छतामितिपदं, संयज्ञपतिराशिषेति तृतीयवाक्ये, नानुषज्यते बहुवचनान्ते यजत्रैरिति पदेन्वयार्थं बहुवचनांततया विपरिवर्तमानत्वेन एकवचनांतत्वेन विपरिवृत्य सम्भवात् ॥ १९ ॥

## अथ द्वितीयः पादः

यजति ददाति जुहोति इत्यादौ श्रुताः भावनाः नाना अवच्छेदकधात्वर्थानां भिन्नत्वात् ॥ १ ॥ समिधो यजति, तनूनपातं यजति इत्यादौ प्रत्यभ्यासं भावना भिद्यते अन्यथा पुनःश्रवणस्य आनर्थक्यापत्तेः ॥ २ ॥ "य एवं विद्वान्" इति वाक्ये समुदायानुवादके दर्शपूर्णमासाभ्यामिति द्विवचनांतपदबोध्यसमुदायद्वयस्य नामसम्बन्धबोधनमुखेन फलसम्बन्धबोधनफलकत्वात्, रूपाश्रवणस्य विधित्वपक्षे बाधितत्वाच्च ॥ ३ ॥ "उपांशुयाज मन्तरा यजति" इति वाक्य याग विधायकं यजतीत्यस्य लेट्त्वकल्पनात् जाम्यादिवाक्यगतैकवाक्यताबलाच्च ॥ ४ ॥ अग्निहोत्रं जुहोतीति वाक्यं (कर्मान्तर) विधायकं दध्यादि वाक्ये गुणमात्रविधाने लाघवाच्च ॥ ५ ॥ अग्नीषोमीयं पशुमालभेत, सोमेन यजेतेत्यादिवाक्यं कर्मान्तर विधायकं, आलभत्यादिवाक्यात् अवद्यति गृह्णातित्यादि वाक्यानां भिन्नार्थत्वेन अनुवादकत्वासम्भवात् ॥ ६ ॥ तिस्र आहुतीर्जुहोतीत्यादौ बहवो होमा विधीयन्ते तिस्र इति पदबोध्यायाः संख्यायाः कर्मभेदेनैव निवेशात् ॥ ७ ॥ अथवा सप्तदशप्राजापत्यानिति वाक्ये एकैक पशुद्रव्यकाः सप्तदश यागा विधीयन्ते बहुवचन बलेन देवतासम्बन्धविशिष्टपशूनां बहुत्वावगमात् ॥ ८ ॥ अथैषज्योतिरित्यादौ सहस्रदक्षिणाकानि कर्मांतराणि विधीयन्ते ज्योतिरादिसंज्ञाभेदात् प्रकृतिविच्छेदकाथशब्दाच्च ॥ ९ ॥ वाजिभ्यो वाजिनमित्यत्र कर्मान्तरं विधीयते उत्पत्तिशिष्टगुणावरुद्धे आमिक्षायागे उत्पन्नशिष्टस्य वाजिनगुणस्य अनिवेशात् ॥ १० ॥ दध्ना जुहोति पयसा जुहोतीत्यादि, न कर्मांतराविधायकं अग्निहोत्रे दध्यादीनां विकल्पेन निवेशासम्भवात् ॥ ११ ॥ दध्नेन्द्रियकामस्य जुहुयादित्यादौ फलाय गुणमात्रं विधीयते कर्मांतरविधौ मत्वर्थलक्षण, विशिष्ट विध्यादिगौरवापातात् ॥ १२ ॥ एतस्यैव रेवतीषु वारवन्तीयं अग्निष्टोमसामकृत्वा पशुकामो ह्येतेन यजेत इत्यत्र रेवतीवारवन्तीयादिसामसम्बन्धाविशिष्टापूर्वयागकरणिकाभावना फलाय विधीयते गुणफलसम्बन्धविधौ वाक्यभेदापातात् ॥ १३ ॥ हीषिति वृष्टिकामायनिधनं कुर्यादित्यादौ हीषादिः स्वफलसाधनीभूतसौभरादौ व्यवस्थाप्यते, यो वृष्टिकाम इत्यादिवाक्ये श्रुतस्य वृष्ट्यादेरत्रापि प्रत्यभिज्ञानात्, वृष्टिकामो हीषित्येव निधनं कुर्यादिति नियमार्थत्वेन वाक्यसार्थक्याच्च ॥ १४ ॥

## अथ तृतीयः पादः

यदि रथन्तरसामेति वाक्यं रथन्तरे निमित्ते ज्योतिष्टोमे ऐन्द्रवायवाग्रत्वं विधत्ते प्राप्तिद्योतकयदिशब्दबलात्, प्रकरणात्, विशेषणस्य अयोगव्यवच्छेदकत्वाच्च ॥ १ ॥ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायेत्यादौ ब्राह्मणादिकर्तृकत्वविशिष्टं मध्ये—निधानादिगुणविशिष्टं राजसूयात् भिन्नं कर्म विधीयते राजशब्दस्य राज्ययोगनिमित्तकत्वाभावेन क्षत्रियजातौ रूढत्वेन ब्राह्मणादेस्तत्राप्राप्तेः ॥ २ ॥ वसन्ते ब्राह्मणोऽग्नीनादधीत, वसन्ते ब्राह्मणमुपनयीतेत्यादौ ब्राह्मणादिविशिष्टमाधानादिकं विधीयते, आधानोपनयते विनैव लौकिकाग्निपुस्तकपाठादिभ्यामेव अग्निविद्यासाध्यस्य क्रत्वनुष्ठानस्य सम्भवेन नियमेन ब्राह्मणादेः आधानोपनयनसम्बन्धस्य अप्राप्तवात् ॥ ३ ॥ दाक्षायणयज्ञेन स्वर्गकामो यजेत इत्यादौ स्वर्गोद्देशेन दर्शाद्याश्रितः आवृत्तिरूपः गुणः विधीयते दक्षस्य कर्मावृत्तौ अनलसस्य सम्बंधि दाक्षम्, तत् अयनमावृत्तिः यस्येति व्युत्पत्तिलभ्ययोगेन निरूढगुणस्य बोधसम्भवात् द्वे पौर्णमास्यौ यजेतेति वाक्यशेषाच्च ॥ ४ ॥ वायव्यं श्वेतमालभेतभूतिकामः इत्यादौ श्वेतपशुद्रव्यकवायुदेवताकयागो विधीयते देवतातद्धितान्तपदेन वायुपश्वोः प्रतीयमानसम्बन्धस्य यागं विना अनुपपत्तेः ॥ ५ ॥ वत्समालभेतेत्यादिनावत्सस्पर्श एव विधीयते न तु यागः संस्कारप्रायपाठात् ॥ ६ ॥ नैवारश्चरुर्भवति, चरुमुपदधाति इत्यादौ न यागो विधीयते उत्पत्तिवाक्ये देवतायाः अश्रवणात् उपधानमात्रश्रवणाच्च ॥ ७ ॥ पर्यग्निकृतं पात्नीवतमुत्सृजति इत्यादौ आलभ्य पश्वनुवादेन पर्यग्निकरणांताङ्ग कलापं उत्तराङ्गव्यावृत्तिफलकं विधीयते, त्वाष्ट्रं पात्नीवतमालभेतेति वाक्यविहितपशोरेव प्रत्यभिज्ञायमानत्वेन कर्मान्तरविधायित्वासम्भवात् ॥ ८ ॥ योदाभ्यं गृहीत्वा सोमाय यजते योऽशुं गृह्णातीत्यादौ ज्यौतिष्टोमिकसोमरसोद्देशेन अदाभ्यादिसंज्ञकग्रहणमेव संस्कारकत्वेन विधीयते, तथासति अव्यवहित ग्रहणेन अन्वयभावात् अंशुवाक्ये यजेरश्रवणादिना यागविधानासम्भवाच्च ॥ ९ ॥ एवं विद्वानग्निं चिनुत इत्यत्र वन्ह्युद्देशेन चयननिष्पादितस्थंडिलस्थापनरूपसंस्कारो विधीयते, अग्निशब्दस्य रूढ्या वह्नावेव प्रवृत्तेः यागादौ तत्प्रवृत्तेः लिङ्गकल्प्यत्वाच्च ॥ १० ॥ उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीत्यादौ नित्याग्निहोत्राद्भिन्नं गुणविशेषं कर्म विधीयते, अनुपादेयदेशकालनिमित्तान्यतमरूपगुणे सति पूर्वकर्मानुपस्थितिरूपप्रकरणांतरात् ॥ ११ ॥ आग्नेयं अष्टाकपालं निर्वपेदित्यादौ कर्मांतरं विधीयते, दर्शपूर्णमासभिन्नप्रकरणपठितत्वाभावेऽपि असन्निधिसत्वात्, फलस्यापि उद्देश्यत्वेन अनुपादेयत्वाच्च ॥ १२ ॥ समे दर्शपूर्णमासाभ्यां यजेतेत्यादिकं प्रसिद्धदर्शपूर्णमासाद्युद्देशेन समदेशादिसम्बन्धविधायकं, सन्निहितदर्शादीनामत्र प्रत्यभिज्ञानात् ॥ १३ ॥ यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवतीति वाक्यं प्रसिद्धाग्नेयानुवादकं तस्यैवात्र प्रत्यभिज्ञानात् ऐन्द्राग्नस्तुत्यर्थत्वेन अनुवादस्य सार्थक्याच्च ॥ १४ ॥

## अथ चतुर्थः पादः

यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेत्यादौ जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहारार्थं दर्शपूर्णमासप्रयोगो विधीयते, अन्यथा जीवनवाचिनः यावज्जीवपदस्य काललक्षणापत्तेः ॥ १ ॥ सर्वासु शाखासु पठ्यमानमग्निहोत्रादिकमेकमेव तत्तच्छाखाध्यायिभिन्नभिन्नपुरुषान् प्रति अग्निहोत्रज्ञापनेन पुनर्विधानस्य चरितार्थत्वात् ॥ २ ॥

## अथ तृतीयाध्यायः

### प्रथमः पादः

शेषलक्षणमारभ्यमेव क्रियाकारकान्वये शेषशेषिभावस्य अन्तर्भावेन व्युत्पादनार्हत्वादिति केचित् ॥ १ ॥ अङ्गत्वे श्रुतिलिङ्गवाक्यप्रकारणस्थान समाख्यारूपाणि षड्प्रमाणानि ॥ २ ॥ श्रुति निरपेक्षः शब्दः. यथा अरुणया क्रीणातीत्यादौ तृतीया लिङ्ग सामर्थ्य यथा बर्हिर्देवसदनं दामीत्यादौ मंत्रे लवन-प्रकाशन सामर्थ्यम् । पदसन्धातो वाक्यं यथा । देवस्यत्वा सवितुः प्रसवेऽश्विनो" रित्यादि जुष्टं निर्वपामी त्यन्तम् । इतिकर्तव्यताकाङ्क्षा प्रकरणं यथा प्रयाजादौ दर्शपूर्णमासादेः । तुल्यप्रदेशत्वं स्थानं यथा दाब्धेरस्यदब्धो भूयासं इति मंत्रस्य उपांशु याजेन । समाख्या यौगिकी संज्ञा यथा आध्वर्यवमिति ॥ १ ॥ व्रीहिभिर्यजेतेत्यत्र व्रीहिः यागाङ्गं परार्थत्वात् । एके मन्यते शेषत्वं निरुपणार्हं परोद्देशप्रवृत्तत्वरूपस्य तस्य निर्दुष्टत्वादिति ॥ २ ॥ कर्मफलपुरुषेष्वपि शेषत्वमस्ति पारार्थ्यरूपस्य तस्य तेषु सम्भवात् । तस्य विधिगम्यतायाः षष्ठाद्ये वक्ष्यमाणत्वाच्च ॥ ३ ॥ व्रीह्याज्यादि धर्माः अवधातोत्पवनाद्य व्यवस्थयैव कार्याः फलापूर्वापेक्षया व्रीह्यादिद्रव्यक यागजन्यावान्तरापूर्वाणां संनिहिततया तेषामेव प्रयोजकत्व-स्वीकारात्, अवघातादीनां आज्यादौ करणे अदृष्टार्थत्वापत्तेश्च ॥ ४ ॥ स्फ्यश्च कपालानिचेत्यादौ श्रुतस्फ्यादिभिः यथाश्रुतमुद्धननाद्येव कार्यं, अन्यथा स्फ्येनोद्धंतीत्यादीनां विशेषसंयोगबोधकमाक्यानां बहूनां वैयर्थ्यापत्तेः यज्ञायुधवाक्यस्य सम्भरणविध्येकवाक्यतया अनुवादकत्वेन सार्थक्याच्च ॥ ५ ॥ अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीत्यादौ श्रुतमारुण्यं क्रीणातिना सम्बध्य तदङ्गं सत् एकहायन्यामेव निविशते, तृतीयाबोध्यस्य करणत्वस्य क्रयं प्रति अमूर्त तया साक्षादसम्भवेपि तदङ्गैकहायनी परिच्छेद मुखेन सम्भवात्, अन्यथा वाक्यभेदापत्तेः ॥ ६ ॥ दशापवित्रेण ग्रहं समार्ष्टि इत्यत्र श्रुतं ग्रहैकत्वमविवक्षितं सम्मार्गं प्रति ग्रहस्य प्राधान्यावगमेन प्रतिप्रधानं गुण आवर्तते इति न्यायेन सर्वग्रहेषु सम्मार्ग-कर्तव्यतानिश्चयेन ग्रहपरिच्छेदकस्य अनाकांक्षितत्वात्, अन्यथा वाक्यभेदापत्तेश्च ॥ ७ ॥ ग्रहं सम्मर्ष्टीत्यादौ श्रुतं ग्रहत्वं विवक्षितं पूर्वत्रेव वाक्यभेदाभावात्, सम्मार्गस्य ग्रहयागाभ्यासा पूर्वप्रयुक्तत्वाभ्युपगमाच्च ॥ ८ ॥ सप्तदशारत्निर्वाजपेयस्य यूपो भवति इत्यादौ श्रुतं सप्तदशारत्नित्व यूपद्वारा वाजपेयगत पश्वङ्ग सप्तदशा रत्निपदस्य यूपपदसामानाधिकरणात् षष्ठ्याः परंपरा सम्बन्धेनाप्युपपत्तेः ॥ ९ ॥ अभिक्रामं जुहोत्यभिजित्या इत्यत्र श्रुतमभिक्रमणं प्रयाजकर्त्रान्वेति प्रयाजसन्निधानात् संदंशाप्यप्रयाजावान्तर-प्रकरणबलाच्च । अत्र यथाक्रमं भाष्यवार्तिककारोक्तौ हेतू ज्ञेयौ ॥ १० ॥ उपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते इत्यत्र श्रुतमुपवीतं दर्शपूर्णमासाङ्गं निविन्नामक मंत्रविनियोजक ब्राह्मणेन सामिधेन्यवांतरप्रकरणस्य विच्छेदेन महाप्रकरणस्य उज्जीवनात् ॥ ११ ॥ वारणो यज्ञावचर इत्यादौ श्रुतानि वारणादीनि सर्वयज्ञाङ्गं पवमानेष्टेरपि आधानवत् अङ्गत्वेन आनर्थक्य तदङ्गन्यायाभावात् वाक्याच्च ॥ १२ ॥ वार्तघ्नी पूर्णमास्यामनुच्येते वृधन्वती अमावस्यायां इत्यत्र श्रुतं वार्तघ्न्यादिऋक्चतुष्टय आज्यभागाङ्गं तत्क्रमपाठात् सर्वेषु यागेषु केवलसोमदेवताऽभावेन वाक्येन दर्शपूर्णमासनिवेशा-सम्भवाच्च ॥ १३ ॥ हस्तावनेतिक्ते, उलपराजींस्तृणाति, इत्यत्र श्रुतं हस्तावनेजनं करिष्यमाणसकल कर्माङ्गं अवनेजनसंस्कृतयोर्हस्तयोः सर्वकर्मानुष्ठानयोग्यत्वात् प्रकरणाच्च ॥ १४ ॥ आग्नेयं चतुर्धा करोति इत्यादौ श्रुतं चतुर्धाकरणं आग्नेयमात्रस्य, अग्नेर्ढगितिसूत्रेण देवतार्थे विहिततद्धितान्ताग्नेयशब्दस्य तत्रैव सम्भवात् ॥ १५ ॥

## अथ द्वितीयः पादः

बर्हिर्देवसदनं दामीत्यादिमन्त्राणां मुख्यार्थे एव विनियोगः तस्यैव झटिति प्रतीतेः ॥ १ ॥ कदाचनस्तरीरसीति ऐन्द्री ऋक् गौणार्थे विनियुज्यते ऐन्द्या गार्हपत्यमुपतिष्ठते इति वचनात्, प्राप्तार्थ-प्रापकमंत्रात् अप्राप्ताप्रापकत्वेन विधेः प्राबल्येन विधौ गौण्याः अन्याय्यत्वात् ॥ २ ॥ हविष्कृदेहीति त्रिरवघ्नन् आह्वयति इत्यत्र विहितो मन्त्रः आह्वाने विनियुज्यते तथासति त्रिरभ्यासमात्रविधानेन लाघवात् । अवघातपदे काललक्षणायाः अनुवादगतत्वेन अदोषत्वाच्च ॥ ३ ॥ उत्तिष्ठन्नन्वाहेत्यादौ श्रुतं उत्थानादि काललक्षणार्थमेव, उत्थानादिप्रकाशनशक्तिविधुरस्य मन्त्रस्य उत्थानादौ विनियोगा-योगात् ॥ ४ ॥ सूक्तवाकेन प्रस्तरं प्रहरति इत्यादौ श्रुतः सूक्तवाकः प्रस्तरप्रहरणाङ्गं तृतीयारूपश्रुतेः, एतद्बलादेव सूक्तवाक प्रतिपाद्य देवतासम्बन्धस्य प्रहरणे कल्पनेन तस्य यागरूपतासिद्धौ इष्टदेवता प्रकाशनमुखेन प्रहरणाङ्गत्वसिद्धेश्च ॥ ५ ॥ सच सूक्तवाकः पौर्णमास्यामावास्ययोः यथासामर्थ्यं विभज्य विनियोक्तव्यः समवेतदेवताप्रकाशनसामर्थ्यरूपलिङ्गेन कृत्स्नसूक्तवाकविषयसमाख्याबाधस्यौचित्यात् ॥ ६ ॥ ऐन्द्राग्नमेकादशकपालं निर्वपेदित्यादिकाम्येष्टिक्रमे आम्नाताः काम्ययाज्यानुवाक्याकांडमिति समाख्याताः इन्द्राग्नीरोचनादिव इत्यादि मन्त्राः आस्वेव कामेष्टिषु यथाक्रमं विनियुज्यन्ते लिङ्गस्य कर्मापूर्वसाधनदेवताप्रकाशनसामर्थ्यत्वविशिष्टवेषेणैव विनियोजकत्वेन निरुक्तसमाख्याक्रमाभ्यां सामान्यतः कर्मापूर्वसम्बन्धे क्रमेच ज्ञाते सत्येव लिङ्गस्य प्रवृत्तेः तय : लिङ्गोपजीव्यत्वेन प्राबल्यात् ॥ ७ ॥ आग्नेय्या आग्नीध्रमुपतिष्ठते इत्यत्र श्रुतमुपस्थानं प्रकृतयैव आग्नेया ऋचा कर्तव्यं, प्रकरणावगतं क्रत्वपूर्वोपयिक व्यापारसाधनत्वस्य आग्नीध्रोपस्थानरूपसाधनत्वरूपशेषसमर्पणमात्रेण लाघवात् ॥ ८ ॥ "भक्षे हि मा विशेत्या" दिः उपहूतो व्यापार भक्षयामीत्यन्तः अनुवाकः यथासामर्थ्यं विभज्य ग्रहणावेक्षणनिगरण-सम्यक्जरणेषु विनियोज्यः भक्षणस्येव ग्रहणादीनां साक्षात् विधानाभावेऽपि अर्थात् विहितत्वात् ॥ ९ ॥ भक्षानुवाकगतः मंद्रादिर्भक्षयामीत्यन्तः एक मन्त्र एव तृप्तिविशिष्टभक्षणप्रकाशनेन उत्साहरूपदृष्टार्थ-जनकत्वात् ॥ १० ॥ अनैन्द्राणाममन्त्रकं भक्षणं, सर्वेषां सोमप्रदानानां समप्रधानतया प्रकृतिविकृतिभावा-भावेन ऊहासम्भवात् । लिङ्गस्य बाधितत्वाच्च ॥ ११ ॥ होतृकाणां चमसेषु स्थितस्य सोमस्य भक्षणे इंद्रमित्रावरुणपीतस्येत्यूहः कार्यः मित्रावरुणाभ्यां प्रदानवेलातः पूर्वं द्रोणकलशादानीयमानतावेलायां अनीयमानस्यैव मित्रावरुणदेवतासम्बन्धावगमात् शेषस्य इन्द्रसम्बन्धानपायात् ॥ १२ ॥ पात्नीवतहुतशेष भक्षणमन्त्रे पत्नीवत्पीतस्येत्येवोहः कार्यः पात्नीवतमाग्रयणात् गृहणाति इत्यत्र आग्रयणस्य अपादानत्व-श्रवणेन पूर्वदेवतासम्बन्धापायात् ॥ १३ ॥ भक्षमंत्रे त्वष्टा नोपलक्षणीयः, त्वष्टुः "अग्ना३इ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिबेति मन्त्रे अपातुरेव पात्रा अग्निना "सहैव दशभिः पुत्रैरित्यादाविव सहभावश्रवणेन पातृत्वानिश्चयात् ॥ १४ ॥ पत्नीवच्छेषभक्षाङ्गमंत्रे त्रयास्त्रिंशद्देवा नोपलक्षणीया तेषां देवतात्वाभावात्, स तु यजमानः अग्नये ददाति अग्निस्तु स्वदत्तभागेन देवान् मादयतीति यजमानदत्त द्रव्योद्देश्यत्वाभावात् सिद्धः ॥ १५ ॥ अनैंद्रभक्षणमन्त्रे अनुवषट्कारदेवता अग्निर्नोपलक्षणीयः ऐन्द्रभक्ष-मन्त्रे अनुपलक्षितत्वात् ॥ १६ ॥ इतरेषामनैन्द्राणामिव ऐन्द्राग्नस्यापि भक्षणं अमन्त्रकं नवमे देवतायाः पातृत्वनिषेधेन इंद्रपीतशब्दस्य इंद्रमुद्दिश्यदत्तमित्यर्थकतया तस्यार्थस्यात्राबाधात् ॥ १७ ॥ सोऽयं भक्षमंत्र गायत्रीभिन्नछन्दोयुतेऽपि प्रयोक्तव्यः केवलगायत्रछन्दस्कसोमाभावेन एवकारं परित्यज्य गायत्रं छन्दो यस्येति विग्रहस्यैव आदरणीयत्वात् ॥ १८ ॥ एतावता इंद्रपीतपदस्य तत्पुरुषत्वमभ्युपगम्य अवांतरसिद्धांत उक्तः, वस्तुतस्तु नायमिंद्रपीतशब्दः तत्पुरुषः तथासति पूर्वपदस्य प्रकृतिस्वरत्वं न स्यात् अस्ति च तत्,

तेन बहुव्रीहित्वं निर्णीयते, तथा च इंद्रेण पीतः सोमो यस्मिन् सवने इति सवनविशेषणत्वात् तत्सम्बंधित्वाविशेषेण अनैन्द्रेष्वपि यथोक्तमन्त्रवदेव भक्षणमिति परमसिद्धांतः ॥ १९ ॥

## अथ तृतीयः पादः

प्रजापतिरकामयत—अग्नेर्ऋग्वेद इत्याद्युपक्रम्य श्रुते उच्चैः ऋचा क्रियते इत्यत्र ऋक्शब्दस्य उपक्रमस्थमन्त्रब्राह्मणसमुदायरूपवेदपदानुसारात् ऋगादिवेदपरत्वं उपक्रमस्य असंजातविरोधितया स्वार्थनिर्णायकत्वेन लब्धात्मकत्वात् ॥ १ ॥ यत्र यजुर्वेदे आधानं विहितं वारवन्तीयादिसामनि तदङ्गानि सामवेदे विधीयन्ते तत्र वारवन्तीयादिषु याजुर्वेदिक स्वर एव कार्याः, प्रधानाङ्गेन अङ्गाङ्गस्य विरोधे प्रधानाङ्गस्यैव अनुग्राह्यत्वादिति भाष्यकारीयमधिकरणं ॥ २ ॥ तत् अङ्गगुणविरोधे चेति द्वादशीयाधिकरणेन गतार्थमिति वार्तिककरीत्या वर्णकांतरं उच्यते । यस्य वारवन्तीयादेः सामवेदे उत्पत्तिः यजुर्वेदे विनियोगः तस्य याजुर्वेदिक एव स्वरः उत्पत्तिमात्रेण स्वराकाङ्क्षा न जायते किंतु प्रयोगेणैव, प्रयोगश्च विनियोगोत्तर इति स्वराकाङ्क्षावेलायां विनियोजकस्वरस्यैव प्रथमोपस्थितत्वात् ॥ ३ ॥ ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्यं यजुर्वेदसामवेदयोः श्रूयते तत्र यजुर्वेद एव विधिः सोमादिद्रव्यस्य इंद्रवाय्वादि देवतायाश्च अपेक्षितयोराम्नानात् सामवेदे पुनःश्रवणं तु स्तोत्रादिगुणांतरविधानाय अनुवादरूपमेव ॥ ४॥ समिधो यजतीत्यादिना विहिताः प्रयाजाः दर्शपूर्णमासयोरेवाङ्गं तयोः स्वर्गसम्पादनप्रकारस्य अतिज्ञाततया कथमिति इतिकर्तव्यताकाङ्क्षालक्षणप्रकरणात् ॥ ५ ॥ "दब्धिरस्यदब्धो भूयासम" इति मन्त्र उपांशुयाजमत्रांगं कर्मविधिक्रमेण मन्त्राणां आम्नानं तेन सह सम्बन्धं विना अनुपपन्नमिति अर्थापत्तिबलेन प्रमितात् तुल्यदेशत्वरूपस्थानात् ॥ ६ ॥ अग्न्यन्वाधानादयः अध्वर्युणैव कार्याः आध्वर्यवसमाख्यायाः इयं अध्वर्योरिदमिति विग्रहगम्यं अध्वर्योः अग्न्यन्वाधानादिषु क्रियाकर्तृभावरूपसम्बन्धं विना अनुपपन्ना सती भवत्येवाङ्गत्वे प्रमाणं ॥ ७ ॥ श्रुतिलिङ्गयोर्विरोधोदाहरणं कदाचनस्तरीरसीति मन्त्रः, गार्हपत्योपस्थानस्यैव अङ्गं श्रुतिसापेक्षतया विलंबितप्रवृत्तिकत्वेन दुर्बलं लिङ्गं श्रुतिस्तु इतरनिरपेक्षतया प्रबला इति न्यायेन अवगतबलाया ऐन्द्र्येति तृतीयाश्रुतेः। एवं अन्यान्यपि षट्प्रमाणानां विरोधे उदाहरणानि मूलेन ज्ञेयानि अयं पूर्वेण परस्य बाधः अप्राप्तबाध इत्युच्यते । उत्तरोत्तरप्रमाणमूलप्रतिबोधकत्वात् । दाशमिकस्तु बाधः प्राप्तबाध इत्यपि ज्ञेयं ॥ ८ ॥ त्रिस्र एव साह्नस्योपसदोद्वादशाहीनस्य" इति श्रुतं द्वादशोपसत्वं अहर्गणे निविशते अहीनपदस्य रूढ्या मध्योदात्ते स्वरेणच द्विरात्रादिवाचित्वात् तदुत्तरषष्ठीश्रुतेः प्रकरणबाधकत्वसम्भवात् ॥ ९ ॥ युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादित्यादौ विहितस्य मन्त्रस्य द्विबहुयजमानकेषु कुलायाहीनादिषु उत्कर्षः कार्यः प्रकृते ज्योतिष्टोमे यथाशक्तिप्रयोगेऽपि अनुपादेयस्य कर्त्रैकत्वस्य त्यागायोगेन कर्तृद्वित्वादेः तत्र निवेशायोगात् कुलायादौ तद्योगाच्च ॥ १० ॥ "जाघन्या पत्नीः संयाजयन्ती" अत्र श्रुता जाघनी प्रकरणात् नोत्कर्षमर्हति प्रकरणे पत्नीसंयाजानां सद्भावेन तदङ्गस्य जाघन्याः क्रयादिना सुसम्पादत्वात् । जाघनी नाम पशोः जघनप्रदेशे विद्यमानः मांसखण्डविशेषः ॥ ११ ॥ "अथो खलु दीर्घसोमे संतृद्ये धृत्यै" इत्यनेन विहितं सन्तर्दनं (अधिषवणफलकयोः संश्लेषणं) संस्थासु द्विरात्रादिषु च निवेशमर्हति बहुसोमग्रहयुक्तत्वाविशेषात्, अवशिष्टानंशूनुपसमूहतीति वाक्यविहितोपसमूहनकर्म सोमस्य परिणामविशेषाश्रवणेन यावदपेक्षं ग्रहणसम्भवेन दीर्घसोमत्वस्य तत्रोपपत्तेश्च ॥ १२ ॥ "न प्रथमयज्ञे प्रवृंज्यात्" इत्यत्र श्रुतः प्रवर्ग्यनिषेधः ज्योतिष्टोमीयप्रथमप्रयोगाङ्गं प्रथमादिशब्दानां क्रियावृत्तिरूपप्रयोगे मुख्यत्वात् ज्योतिष्टोमे प्रथमयज्ञपद-

प्रयोगस्य अर्थवादस्थत्वेन गौणत्वाच्च, प्रथमपदस्य प्रथमश्रुतस्य मुख्यत्वासिध्यै चरमश्रुतस्य यज्ञपदस्य प्रयोगे गौणत्वसम्भवाच्च ॥ १३ ॥ "पूषा प्रतिष्ठभागः अदन्तको हि सः" इत्यनेन विहितं पूषभागीय-पेषणं विकृतावेव निविशते पूषपदस्य देवतांतरे रूढत्वात् तच्यानेन कथंचिद् प्राकृताग्न्यादिपरत्वे अमुख्यत्वापत्तेश्च । इदं पूर्ताधिकरणेन गतार्थमपि उत्तरविवक्षया स्मार्यते ॥ १४ ॥ तच्च पेषणं पूर्वदेवताकचरुद्रव्यकविकृतावेव निविशते चरुशब्दस्य ओदने प्रसिद्धावपि पाकविशेषेण पिष्टचरावपि प्रयोगात् । पशुपुरोडाशद्रव्यकतद्देवताकयागयोः यथाक्रमं हृदयाद्याकारविनाशप्रसङ्गेन चोदकेन प्राप्ततया च निवेशासम्भवाच्च ॥ १५ ॥ तदेव पेषणं केवलपूषदेवताकयागे निविशते भागशब्देन भज् सेवायामिति धातुनिष्पन्नेन पूषपर्याप्तदेवतात्वकयागापूर्वप्रयुक्तत्वावगमात् ॥ १६ ॥

## अथ चतुर्थः पादः

निवीतं मनुष्याणां प्राचीनावीतं पितॄणां उपवीतं देवानां उपव्ययते देवलक्ष्ममेव तत्कुरुते इत्यत्र श्रुतं निवीतं स्वतन्त्रमनुष्योद्देश्यकातिथ्यादिकर्मशेषः तादृशप्राचीनावीतादिप्रायपाठात्, इदं च, औदुम्बराधिकरणसिद्धमर्थवादत्वं नास्तीति कृत्वा—चिन्ताया । वस्तुतस्तु अर्थवादः उपवीतस्तावकः एष वाक्यसन्दर्भः ॥ १ ॥ उपवीतं देवानामित्युक्तं उपवीतं, दर्शपूर्णमासयोरेवाङ्गं प्रकरणात् यज्ञोपवीति देवेभ्यो दोहयतीति लिङ्गं प्रकरणबलेन दर्शपूर्णमासङ्गत्वेन प्राप्तमुपवीतमनुवदति, प्राचीनावीतस्तुत्यर्थं, देवेभ्य इति बहुवचनं प्रकृतिविकृत्यभिप्रायेणोपपद्यत इति रीत्या लिङ्गस्याबाधकत्वाच्च ॥ २ ॥ उपव्ययत इति वाक्यं विधिः स्मृतितः पुरुषार्थतया प्राप्तावपि उपव्यानस्य क्रत्वर्थतया अप्राप्तत्वात् इति वार्तिक-कारः ॥ ३ ॥ भाष्यकारस्तु अस्याः श्रुतेः वासोविषयकत्वेन स्मृतेः ब्रह्मसूत्रविषयकत्वेन च उभयोरपि विधित्वं मन्यते । अथवा यज्ञोपावीतिहि देवेभ्यो दोहतीति वाक्यं ये पुरादंच इति वाक्यंच न विधिः हियच्छब्दाभ्यां विधिशक्तिप्रतिबन्धात् अपि तु अनुवादः प्राचीनदक्षिणाग्रावीतत्वस्तुत्यर्थत्वात् ॥ ४ ॥ उपरि हि देवेभ्यो धारयतीति वाक्यं दैवाग्निहोत्रे उपरिधारणस्य विधायकमेव सर्वमभ्यर्हितं द्रव्यं आच्छाद्यैव देशांतरं नेतव्यमित्याचारतः समिधहस्तादिना समं अनियमेन प्राप्तिसम्भवेऽपि नियमेन अप्राप्तत्वात् ॥ ५ ॥ प्राचीनवंशं करोतीत्युपक्रम्य श्रुतं देवमनुष्या दिशो व्यभजन्त प्राचीदेवाद्क्षिणापितरः प्रतीचीं मनुष्या उदीचीं रुद्रा इति वाक्यान्तर्गतं प्रतीचीवाक्यं निवीतवाक्यवदेव कृत्वा चिन्तायां स्वतंत्रनुष्योद्देश्यकातिथ्यादिकर्मशेषतया प्रतीचीं विधत्ते—तदुद्घाटने तु अर्थवाद एव प्राचीनवंशस्तुत्यर्थ इति । अधिका शङ्का तु निवीतं मनुष्याणामित्यत्र स्तुतिः न सम्यगुन्मीलते इह तु व्यभजन्तेति अनेक-कर्तृकोपाख्यानरूपपुराकल्पेन स्तुतिः सम्यगुन्मीलतीति तत्परिहारार्थत्वेन इदमधिकरणं सार्थकम् ॥ ६ ॥ "यत्परुषिदितं तद्देवानां यदन्तरा तन्मनुष्याणां यत्समूलं तत्पितॄणां समूलं बर्हिर्भवति व्यावृत्या इत्यादौ श्रुतमन्तरालवनादिकं निवीताधिकरणन्यायेन मनुष्योद्देश्यककर्मशेष इति सिद्धांतः कृत्वाचिन्तयां । तदुद्घाटने तु समूलबर्हिर्विध्यर्थवादत्वमेव, विरोधाशङ्क्या निवीतस्य फलकल्पनाभयेन मनुष्यार्थत्वाभावेऽपि बर्हिरादेः क्रियार्थत्वेन क्रियायाश्च फलवत्वं सिद्धमेवति अंतरा लवनादेः तदर्थत्वमित्याकारया प्रवृत्तत्वात् न तदधिकरणेन पुनरुक्तिः ॥ ७ ॥ नानृतं वदेदित्यत्र श्रुतोऽनृतवदननिषेधः शुद्धक्रतुधर्मो विधीयते, प्रकरणात् स्मार्तस्य तस्य पुरुषनिष्ठप्रत्यवायपरिहारकस्य क्रतावप्राप्तेः तदनुवादस्यात्र असम्भवाच्च ॥ ८ ॥ जंजभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवात्मन् धत्ते इत्यत्र श्रुतं मन्त्रवचनं क्रतुसंयुक्त पुरुषधर्मः जंजभ्यमानपुरुषस्य क्रतावपि सम्भवात् वाक्यप्रकरणयोरविरोधसम्भवे तद्विरोधकत्मनानुपपत्तेः

वाक्यशेषस्य वर्तमानापदेशात् फलार्थत्वासम्भवाच्च ॥ ९ ॥ यो ब्राह्मणायावगुरेत् तं शतेन यातयात् तस्माद्ब्राह्मणाय नावगुरेदित्यनेन विहितः ब्राह्मणावज्ञारूपस्य अवगोरणस्य निषेधः शुद्धपुरुषधर्मः यातयादित्यस्य "हेतुहेतुमतोर्लिङ् लिङर्थे लेट् इति सूत्रद्वयबलेन लोडन्तत्वपरिकल्पनद्वारा शतसंवत्सर भोग्ययातनायाः साध्यत्वावगमेन तादृशनरकपरिहारस्य फलत्वसम्भवात् ॥ १० ॥ "मलवद्वाससा न संवसेदि" ति श्रुतिविहितः रजस्वलासंवादनिषेधः पुरुषार्थः यस्य व्रत्येऽहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेतेति वाक्येन क्रतुसम्बंधिव्यापारात् पत्न्याः निवृत्त्यवगमेन संवादस्य क्रतुषु अप्रसक्तेः बहिःप्रसक्तेश्च ॥ ११ ॥ सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति इत्यत्र श्रुतं हिरण्यधारणं पुरुषार्थं अनारभ्याधीतत्वेन अव्यभिचारितक्रतुसम्बन्धाभावेन च क्रत्वर्थत्वासम्भवात् आर्थवादिक-फलसत्वेन फलकल्पनायाः अभावाच्च ॥ १२ ॥ "येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्" इत्यादिविहिताः जयादयः वैदिककर्मणामेव अङ्गानि कृष्यादिलौकिककर्माङ्गत्वे प्रधानकर्मसमानदेशत्वाभावरूपबाधकोपपन्नत्वे सति कर्माङ्गत्वात् ॥ १३ ॥ यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेदिति वाक्येन विहिता वारुणेष्टिः, वैदिकाश्वदाने वडवादक्षिणेति विहिते निमित्ते नैमित्तिकतया क्रत्वर्थतया विधीयते वैदिकक्रियात्वसाम्यात् वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति इति वाक्योक्तस्य वरुणग्रहशब्दित जलोदरस्य अश्वदातरि अदर्शनेन तस्य अर्थवादत्वाच्च । प्रतिगृह्णातीत्यस्य ददाति इत्यर्थः ॥ १४ ॥ सा वारुणेष्टिः दातुरेवोपक्रमे असञ्जातविरोधिनि दातुः प्रस्तावात्, न च वेदोपक्रमाधिकरणेन गतार्थता ऋक्शब्दस्य ऋग्भिः पूर्वाह्णे इत्यादौ वेदे बहुलप्रयोगात् वेदपरत्वेपि, प्रतिगृह्णातेः दाने अप्रयोगात् प्रतिगृह्णातिः दानलक्षको नेति विशेषाशङ्कया प्रवृत्तेः ॥ १५ ॥ सोमेंद्रं श्यामाकं चरुं निर्वपति यः सोमं वमिति इत्यत्र श्रुता इष्टिः वैदिकवमने निमित्ते क्रत्वर्थतया नैमित्तिकतया विधीयते सोमभक्षणस्य सम्यग्जरणपर्यन्तस्य शास्त्रार्थत्वात् वमने तस्याभावेन क्रतुवैगुण्यापत्ते ॥ १६ ॥ सोष्टिः यजमानवमननिमित्तैव । यः सोमं वमिति तस्मै निर्वपेदिति वाक्येन वमनस्य निर्वापसमानकर्तृकत्वप्रतीतेः निर्वापकर्तृत्वस्य यजमाननिष्ठत्वात् ॥ १७ ॥ यदाग्नेयोऽष्टाकपाल इत्यत्र श्रुतस्य आग्नेयपुरोडाशस्य शेषोऽस्ति, आग्नेयस्य पुरोडाशस्य मध्यात् अङ्गुष्ठपर्वमात्रं अवदानं तिरश्चीनं अवद्यतीति सूत्रात्, मध्याद्यपादानकद्व्यवदानस्यैव प्रदेयतया सर्वस्य अप्रदेयत्वात् आग्नेय इति तद्धितस्तु व्रीहीणामिव सकलपुरोडाशस्य प्रदेयप्रकृतित्वमेव ब्रूते इति भाष्यकारः । वार्तिककारस्तु आग्नेयशेषोऽस्ति सर्वस्य अग्नये दत्तत्वेऽपि निरुक्तवचनबलेन द्व्यवत्तस्यैव होमे हविःशेषस्य सद्भावात् शेषात् स्विष्टकृते समवद्यतीति वचनस्वारस्याच्च ॥ १९ ॥ स्विष्टकृदादिशेषकार्याणि आग्नेयादित्रिकशेषैः कर्तव्यानि शेषप्रतिपत्त्यर्थत्वात् एकशेषमात्रेण करणे इतरक्रतुवैगुण्यापत्तेश्च ॥ १९ ॥ पूर्वाधिकरणसिद्धांताभावं कृत्वा चिन्त्यते—एकस्मात् शेषात् तत्करणपक्षे मुख्यादेव (प्राथमिकादेव) शेषात् तत्करणम् । मुख्यानुष्ठानकाले शेषकार्यस्य बुद्धिस्थत्वेन तदर्थं शेषस्य स्थापितत्वात् ॥ २० ॥ आग्नेयं चतुर्धा कृत्वा व्यादिशतीदं ब्रह्मणः इदं होतुरित्यादिना विहितं हविर्भागसमर्पणं ऋत्विक्कर्तृकभक्षणार्थं, अग्नये जुष्टं निर्वपामि इत्यनेन कृत्स्नस्य हविषो देवतायैदानावगमेन यजमानेन पुनः तच्छेषस्य ऋत्विक्परिक्रये विनियोगकरणासम्भवात् भक्षणस्य प्रतिपत्त्यर्थत्वाच्च ॥ २१ ॥

## अथ तृतीये पंचमः

शेषकार्यं उपांशुयाजीयाज्यात् न कर्तव्यं सर्वयज्ञार्थं गृहीताज्यशेषस्य पश्चाद्धविपुरोडाशशेषप्रतिपत्त्यर्थस्विष्टकृदुपस्तरणादावपेक्षिततया कृतकार्यत्वाभावात् उपांशुयाजार्थमेव गृहीतस्य आज्यस्य

सर्वस्यापि होमेन शेषाभावाच्च ॥ १ ॥ साकंप्रस्थाय्ये स्विष्टकृदादि नास्ति अग्नीधे स्रुचौ प्रदाय सहकुम्भीभिरनुक्रमन्ताहेत्यनेन होमार्थयोः जुहूपभृतोः अग्नीधे प्रदानं कृत्वा कुम्भीभिरभिक्रमणविधानेन कुम्भीभिरेव द्रव्यं होतव्यमिति अवगमेन शेषाभावात् ॥ २ ॥ सौत्रामणीसम्बन्धिनां पयोग्रहाणां सुराग्रहाणां च शेषकार्याणि न कर्तव्यानि यथागृहीतान् ग्रहान्, ऋत्विज उपाददते इत्यादिवचनबलेन शेषाभावस्यावगमात् ॥ ३ ॥ य इंद्रियकामः वीर्यकामो वा स्यात् तमेतया सर्वपृष्ठया याजयेदित्यनेन इंद्राय राथंतराय निर्वपति इंद्राय बार्हताय, इत्यादिवाक्यषट्कसहितेन षड् इष्टयो विहिताः । द्वादशकपालः पुरोडाशो भवति इति वाक्येन तावदङ्गतया एकः पुरोडाशो विहितः तत्र सकृदेव शेषकार्यार्थं अवदानं कर्तव्यं, सर्वेषु प्रदानेषु कृतेषु अवशिष्टस्य सर्वशेषत्वानपायात् ॥ ४ ॥ ऐन्द्रवायवीयशेषभक्षः असकृत्कार्यः द्विरैन्द्रवायवस्य भक्षयति द्विर्हिवषट्करोति इतिवचनादिति भाष्यकारः । वचने सति पूर्वपक्षानुदयेन नेदमधिकरणान्तरं अपि तु पूर्वाधिकरण शेषतया द्विरैन्द्रवायवस्येत्यादौ प्रतिप्रदानं भक्षणवत् सर्वपृष्ठेष्ट्यपि प्रतिप्रदानं शेषकार्यमावर्तनीयमिति शङ्कायाः हेतुमन्निगदाधिकरणन्यायेन तस्य हेत्वर्थवादत्वेन प्रतिप्रदानं शेषकार्यमिति परिहारपरतया योज्यं इत्यपरे मन्यन्ते ॥ ५ ॥ सोमयागे शेषभक्षः अस्ति तत्रापि समाख्यावषट्कारहोमाभिषवप्रत्यक्षवचनैः निमित्तैः बहवो भक्षाः सन्ति "प्रैतु होतुश्चमस" इत्यादिसमाख्यादिप्रमाणैः ॥ ६ ॥ "प्रैतुहोतुः चमस" इत्यनेन ससुब्रह्मण्यानां चतुर्णां उद्गातृगणप्रविष्टानां भजणं विधीयते । योगाद्रूढेः बलवत्त्वेन उद्गातुरेकस्यैव ग्रहणे बहुवचनानुपपत्तेः तद्बलात् प्रत्यासत्त्या प्रस्तोतृप्रतिहर्त्रोरिव सुब्रह्मण्याह्वाने औद्गात्रसमाख्यायाः सत्वेन सुब्रह्मण्यस्यापि प्रत्यासन्नत्वादिति भाष्यकारः । एकस्तोत्रसम्बन्धादिभिः अन्तरङ्गैः त्रिभिः असुब्रह्मण्यानां त्रयाणामेव भक्ष इति वार्तिककारः ॥ ७ ॥ यथाचमसं अन्यांश्चमसान् चमसिनो भक्षयंति अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त इत्यनेन विहितं हारियोजनभक्षणं ग्रावस्तुतोऽपि विद्यते । अथैव—शब्दाभ्यां सर्वशब्दस्य चमसिमात्रपरामर्शकत्वभंजनेन सान्निधिना वाक्याबाधायोगाच्च अचमसिनामपि भक्षणविधानार्चत् ॥ ८ ॥ वषट्कारो भक्षे निमित्तं "वषट्कर्तुः प्रथमभक्ष" इत्यनेन प्राथम्यविशिष्टभक्षणस्य वषट्कारे निमित्ते विधानात् अन्यथा विशिष्टानुवादगौरवाद्यापाताच्च ॥ ९ ॥ हविर्धाने चर्मन्नधिग्रावभिरभिषुत्नतयाहवनीये हुत्वा प्रत्यंचः परेत्य सदसि भक्षयन्तीत्यत्र विधित्सितगुणानां सर्वेषां प्राप्तत्वेन होमाभिषवोभय निमित्तकभक्षांतरविधानात् होमाभिषवनिमित्तकभक्षणमस्ति ॥ १० ॥ प्रैतु होतुश्चमस इत्यत्र होमाभिषवकर्त्रोः होत्रध्वर्व्वोरपि अस्ति भक्षणं समाख्यायाः वषट्कर्तुः प्रथमभक्ष इत्यस्य हविर्धाने ग्रावभिराभिषुत्येत्यादिवाक्यस्य च निरवकाशत्वात् ॥ ११ ॥ तत्र वषट्कर्तैव प्रथमं भक्षयेत् वषट्कर्तुः प्रथमभक्ष इति श्रवणात् सर्वापेक्षया प्राथम्यवाचकप्रथमपदस्य पात्रसन्निधानरूपन्यायमात्रेण सङ्कोचायोगात् विशिष्टविधानेन अवाक्यभेदाच्च ॥ १२ ॥ उत्तरभक्षणमनुज्ञापनपूर्वकमेव सोमोनानुपहूतेन पेयः इति वचनात् ॥ १३ ॥ तच्चानुज्ञापनं उपहूत उपह्वयस्वेति मन्त्रेणैव कार्यं मन्त्रस्य तत्प्रकाशनसामर्थ्यात् ॥ १४ ॥ स च मन्त्रः अर्थवशेन विभज्य विनियोज्यः वाक्यलिङ्गस्य प्राबल्यात् पाठादर्थस्य प्राबल्याच्च ॥ १५ ॥ तच्चानुज्ञापनं एकपात्रपातृणामेव अनेकसाधारणे शेषवस्तुनि कथंचिदधिकांशभक्षणप्राप्तापराधनिमित्तेतरकोपशान्तिप्रयोजनकत्वात् ॥ १६ ॥ यजमानस्य याज्या सोऽभिप्रेष्यति होतरेतद्यजेति स्वयं वा निषद्य यजति इत्यत्रोक्तस्य स्वयं याज्यापाठस्य पक्षे, वषट्कार भक्षावपि होतुः सकाशात् अपनीयेते श्रुतस्य यष्टृत्वस्य वषट्कारे सत्येव पूर्णत्वात् तन्निमित्तकत्वाच्च भक्षस्य ॥ १७ ॥ यदि राजन्यं वैश्यं वा याजयेदित्युपक्रम्य न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्येत्याद्युक्त्वा तमस्मै भक्षं प्रयच्छेदित्यत्र श्रुतः फलचमसः यागसाधनमपि सोमं विकुर्वन् तं बधित्वा यागसाधनत्वेनापि निविशते

अनिज्यासाधनत्वे भक्षाख्यप्रतिपत्यनर्हत्वे सति भक्ष्यत्वेन श्रवणात् ॥ १८ ॥ दश दशैकैकं चमसमनुप्रसर्पेयुः शतं ब्राह्मणाः सोमान् भक्षयंति इत्यादौ श्रुतं राजन्यचमसं दश ब्राह्मणा एव भक्षेयुः, दशदशेति वाक्यविहितां शतत्वरूपा संख्यामनूद्य शतं ब्राह्मणा इत्यनेन संख्येयानां ब्राह्मणानां विधानात् श्रुत्यर्थविधिसम्भवे भूम्ना ब्राह्मणपदस्य गौणत्वकल्पनाया अयुक्तेश्च ॥ १९ ॥

## अथ षष्ठः पादः

यस्य पर्णमयी जुहूरित्यत्र उक्ता पर्णता प्राकृतजुहूमात्र गामिनी वैकृतजुह्वर्थत्वे द्विरुक्तत्वापत्तेः अव्यभिचरितक्रतुसम्बन्धाच्च ॥ १ ॥ सप्तदश सामिधेनीरनुब्रूयादिति श्रुतं साप्तदश्यं न प्रकृतिगामि वाक्येन सामिधेनीस्वरूपार्थत्वावगमेऽपि अपूर्वसाधनत्वाकारसम्बन्धस्य प्रकरणपठितपांचदश्य एव प्रथमोपस्थितत्वेन तदादायैव प्राकृतैनैराकाङ्क्ष्यात् अपि तु मित्रविंदादि विकृतिगामि॥ २॥सप्तदशसामिधेनीरनुवैश्यस्य इति श्रुतं साप्तदश्यं प्रकृतौ निविशते वैश्यनिमित्वकत्वेन निरवकाशत्वादिना च प्राबल्येन नित्यस्य पांचदश्यस्य वैश्यव्यतिरिक्तविषयकत्वकल्पनरूपबाधात् ॥ ३ ॥ अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदित्युपक्रम्य "वसन्ते ब्राह्मणोऽग्नीनादधीतेति श्रुतमाधानं पवमानेष्ट्यर्थं न पवमानेष्टेः फलकल्पनाभावात् आधानपवमानेष्ट्योः श्रुतिवाक्याभ्यां अग्न्यर्थत्वाच्च इति भाष्यकारः । वार्तिककारस्तु पवमानेष्टीनामाधानाङ्गत्वं मन्यते ॥ ४ ॥ तदिदमाधानं अग्निमात्रार्थं अग्निपदार्थस्याहवनीयादेः अदृष्टरूपतया आधानं विनोत्पत्तौ प्रमाणभावेन स्वरूपे आनर्थक्याभावेन जुहूवैयर्थ्यात् ॥ ५ ॥ पवमानेष्ट्यसंस्कृते अग्नौ पवमानेष्टयः कार्याः प्रकृत्यङ्गानामेवातिदेशस्य आष्टमिकन्यायसिद्धत्वेन तदनङ्गस्य पवमानेष्टेः उपकारकत्वेऽपि पवमानेष्टावनतिदेशात् ॥ ६ ॥ यूपच्छेदनादयः अग्नीषोमीयमात्रार्थाः आनर्थक्यप्रतिहतन्यायसहकृतस्थानरूपप्रमाणेन प्रकरणबाधात् सवनीयसन्निध्यनाम्नानाच्च ॥ ७ ॥ पलाशशाखाच्छेदनादयः दोहधर्माः सायंप्रातर्दोहार्थाः प्रकरणात्, आनर्थक्यतदङ्गन्यायाभावेन प्रबलेन प्रकरणेन स्थानबाधसम्भवात् स्थानाभावाच्च ॥ ८ ॥ उपोप्तेऽन्ये ग्रहाः साद्यन्त इत्यादिना प्रतीताः सादनादिधर्माः सर्वसवनीयग्रहोद्देश्यकाः वाक्यप्रकरणाभ्यां तथावगमात् तयोश्च प्रातःसवनमात्रीय ग्रहार्थत्वग्राहकस्थानबाधकत्वसम्भवाच्च ॥ ९ ॥ अग्नीषोमीयसन्निधावाम्नाता अपि रशनातद्धर्मत्रिवृत्त्वादयः उपदेशेन सवनीयपरिव्याणार्था अपि सवनीयोत्पत्तिवाक्ये त्रिवृत्त्वानुवादात् अग्नीषोमीयादीनां त्रयाणां पशूनां एकयूपकत्वेन अग्नीषोमीयार्थयूपपरिव्याणार्थरशनात्वस्य सवनीयपरिव्याणार्थरशनायामपि सत्वाच्च ॥ १० ॥ सादनादयो ग्रहधर्माः अनारभ्याधीतांश्वदाभ्यग्रहार्था अपि तयोरपि ग्रहयोः ज्योतिष्टोमापूर्वसाधनत्वस्य इतर ग्रहसाधारणस्य सद्भावात् ॥ ११ ॥ अखण्डत्वाकृष्णत्वादय इष्टकाधर्माः चित्रिण्यादीष्टकासु अनारभ्याधीतास्वपि कार्याः प्राकरणिकविनियोजकवाक्यस्य अप्रयोजकत्वात् प्रयोजकस्य अग्न्यपूर्वसाधनत्वस्य तास्वपि सद्भावात् ॥ १२ ॥ क्रयाभिषवादयः धर्माः उपदेशेन फलचमसे न प्राप्नुवंति अपूर्वसाधनत्वस्य तत्र सत्वेऽपि तस्य नैमित्तिकत्वेन अनिमित्तिक सोमस्समादाय चरितार्थत्वात् ॥ १३ ॥ नीवारादिप्रतिनिधिः मुख्येन व्रीह्यादिना समानविधानः स्वातंत्र्येण स्वेषां यागसाधनत्वेन अवधीयमानत्वात्, धर्मविध्युद्देश्यतावच्छेदकेन व्रीहित्वजात्याक्षिप्तव्रीहिव्यक्त्यवयवारब्धत्वेन आक्रान्तत्वाच्च ॥ १४ ॥ यदि सोमं न विन्देत् पूतिकानभिषुणुयात् इत्यत्र श्रुताः पूतिकाः अपि सोमेन समानविधानात् अनेन वचनेन नियमविधिलाघवानुसारेण सोमावयवैः कतिपयैः विशिष्टत्वेनैव पूतिकानां विधानेन सोमधर्मविध्युद्देश्यतावच्छेदकाक्रान्तत्वात् ॥ १५ ॥ दीक्षणीयाद्यङ्गविधिः ज्योतिष्टोमिकोषु पशुकाम उक्थ्यं गृह्णीयादित्यादिवाक्यविहितासु उक्थ्यादिसंस्थासु अतिदेशेनैव प्रवर्तते संस्थानामक्रियात्वेन प्रकृतक्रतुसापेक्षतयैव फलसाधनत्वात् क्रतोस्तु काम्यसंस्थानैरपेक्षेण नित्यसंस्थाकत्वविशिष्टरूपेण फलसाधनत्वेन प्रकृतक्रतावेव उपदेशेन प्रवृत्तेः ॥ १६ ॥

## अथ सप्तमः पादः

वेद्यां हवींष्यासादयति इत्यादौ श्रुताः वेद्यादयः अङ्गप्रधानसाधरण हविःस्वरूपे आनर्थक्यपरिहाराय दर्शपूर्णमासोपयोगिहविष्ट्स्य उद्देश्यतावच्छेदकत्वस्वीकारेण तस्य प्रयाजाद्यङ्गाङ्गहविष्वपि सद्भावात् ॥ १ ॥ केशश्मश्रु वपते इत्यादिवाक्यवगताः वपनादयः प्रधानमात्राङ्गं वपनादीनामदृष्टार्थत्वेन अदृष्टरूपसंस्कारार्थस्य अदृष्टरूपे फलभोगे उपयोगात् फलसाधनत्वस्य प्रधान एव सद्भावात् उभयार्थताग्राहकवाक्याभावाच्च ॥ २ ॥ षट्त्रिंशत्प्रक्रमा प्राचीत्यादौ उक्ता वेदिः अङ्गप्रधानोभयार्था स्यति शक्ष्यामहेऽस्यां कर्तु इति तुमुना चिकीर्षावगमात् तस्याश्च अङ्गसहितप्रधानस्यैव फलजनकतया अङ्गप्रधानोभयविषयकत्वात् ॥ ३ ॥ चतुर्होत्रा पूर्णमासीमभिमृशति इत्यत्र विहितचतुर्होत्रमन्त्रः अङ्गप्रधानसाधारणहविरर्थः पूर्णमासीपदबोध्ये कर्मणि अभिमर्शनासम्भवात् तत्कर्मसंबन्ध्याङ्ग्युपकारकत्वस्यैव तत्र उद्देश्यतावच्छेदकतया तस्य अङ्गाङ्गहविष्वपि सद्भावात् ॥ ४ ॥ दण्डेन दीक्षयति इत्यादिविहिता दीक्षा द्वादशशतं दक्षिणा इतिवाक्यविहिता दक्षिणा च प्रधानमात्रगामिनी दीक्षा सोमस्य, दक्षिणा सोमस्येति साक्षात्सम्बन्धतात्पर्यकषष्ठीघटितवाक्यात् ॥ ५ ॥ अर्धमन्तर्वेदिमिनोति अर्धं बहिर्वेदीत्यत्र यूपोद्देशेन लक्षितः असंस्कृती लौकिको देशविशेषः विधीयते, अर्धोद्देशेन अन्तर्वेदिविधाने वाक्यभेदापत्तेः ॥ ६ ॥ उत यत्सुन्वंति समिधेनीस्तदन्वाहुः इत्यत्र हविर्धानलक्षितो देशविशेषः सामिधेन्यङ्गं हविर्धान शाकटसामिधेन्योः कृप्तप्रयोजनकतया नैराकांक्ष्येण अङ्गाङ्गिभावायोगात् प्राकृतदेशस्य नियममात्रकरणे लाघवाच्च ॥ ७ ॥ दर्शपूर्णमाससम्बंधियागमेव यजमानः कुर्यात् अन्यत्तु ऋत्विजः कुर्युः यजेत स्वर्गकाम इत्यादौ श्रुतस्य कर्तृत्वस्य प्रयोजकत्वत्वेनाप्युपपत्तेः स्वतन्त्रकर्तृत्वरूपत्वे दक्षिणादानादेः नित्यवदाम्नानानुपपत्तेः अदृष्टार्थत्वापत्तेश्च ॥ ८ ॥ ते च ऋत्विज नियतानेके अध्वर्युं वृणीत इत्यादिवाक्येषु तत्तत्कर्मकृतेः पूर्वं अध्वर्य्वादित्वेन ऋत्विजां बोधनेन अध्वर्य्वादि पदानां कर्मनिमित्तत्वाभावेन वरणनिमित्तकत्वे न च यावद्वरणं संज्ञाभेदः यावत् संज्ञं ऋत्विक्भेदात् ॥ ८ ॥ चमसाध्वर्यून् वृणीते इत्यत्र श्रुता अध्वर्यादिभ्यो षोडशभ्यो भिन्नाः पृथग्वरणाम्नानात् मध्यतः कारिणां चमसाध्वर्यव इत्यादिभेदव्यपदेशाच्च ॥ ९ ॥ चमसाध्वर्यून् इत्यत्र श्रुतं बहुत्वं विवक्षितं चमसाध्वर्यूणां क्रतुवितियोजकवाक्यांतराभावेन प्रकरणसनाथेन अनेनैव वाक्येन क्रतुसम्बंधित्वविधानेन उपादेयगतत्वात् ॥ १० ॥ चमसाध्वर्यूणां संख्या नियता चमसानां दशत्वात् क्रतुपेये दश चमसाध्वर्यव इति लिङ्गात् ॥ ११ ॥ शमिता पशुं नयति इत्यत्र श्रुतः शमिता उक्तेष्वन्यतम एव पृथक् वरणानाम्नात् । शमनकर्तृत्वस्य एषु सम्भवाच्च ॥ १२ ॥ ज्योतिष्टोमिका उपगातारः प्राकृता एव अग्नीदग्नीन् विहरेति प्रैषार्थकर्तृत्वस्य आग्नीध्र इव एतेषु उपगातृत्वसम्भवात् नाध्वर्युः उपगायेदिति लिङ्गाच्च ॥ १३ ॥ सोमविक्रयी अन्य एव विक्रयस्य अचोदितत्वेन अक्रत्वर्थत्वात् क्रत्वर्थार्थमुपात्तानां तत्र कर्तृत्वासम्भवात् ॥ १४ ॥ केचिदेव ऋत्विक्पद वाच्या ऋत्विजो वृणीते इति वचनस्य वरणेन ऋत्विज उत्पादयेदित्यर्थकतया ऋत्विक्पदस्य सप्तदश ऋत्विज इति वचनसहकारेण ऋत्विक्पदस्य चमसाध्वर्युव्यावृत्तवरणप्रवृत्तिनिमित्तकत्वात् । इति भाष्यकारः । अस्मिन् कल्पे क्रतुयजनरूपकृप्तयोगस्य बाधापत्तिः अतः सप्तदश ऋत्विज इति वचनसहकारेण ऋत्विक्पदस्य चमसाध्वर्युव्यावृत्तक्रतुयजननिमित्तकत्वाभ्युपगमो हेतुरिति वार्तिककारः ॥ १५ ॥ प्रागुक्ता ऋत्विङ्नामानः ब्रह्मादय एव ऋत्विग्भ्यो दक्षिणां ददाति इत्युक्त्वा अग्नीधे ब्रह्मण इतिपरिगणनात् सत्रे दीक्षाविधिबलाच्च ॥ १६ ॥ सप्तदशः यजमान एव, यागरूपकर्मकरत्वात् सदस्यस्य तदभावाच्च ॥ १७ ॥ अध्वर्युप्रभृतीनां कार्यं व्यवस्थयैव भवति आ[illegible] प्रापितस्य

कर्तृनियमनात् ॥ १८ ॥ यदाहवनीये जुहोति इत्यादिना विहितः अन्वयः प्रकृतिविकृतिसाधारणहोमार्थाः अप्रकरणाधीतत्वात् आमनहोमाद्यौपदेशिकहोमविषयत्वेन पर्णतावत् द्विरुक्तत्वापाताभावाच्च ॥ १९ ॥ मैत्रावरुणः प्रेष्यति चान्वाहेति वाक्यस्य प्रैषयुक्तानुवचन एव मैत्रावरुणः कर्ता इत्येवार्थः, प्रत्येकमुद्देश्यत्वे वाक्यभेदात् तत्र तत्र आध्वर्युहौत्रोः कर्तृत्वस्य निर्ज्ञातत्वेन निराकांक्षत्वाच्च अत्र तु कर्तृरनिर्ज्ञातत्वेन साकांक्षत्वाच्च ॥ २० ॥ अध्वर्युरेव चमसैर्जुहुयात् चम ाध्वर्युसमाख्यायाः आध्वर्यवमिति सामान्यसमाख्यासापेक्षत्वेन दुर्बलत्वेन तद्बाधकत्वानुपपत्तेः ॥ २१ ॥ श्येनयागाङ्गानि नानाकर्तृकाणि आतिदेशिकत्वात् तस्य, औद्गात्रादिसमाख्यायाः लब्धात्मिकाया अतिदेशेबाधकत्वं युक्तं । प्रकृतेति तु आतिदेशिकांगप्राप्त्युत्तरमेव प्रधानविधिरूपप्रयोगविधिः प्रवर्तते इति तादृशप्रयोगविध्याश्रितायाः समाख्यायाः अतिदेशबाधकत्वायोगाच्च ॥ २२ ॥

## अथ अष्टमः पादः

दक्षिणादानेन ऋत्विक्परिक्रयः नाध्वर्य्वादिना कार्यः साङ्गप्रधाने यजमानस्यैव कर्तृत्वनिश्चयात्। परिक्रयात् प्राक् अध्वर्य्वादेरभावेन आध्वर्यवादिसमाख्यायाः तद्बाधकत्वायोगाच्च ॥ १ ॥ केशश्मश्रु वपते इत्यादिविहिता वपनादयः यजमानसम्बंधिन एव संस्काराणां सतामेषां कर्मजन्यफलाधानयोग्यतार्थत्वेन तस्याः यजमानगामित्वस्यैवौचितत्वात् स्वभिन्नेतादृशयोग्यताधानार्थं यजमानेन परिक्रयस्यसम्भवात्॥ २॥ द्व्यहं नाश्नाति इत्यादौ उक्तं तपः याजमानमेव क्रतुफलप्रतिबन्धकाधर्मफलीभूतदुःखानुभवदानेन अधर्मनिवर्तनद्वारा योग्यताधायकत्वात् ॥ ३ ॥ हिरण्यमालिनो ऋत्विजः प्रचरंतीत्यत्र श्रुतं हिरण्यमालित्वं सर्वऋत्विग्भिः कार्यं ऋत्विगुद्देशेन तद्विधायकेन प्रतिप्रधानं गुण आवर्तते इति न्यायसहकृतेन वाक्येन तथावगमात्, समाख्यायाः वाक्येन बाधसम्भवाच्च ॥ ४ ॥ यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादित्यत्र श्रुतः काम यजमान एव सदोमानकर्तुः अध्वर्युत्वेऽपि तज्जन्य फलस्य परस्मैपदेन तद्भिन्नगामित्वप्रतीतेः पदश्रुत्या वाक्यसमाख्ययोः बाधौचित्याच्च ॥ ५ ॥ "आयुर्दा अग्नेऽस्यायुर्मे देहि" इत्यादिमन्त्राः यजमानेन प्रयोक्तव्याः प्रधानफलस्य मंत्रोच्चारणकर्तृनिष्ठत्वावगमात् लिङ्गात्समाख्यायाः बाधोपपत्तेश्च ॥ ६ ॥ वाजस्य मा प्रसवेनेत्यादिः अध्वर्युयजमानाभ्यां प्रयोक्तव्यः द्विराम्नानात् ॥ ७ ॥ क्रुतीर्यजमान वाचयतीति विहितं वाचनं अभिज्ञं प्रत्येव, अनभिज्ञस्य अधिकाराभावात् वचनानुकूलस्मरणाचरणेन उपपत्तेश्च ॥ ८ ॥ द्वादश द्वंद्वानि दर्शपूर्णमासयोस्तानि संपाद्यानीत्याहुः वत्सन्चोपावसृजति उखां चाधिश्रयति इत्यादौ श्रुतं द्वंद्वतासम्पादनं पदार्थांश्च अध्वर्युरेव कुर्यात् आध्वर्यवसमाख्याया अनुपसन्जातविरोधिन्याः सत्वात् । याजमानसमाख्याया प्रयोजक कर्तृपरत्वेनाप्युपपत्तेश्च ॥ ९ ॥ कुण्डपायिनामयने अतिदेशप्राप्तयोः करणमन्त्रक्रियमाणानुवादिमन्त्रयोः मध्ये होता आध्वर्यवं क्रियमाणानुवादिमन्त्रमेव वदेत यो होता सोऽध्वर्युरित्युपदेशेन तत्र होतुर्विधानात् करणमंत्रंतु तत्पुरुषो मैत्रावरुणादिर्ब्रूयात् ॥ १० ॥ प्रोक्षणीरासादय अग्नीदग्नीन् विहरेत्यादि प्रैषान् अन्यः कुर्यात् तदर्थान् च तदर्थन्यः कुर्यात् प्रैषस्य सम्बोधनमध्यमपुरुषानुरोधेन परकर्तृकार्थबोधकत्वनियमात् ॥ ११ ॥ प्रैषकर्ता अध्वर्युः तदर्थकर्ता तु अग्निं आध्वर्यवसमाख्यायाः अग्नीत् शब्दस्य अन्यथा गौणत्वापत्तेः अध्वर्युशब्दस्य तु अर्थवादस्थत्वेन गौणत्वस्य न्यायत्वाच्च ॥ १२ ममाग्ने वर्चः इत्यादिमन्त्रप्रकाश्यं वर्चःप्रभृतिफलं यजमानगाम्येव यजेत स्वर्गकाम इत्यादावात्मनेपदानुरोधेन साङ्गप्रधान भावनाविषयाङ्गफलानामपि यजमानगामित्वप्रतीतेः ऋत्विक्षु दक्षिणाव्यतिरिक्तफलाभावाच्च ॥ १३ ॥ अग्नाविष्णूमवामविक्रमिषं विहीथां

मनासंतात्यं इत्यत्र श्रुतं असन्तापरूपं फलं अध्वर्युगामि स्वीयकर्मपरिसमाप्त्यर्थं अध्वर्युगतासन्तापस्य यजमानेच्छाविषयत्वात् ॥ १४ ॥ किमत्र भद्रं तन्नौ सहेत्यत्र श्रुतं भद्ररूपं फलं उभयगामि भद्रस्य कर्मानौपयिकत्वेऽपि द्विवचनात् सहशब्दाच्च ॥ १५ ॥ लवनादयो बर्हिर्धर्माः यूपावठास्तरणार्थे बर्हिषि न भवंति । प्रकृतौ यूपावटास्तरणस्य बर्हिकार्यत्वेनादर्शनात् ॥ १६ ॥ सभाव्वप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुत इत्यादौ श्रुतं पवित्रादि लवनादिभिरसंस्कृतात् परिभोजनीयात् कार्यं तत्संस्कृतस्य सर्वस्य बर्हिणां वेदिस्तरणादौ श्रुत्या विनियोगेन शेषाभावात् ॥ १७ ॥ पुरोडाशशकलमैंद्रवायर्वस्य पात्रे निद्धाति इत्यत्र श्रुतं निधानं सवनीयपुरोडाशैकदेशादेव । शकलमिति द्वितीयया शकलस्य संस्कार्यत्वावगमेन इष्टिशिष्टस्यैव तत्सम्भवात् ॥ १८ ॥ यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्तव्या इत्यत्र श्रुतमुपांशुत्वं प्रधानमात्रार्थं, वाक्यात् तन्मात्रार्थत्वावगमात् ॥ १९ ॥ "हतिनवनीतमाज्यं भवति" इत्यत्र विहितं हतनवनीतत्वं अङ्गार्थं प्रधाने आज्याभवेऽपि अङ्गेषु आतिदेशकाज्यसद्भावेन तदनुवादेन गुणमात्रविधाने लाघवात् अन्यथा विशिष्टविध्यापत्तेः ॥ २० ॥ तत्र हतिनवनीतत्वं अङ्गेषु सर्वेषु निविशते आज्यासामान्यानुवादेन तद्विधायकात् वाक्यात् । सुत्याकालीनत्वाद्युपष्टब्धस्य अनुमानस्य बाधसम्भवाच्च ॥ २१ ॥ तेषां तरसमयाः सवनीयाः पुरोडाशा भवंतीत्यत्र श्रुतं तरसमयत्वं सवनीयधानादिपञ्चके निविशते अव्यवहितेन सवनीयपदेन अन्वयात् जघन्ये पुरोडाशपदे प्रकृताविव निरुक्तपञ्चके लक्षणायाः युक्तत्वाच्च ॥ २२ ॥

इति तृतीयाध्यायः समाप्तः

उपसंहारः

एवं श्रीजयचामराजनृपतेर्गीर्वाणविद्यालये ।
न्याये जैमिनिदर्शनेऽग्र्यगुरुताभाजोः महाधीमतोः ॥
छात्रेणारचि रामचन्द्रविदुषा सारावहो ग्रंथकः ।
श्रीमद्भाट्टसुसङ्ग्रहस्य गुरुरुद्राजस्य तोषेच्छया ॥ १ ॥

# ॥ गौरवमीमांसा ॥

लेखकाः— श्रीगुंडेरायाः हरकारे, “विद्याभूषणं, वाचस्पतयः शिरोमणयः”
डिस्ट्रिक्ट् जड्ज्, मद्रास्



श्रीमद्भि श्श्रीमत्तरिमळप्रकाशनमन्दिराध्यक्षैः “कवितिलका” ह्यनेकोपाधिमण्डितैः पण्डितैः राजा. श्री. गुरुराजाचार्यैः “गौरवमीमांसा” विषये एकः प्रबन्धो लेखनीय इति प्रेरितोऽहमस्मिन् द्वादशवत्सरीयवेदान्त साम्राज्याभिषेक महोत्सवे, श्री. श्री १०८ जगद्गुरून् श्रीमत्सुधमीन्द्रतीर्थपूज्यचरणान् यथामति सेवितुमुत्सहे । महतामाशिव सर्वमङ्गलकरी, किंपुनः महामहतां जगत उद्धाराय प्रवृत्तानामुदारयशसामव्याजकरुणाशालिनां यशोविशेष समाख्यानम् ॥

जगतीतले केवलं लोकहितायैव निःस्वार्थबुध्या प्रयतमानास्तत्वविदः सत्यशीला अन्तराय सहस्रैः प्रत्यहं प्रतिहन्यमानापि राज्ञामाज्ञां तृणायमन्यमानास्स्वकर्तव्यं परहितमपरित्यजन्तः दुस्त्यजान् प्राणानपि परित्यजन्तः महान्तः साक्रोटिस् एशूक्रिस्त प्रभृतयो विरला एव । तथैवास्मिन् भारते वर्षे सत्यव्रता स्सत्यशीलाः धर्मरक्षणमात्रदृष्टयः विनाऽपि परनिर्बन्धं स्वसन्तोषेणैव ये स्वप्राणानत्याक्षुस्तेषां निरस्तसमस्तरजस्तमोमहानामविस्मरणीयानामपि विस्मृतप्रायाणां कुमारिलोदयनप्रभृतीनां पवित्र नाम स्मरणं दिव्यचरित्रकीर्तनं सकलदुर्मतध्वंसि श्रुति प्रामाण्य प्रतिपादक सिद्धान्त तत्वानां लेशतोऽप्यनुवादः महते फलायेति निश्चप्रचम् ॥

यश्च कुमारिलो दिगन्तविश्रान्तयशाः—यमुद्दिश्य “अयं ह्यधीताखिलवेदमन्त्रः । वृलेषणा लोडित सर्वतन्त्रः ॥ नितान्तदूरीकृतदुष्टतन्त्रः । त्रैलोक्यविभ्राजित कीर्तियन्त्रः” ॥ इति प्रसिद्धिः, स न केवलं वेदरक्षायै लोके लोकायतीकृतं धर्ममीमांसाशास्त्रमास्तिकपथे कर्तुं निःस्वार्थबुध्या प्रायतत, अपितु धर्मद्वेषिणां परेषामुन्मूलनाय महान्तमुद्योगमास्थात् । एवं धर्मस्य रक्षणाय वेदस्य चोद्धाराय क्रियमाणां निष्काममपि कर्म परोद्वेगजनकमिति मन्वानेन तेन सत्यशीलेनान्यैः निवार्यमाणेनाऽपि स्वप्रतिज्ञातमेव सत्यमपरित्यजता कृत एव तुषाग्नौप्रवेशः । उक्तञ्च, “एकाक्षरस्याऽपि गुरुप्रदाता शास्त्रस्य वक्ता किमुभाषणीयम्” इति । “तदेवमित्थं सुगतादधीत्य प्राधातयं तत्कुलमेव पूर्वम् । जैमिन्युपज्ञेऽपि निविष्टचेताः शास्त्रेनिरास्थं परमेश्वरं च” ॥ इति । “प्रायोऽधुना तदुभयत्र भवाद्य शान्त्यै प्राविक्षमार्य ! तुषपावकमात्तदीक्षः ॥” इति च, उदयनोऽपि उदारयशास्तार्किक चक्रवर्ती परमास्तिक शिरोमणि स्सत्यव्रत स्स्वयं स्फूर्त्यामृत्योः व्यात्तमुखे उत्पतन् दुष्करंकर्मकुर्वन् दुस्त्यजान् प्राणान शिबिना समानर्धा तत्याज । “ऐश्वर्यमदमत्तस्सन्मामात्मान मवमन्यसे । पुनर्बुद्धे समायाते मदधीनातवस्थिति” रिति भगवन्तं जगन्नाथं परमात्मान मुद्दिश्य अत्यन्तकठिने प्राणोत्क्रमसमये प्रार्थयमाणेनाऽपिनमुक्तः प्रश्रयः ॥

एवं प्रभाकरोऽपि महान् ज्ञानराशिरत्यन्त सूक्ष्मधिषिणः महताप्रयत्नेन वेदमेव धर्ममूलं गोपायांचकार व्याचकार चेतिकर्तव्यताभागं धर्मस्य। एष तु कुमारिलशिष्य इति प्रसिद्धिः।—“अस्यां सूत्रं जैमिनीयं शावरं भाष्यमस्यतु। मीमांसा वार्तिकं भाट्ट भट्टाचार्यकृतंहितत् ॥ तच्छिष्योन्य (स ?) त्वभेदेन शावरस्यमतान्तरम्। प्रभाकर गुरुश्चक्रे तद्धिप्राभाकरं मतम् ॥” तथापि कुमारिल प्रभाकरयोः गुरुशिष्ययो श्शास्त्रविषयेषु बहवोबुद्धिवादाः समवोभूयन्तेति तेषुच प्रभाकरस्यैवकोटिः शतकोटिरिव कुमारिलेन गुरुणापि अनिवार्या अभेद्या चासीदिति च प्रहृष्टश्च कुमारिलः स्वशिष्याय प्रभाकराय “गुरु” रिति मादरमुपाधिं व्यतरादिति च सांप्रदायिकाः। एवं प्रभाकरोऽयमत्यन्त प्रतिभाशाली प्रभाकर इव तमोराशि दुर्वादिनस्सर्वानपि विजित्य अचिरेणैव स्वगुरोः कुमारिलात् मतादन्यदेव विलक्षणं कुशाग्रधिषणमप्यगोचरं स्वसिद्धान्तं स्थापयामास। स्वयंचाचार्यपदवीं महतीं भेजे। मीमांसा शास्त्रे अस्यमतं गुरुमतमिति गुरोः कुमारिलस्य च मतं भाट्टमिति प्रसिद्धिः। स्वयं कुमारिलेन गुरुणा प्रभाकरस्य मतं महता प्रयत्नेन खण्डितं तत्र तत्र तन्त्रवार्तिके श्लोकवार्तिके च सविस्तरमुपलभ्यते। तथापि कुमारिलमतदूषणं प्रभाकर कृतं न कुत्राप्युपलभ्यते। यद्यपि प्रभाकरः कुमारिलादिरिव प्राणान्नत त्याज। तथापि स एष सवमहानित्यभिप्रैमि। अयं महान् ज्ञानराशिः, अति विलक्षणधिषणाशाली शून्य-निरालम्ब-माध्यमिक-लोकायतिकाद्यनेकेषां दुर्वादिनामद्वितीयां वादचातुरीं शेमुषीद्वितीयो निराचकार। अपि चायं सत्यव्रतः श्रद्धावान्भक्तिमांश्च। अस्य विनयसम्पदस्तु नास्त्येव परिमितिः। स्वगुरोः कुमारिलस्य विषयेऽस्यकियानादरः कियतीच श्रद्धाऽऽसीदिति तुषकृष्णवर्त्मनि प्रविशति अकृष्ण-वर्त्मनि कुमारिले “प्रभाकराद्यैः प्रथितप्रभावैरुपासितं साश्रुमुखैर्विनेयै” रिति वचनाद्वाचक सुधीभिरेवोह्यतीयम्। स्वशास्त्रार्थभूतस्य वादेषु स्वगुरुमपि जितवतो गुरुणा तत्र तत्र निराक्रिय-माणस्याऽपि गुरावीदृशी प्रश्रयोऽनन्य साधारणी। पाञ्चभौतिक देहत्यागादपि बीज भूतस्य स्वाहंकारस्य त्यागः सहात्रगुणाधिकएव। यद्यपि “व्यवहारे भट्टनय” इति भाट्टमेवमतमूरीकृतं सर्वैः दूरीकृतश्च प्राभाकरं तथापि पारमार्थ्येन परीक्ष्यमणो गुरुमतमेव प्रायशोऽनुसरति भाष्यम्। न केवलमनुसरणं किन्तुभाष्यकृतां शबर स्वामिनामाशयस्य सुविपुल माविष्करणं दृश्यते बृहत्याम्। कुमारिलस्तु तत्र तत्र भाष्यं निराचष्टे। किञ्च विविपित्सूनां बहूनि रहस्यानि गुरुमते वेदितव्यानिसन्ति। दृश्यते च महानादरः प्रभाकरमतस्यास्मिन्। “आन्ध्रदेशसमुत्पत्तेः प्राभाकरपरिमः। तत्रापि यजुषीशाखानल्पस्य तपसः फल” मिति। सन्ति च गुरुमते बहवादुरूढाः शास्त्रमात्रगम्याः सम्प्रदाय सिद्धाः पारिभषिक शब्द प्रचुरालोक व्यवहारेषु अनत्युपयोगिनः सिद्धान्त विशेषाः। तथाऽपि सर्वेषां तत्व जिज्ञासूनां येषु प्रसिद्ध प्रमेयेषु कुतूहलातिशयः तेष्वेव सुललितं सुविशदं गुरुमतावगतिः यथास्यात् तथा संक्षेपेण प्रदर्शयितुं यथामति यियतिषे तत्र गुरुमते केचनानन्यसाधरणाश्चमत्कृतिमादधानाः सिद्धान्ताः ॥—

(१) सर्वमपिज्ञानं यथार्थमेव। इदं रजतमित्येषा या शुक्तिशकलेमतिः साऽपि यथार्थैव। तथाहि “सदृशप्रत्ययेनेह संस्कारोद्बोधहेतुता। तदित्युल्लेख रहिता रजतेभवति स्मृतिः”। शुक्तौ रजतस्यात्यन्ता भावात् रजतत्वज्ञानस्य कथं याथार्थ्यमितिचेत् “अत्रब्रूमो य एवार्थो यस्यां संविदिभासते। वेद्यः सएव नान्यद्धि वेद्यावेद्यस्य लक्षणम्”। “इदं रजतमित्यत्र रजतं चावभासते। तदेव तेनवेद्यं स्यान्नतु शुक्ते-रवेदनात्”। “सन्निहित रजतशकले रजतमिति यादृशीभवतिसत्या। भेदानध्यवसायात्, इयमपि तादृक्परिस्फुरति” ॥

(२) गुरुमते प्रमाणानि पञ्च । प्रत्यक्षमनुमानमुपमानंशब्दः अर्थापत्तिश्च । " तत्र पञ्चविधंमानं प्रत्यक्षमनुमातथा । शाब्दं तथोपमानार्थापत्तीरिति गुरोर्मतम्" । "प्रत्यक्षाद्यपरिच्छेद्यमभावाख्यं चतुर्विधा । प्रमेयं साधयन्मानमभावाख्यं वदन्तिये" । "तन्निराकरणार्थोयं यतो भाष्यं कृताकृतः" ॥

(३) शक्तिरितिरिक्तः । सातु न प्रत्यक्षग्राह्या । किंतु अदृष्टस्वलक्षणाकार्यानुमेया । अग्नौच कार्यानुदयदशातु विलक्षणं नकार्योदयसमयप्रत्यक्षदृश्यं समुपलभ्यते । कार्योदयकाले अतीन्द्रियं किञ्चित् रूपमग्नेरनुमीयते । नस्मात्सर्वभावेषु कार्योदयानुकूल्यं कार्योन्नादकानुमानेन कल्पनीयाशक्तिः सा च संस्काराद्भिन्ना । संस्कारो हि नाम नित्येष्वनित्यः अनित्येषु कारणान्तरायत्तः ॥

(४) सादृश्यमपि प्रसिद्धेभ्यः द्रव्यादिभ्यः अतिरिक्त एव पदार्थः । दृष्टगोः पुरुषस्य गवयं तत्सदृशं पश्यतः गोविषयकं गवयसदृशज्ञानं तदुपमानम् । किं पुनरिदं सादृश्यम्? विषयोऽस्य वित्तिसिद्धोऽन्यो द्रव्यादिभावेभ्यः । सर्वत्रवस्तूनि संविदेकशरणानि । संवित्स्वभावसिद्धं सादृश्यं द्रव्यादिभ्योभिन्नं ॥

(५) एवं सङ्ख्यापि अतिरिक्तः पदार्थः ॥

(६) जातिमनङ्गीकुर्वतां नानावादिनां मतानिनिरस्यजातिः स्थापिता । तस्याः स्वरूपन्तु— "जातिराश्रयतोभिन्ना प्रत्यक्षज्ञानगोचरे" ति । एतेन ब्राह्मणत्वादिकं नजातिः सत्ताऽपिनाङ्गीक्रियते ॥

(७) समवायश्चानित्यः । विनष्टायामपि व्यक्तौनजातिरन्यत्र याति । नच तत्राऽवतिष्ठते । नविनश्यति । केवलंयद्व्यक्ति समवायः तस्याः निवर्तते । तेनतस्याऽनुपलम्भनम् ॥

(८) कार्यमनुमानलभ्यम् । अयंगच्छतीति प्रत्ययः संयोगविभागानुमितक्रियाऽलम्बनः । सा च क्रिया स्थाणौनानुमीयते । कर्महेत्वभिमतादेव विभागसंयोगौ उत्पद्येते इति युक्तमेव कर्मानुमानम् ॥

(९) नियोगएववाक्यार्थः । यत्प्रधानतया प्रतिपाद्यते तदेव वाक्यार्थः । कार्यश्च प्रधानतयोच्यत इति तस्यैव वाक्यार्थत्वम् । कार्यं च कृतिसाध्यम् ॥

"तद्धिकालान्तरस्थानात् शक्तं स्वर्गादिसिद्धये ।  
सम्बन्धोप्युपपद्येत नियोज्येनास्यकामिना" ॥  
"कार्यत्वेननियोज्यं च स्वात्मनिप्रेरयन्नसौ ।  
नियोज्य इति मीमांसा निष्णातैरभिधीयते" ॥  
कार्यस्यैव प्रधानत्वाद्वाक्यार्थत्वंच युज्यते ।  
वाक्यं तदेवहिप्राहनियोज्य विषयान्वित" मिति ॥

(१०) अन्विताभिधानवादः—पदानि, अन्वितानि भूत्वा पश्चाद्विशिष्टमर्थं कल्पयन्तीति अन्वयांशेप्यभिधावृत्तिरिति यावत् । गामानयेतिवाक्यश्रवणानन्तरं गोराहरणं पश्यन् क्रियापदार्थान्विते कारके कारकपदस्य कारकपदार्थान्वितायां च क्रियायां क्रियापदस्य शक्तिं बालोऽवधारयति । ततः प्रयोगकाले अन्वितबुद्धिः जायते । अभिधयैवान्वयबोधेवृत्यन्तराश्रयणमनुचितम् ॥

किञ्च प्रभकरमिश्रमतं श्रीमन्मध्वाचार्याणां द्वैतसिद्धान्तमत्यन्तमुपकरोति ॥

(१) द्वैतमतविरोधिनोऽद्वैतमतस्यनिरकरणेन ॥

(२) पञ्चभेद-तारतम्य-जगत्सत्यत्वादि सिद्धान्तानां समुचित भूमिकाऽऽरचनेन पूर्वभावी हि प्रभाकरः ॥

## अद्वैतमतनिरासो यथा—

(क) वाक्यार्थे आगमः प्रमाणमिष्यते । परं तदनेक पदार्थात्मनिवाक्यार्थेधियमुपजनयत् अद्वैतं नावभासयति ॥

(ख) यदुच्यते—"सएषनेतिनेती" ति सर्वोपाधिनिषेधेन वस्त्वन्तरापाकरणात् अद्वैत-सिद्धिरिति । तन्न । यः खल्वेष इति सद्रूपतया प्रत्यवमृष्टः पदार्थः स असत्वापादकेन नञर्थेनसह सम्बद्धुमयोग्यः निषेधवाक्येष्वपि कस्यचित् न आत्यन्तिको निषेधः । "लब्धरूपेकथं किञ्चित् तादृगेव निषिध्यते । विधानमन्तरेणातोननिषेधस्यसम्भवः" इति ॥

(ग) प्रत्यक्षादिविरुद्धार्थत्वात् अद्वैतावबोधक आम्नायः न यथावस्थितोवर्णयितुंन्याय्यः । प्रत्यक्षादेराम्नायबाध्यत्वमित्यपि मनोरथमात्रम् तदा मुख्यार्थपरित्यागेन आम्नाये गौणीलाक्षणिकीवावृत्तिः कल्प्यास्यात् ॥

(घ) वित्तेर्भिन्नस्य अप्रकाशात्मनः प्रकाशएवानुपपन्नः इति यद्यत्प्रकाशते तत्सर्वप्रकाशाद भिन्नम् । प्रकाशात्मकं ब्रह्म । अतोब्रह्मात्मकं जगत् इत्यपि न । नानाभूतानामाकारणां प्रकाशाभेदे प्रकाशस्याऽपि नानाभावापत्तेः ॥

साक्षाद्वैतसिद्धान्त साहाय्यंयथा—

## जीवानांमिथोभेदः तारतम्यंच—

प्रभाकरः परमास्तिकाग्रणीः । देहेन्द्रियाद्यातिरिक्तस्य स्वातन्त्र्येणात्मनः धर्माधर्माधिकरणस्य ज्ञानाश्रयस्य वस्तुसत्ताऽनङ्गीकारएव नास्तिकवादः । बहवो वादिनः आत्मन अस्तित्वमनङ्गीकुर्वाणाः विविधान्दुस्तर्कानुद्भावयन्तः सच्छास्त्रमननिरस्तसकलसंशयानपि मतिविभ्रमं जनयन्तः उज्जृम्भन्तेस्म ॥

(क) केचित् बुद्धिमेवात्मानमैच्छत् ॥

(ख) अन्ये बहिरिन्द्रियाण्येवात्मेत्यवदन् ॥

(ग) अपरे देहातिरिक्तः कश्चन अत्मानास्तीति देह एवात्मेत्यमन्यन्ते ॥

(घ) एके बुद्धीन्द्रियशरीरव्यतिरेकी आत्मानुमानमात्रगोचर इत्याहुः ॥

(ङ) इतरे मानसप्रत्यक्षगम्य आत्मेति प्रत्यपीपदते ॥

(च) परे आत्मा स्वयं प्रकाश इति सप्रमाणं स्थापयामासुः ॥

(छ) केचन चिदेव सकलप्रतिपत्तिसिद्ध आत्मेति अभान्त ॥

(ज) क्षणिक अत्मेति बहवः समाचक्षत ॥

(झ) कूटस्थो नित्यआत्मेति केचित्सिद्धान्तयामासुः ॥

(ञ) केऽपि परमाणु परिमाणः आत्मेतिजगदुः ॥

(ट) कतिचिच्छरीर परिणामः सइत्युपादिशन् ॥

(ठ) अन्ये एक एवात्मा सर्वक्षेत्रेषु अभिन्न इत्यबोधयन् ॥

एवं नानावादिनो मतानि निराकृत्य प्रभाकरः सकलमत ललामायितात्मनः सिद्धन्तं भाष्यकर्तां श्रीशबरस्वामिनांच निजं रहस्यमाविष्कुर्वन् देहेन्द्रियबुध्यादि विलक्षणं स्वातन्त्र्योणात्मनः अस्तित्वञ्च प्रतिपादयामास। तत्सङ्ग्रहश्लोकश्च—"बुद्धीन्द्रियशरीरेभ्योभिन्न आत्माविभुर्ध्रुवः। नानाभूतः प्रति क्षेत्रमर्थवित्तिषु भासते" इति। विहितनिषिद्धाचरणजन्य तत्तदपूर्वद्वारा धर्माधर्मौ स्वर्ग नरक हेतूइति व्यवस्थापितत्वाज्जीवानां तारतम्य भावः सिद्ध एव। यद्यपि प्रभाकरः सर्वतन्त्रस्य परमेश्वरस्य पृथक् सद्भावं नाङ्गीकरोति। तथापि नैतावन्मात्रेण सनास्तिकइति शक्यते वक्तुम्। "वेदैर्वचोभिरखिलैः कृतकीर्तिरत्नेहेतुं विनैव धृतनित्यपरार्थयत्ने। मीमांसयैव भगवत्यमृतांशुमौलौ तस्मिन्मही भुजितयानुमितिर्निर्भेजे"। (नैषधे) इति यद्यपि कृत्स्नस्याति मीमांसा शास्त्रस्य शून्यवादसब्रह्मचरिता व्यञ्जिता श्रीहर्षेण, तथापि उपमेयं आचार्यदण्डिनः "कोलङ्कारोऽनयाविना" इति सिद्धान्तमनुसृत्यातिशयोक्ति मूलैव। नेहं कवेर्वचो परमार्थेन ग्राह्यम्। कुमारिलेन "विशुद्धज्ञानदेहाये" ति यज्ञ—शिव—उभय परपरं मङ्गळं कृतमेव। मुरारिमिश्रमतेतुसेश्वर मीमांसेत्येव प्रसिद्धिः। अधुना प्रभाकरे सिद्धान्ते किं प्रतिपन्नमिति विचारयामः

प्रभाकरः स्वयमेव बृहत्यां "यत्पुनर्ब्राह्मणं 'न प्रेत्यसंज्ञा अस्तीति' तत्पूर्वोत्तर भङ्ग्यास्वयमेव ब्राह्मणान्तरेणव्याख्यातम्" इति प्रतिपादयति ऋजुविमलायामस्य विवरणन्तु—"यत्पुनर्ब्राह्मणं न प्रेत्यसंज्ञा अस्तीति" भूतचैतन्यप्रतिपादकं तत्पूर्वपक्षोत्तर भङ्ग्या स्वयमेव ब्राह्मणान्तरेणव्याख्यातम्। भूत चैतन्यपूर्वपक्षंकृत्वा "अविनाशीवाअरे अयमात्मा" (बृ. ३. ४-५-१४.) इत्यादिना सिद्धान्तितमित्यर्थः एवंच सिद्धेसति आत्मनि अर्थवादार्थताउपपन्नैव। एवं तर्हि अत्मानात्मविवेकः प्रभाकरेण किमिति विस्तरेण न कृतः ?। अस्योत्तरं प्रभाकर मिश्राणां शब्दैरेवदीयते ॥

यदुक्तम्—"अहङ्कारममकारावनात्मन्यात्माभिमानौ" इति मृदितकषायाणामेवैतत् कथनीयम्। नकर्मासङ्गिनामित्युपरम्यते। आहच भगवान्द्वैपायनः—"ननु बुद्धिभेदं जनयेदज्ञानं कर्मसङ्गिनां" इति रहस्याधिकारे। तस्मान्नविवृतमत्रभाष्यकारेण भगवतावचनान्तरानुरोधात् नाज्ञाना" दिति। (बृहती—आत्मावादः) एतत्सम्यक्परिशील्य प्रभाकरं नास्तिक इति कोवा सचेताः ब्रूयात् ? कर्ममीमांसा प्रतिपादनावसरे आत्मानात्मविचारस्य विषयान्तरत्वादेवाकथनम्। नत्वज्ञानात्। दृश्यतेच, वेदान्तसूत्राणां विस्तृतां वृत्तिं विरचयता भगवता बोधायनेन स्वकीयेश्रौतसूत्रेविशिष्टाद्वैत सिद्धान्तस्य लेशतोऽपि प्रतिपादनं न कृतम्। यतु तेनैव कविना श्रीहर्षेण स्वकीये 'खण्डन—खण्ड—खाद्ये'—

"गुरुर्धियमभावस्य स्थानेस्थानेऽभिषिक्तवान्।
प्रसिद्धएवलोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः॥"

इति प्रतिपादितम् । तदपि 'भारतं नाकमण्डलं', 'नगरं विधुमण्डलं' इत्यादाविवरूपकेऽस्मिन् अर्कबन्धुत्व रूपसाधारण धर्मोपस्थितेरवश्यकत्वद्योतनायैवकविसंरम्भ इति प्रतिभाति ॥

अत्रेदमवधेयं—उपमायामिव रूपकेऽपि साधारण धर्मोपस्थितेरवश्यकत्वम् । तत्राऽपि यस्मिन् रूपके साधारणो धर्मः प्रसिद्धया भासते तत्र स्वबोधक श्रुतिं नापेक्षते । यथा मुखं चन्द्र इत्यादिषु । यत्रतु साधारणो धर्मः अप्रसिद्धः तत्र नियमेन स्वबोधकश्रुतिमपेक्षते । "भारतं नाकमण्डल" मित्यत्र सुपर्वालङ्कृतत्वरूपः साधारणो धर्मः श्लेषभित्तिकाभेदाध्यवसितः । भारतपक्षे अष्टादश संख्याक पर्वयुक्तत्वं, स्वर्गपक्षे देवालङ्कृतत्वमिति । "नगरं विधुमण्डल" मित्यत्र सकलकलत्वं साधारणो धर्मः । नगरपक्षे पण्डितालङ्कृतत्वं, चन्द्रपक्षे कलासाकल्यम् । तथैव "बुद्धबन्धुः प्रभाकर" इत्यत्र सूर्यवंशजत्वेन अर्कबन्धुरिति बुद्धस्यनाम । "गौतमश्चार्कबन्धुश्च" । प्रभाकरमिश्रएव प्रभाकरः सूर्यः । अनन्तरं बुद्धप्रभाकरयोरर्कबन्धुत्वरूपः श्लेषभित्तिकाभेदाध्यवसितः चमत्कारकारी साधारणो धर्म इति ॥

किंच प्रभाकरकृतः ईश्वरसद्भावानङ्गीरोनेश्वरद्वेषमूलः । नापिलोकायतानुवादरूपः । अपितु शब्दौत्पत्तिकवादसिध्यै वेदानां चापौरुषेयत्व प्रतिपादनायैव । तथाहि—शब्दस्यार्थेन सम्बन्धः अनादि वृद्ध व्यवहारपरंपरासमासादितः वाच्यवाचकभावः । "बालाः वृद्धानां स्वार्थेन व्यवहार प्रमाणमुपश्रुण्वन्तः शब्दश्रवण समनन्तरभाविना चेष्टाविशेषण विशिष्टार्थविषयां मनीषां कल्पयन्तो वाच्यवाचकानां शब्दस्याध्यवस्यन्ति। तेऽपि वृद्धा यदा बाला आसन् तदातेऽपि, अनयैवदिशा व्युत्पद्यन्तेस्म। येभ्यश्चवृद्धेभ्यः व्युत्पत्तिमलभन्ततेऽप्यन्येभ्यः तेऽप्यन्यभ्यः इति विनाऽपि सङ्केतायितारं पुरुषमुपपद्यत एव शब्दार्थयोरनादि वृद्धव्यवहारदर्शनसिद्धः सम्बन्धः" । एतेन पुरुषसङ्केत निबन्धनाऽऽपेक्षा शब्दानां वाचकत्वस्य नास्तीति स्फुटमेव । ईश्वरसङ्केत निबन्धनमेव वाचकत्वं शब्दानामित्यत्राऽपि नकिंचित् क्षोदक्षमं तत्वम् । "औत्पत्तिकस्तुसम्बन्धः शब्दस्यार्थेन सम्भवः। वृद्धसंव्यवहारस्य प्रवाहानादितायतः" । इति सिद्धान्त विरोधात् । वेदस्य पौरुषेयत्वापाताच्च । सृष्ट्यादावपि न ईश्वरकृतः सङ्केत इति सिद्धान्त प्रक्रिया वेदस्यात्युच्छिन्नामपौरुषेयतां प्रतिपादयन्ती जेजेतीति सर्वमनवद्यम् ॥

## मोक्षः

क्षणिकस्य क्रियानुपपत्या भोक्तृताया अभावेन आत्मनैवहीयते । तस्मात्—"अहं प्रत्यया-लम्बनामात्रसिद्धौ सिद्धेऽपि बुद्धीन्द्रिय शरीर व्यतिरेकिणि आत्मनि तन्नित्यत्वाविनाशित्वादि सिध्यै भोक्तृत्वमपि आत्मन अङ्गीकरणीयम् । सत्तातावदात्मनः सुखोपलम्भेन सिध्यति । भोगो अनुभव संवेदनम् । संवेदनमपि क्रियैव । तस्मादात्मनः कर्तृत्वं भोक्तृत्वंच सङ्गच्छते । कार्यकारणयोरभेदोप-चारात्कर्तृभोक्तृतैवात्मेति । "अशीर्योनहिशीर्यते" इति बृहदारण्योपनिषत्प्रमाणेन अशीर्यतया भोक्तृत्वं कर्तृत्वंचात्मनः सिध्यति । एवं कर्तृत्वदीनां नित्यतायां सिद्धायां बृहतीग्रन्थानुरोधेन मोक्षावस्थाऽऽत्मनः कदापि न सम्भवत्येव ॥

ईशावास्योपनिषद्भाष्ये श्रीमदाचार्यैः-"कुर्वन्नेवेहकर्माणी" ति मन्त्रव्याख्यावासरे-"ज्ञानिनोऽपि यतो—ह्रास आनन्दस्य भवेद्ध्रुवम् । अतोऽलोपिलोपः स्यादतः कार्यैवसालदे" ति प्रतिपादितम् ।

श्रीमज्जयतीर्थपादा अपि भाष्यविवरणे—" अतो — ह्रासोभवेत् —अतोमोक्षप्रच्युतिरूपलेपरहितोऽपि ज्ञानिनि कर्मलेपः स्यादेव । यत एवमुभयोर्लेपः अतोद्वाभ्यामपिसा कृष्णोपास्तिः कार्यैवे " तिस्पष्टी चक्रुः । एतेन बद्धमुक्ताद्यवस्थानिरपेक्षमेवात्मनः कर्तृत्वादीनि नित्यतया प्राप्तानि । तस्मदुभयेऽपिनये कर्तृत्वादीनि साधारण्येनात्मनः समानान्येव । किंचशालिकनाथमिश्रमतेन यदि प्राभाकरे सिद्धान्ते आत्यन्तिक देहोच्छेदो निःशेषधर्माधर्म परिक्षय निबन्धनोमोक्षः' इति वादं निराकुर्वन्नानन्दतीर्थीय सिद्धान्त परंपरया साहाय्यमाचरत्येव ॥

## सत्यंजगत्

शुक्तिकायां रजतत्वज्ञानेयत् भास्वरं रूपं चक्षुषा परिच्छिन्नं नतत् रजतस्मृतेरुद्बोधकम् । स्वप्नादिषु पुनः कस्यचिदग्रह्यात् बाह्यस्यार्थस्य स्मर्यमाणस्य गृह्यमाणस्य च कारणत्वानुपपत्तेः वासनानि बन्धनमेवेदं ज्ञान जालमिति निरालम्बनवादः तं निराकृत्य स्वप्नेऽपि अर्थ एव कारणमिति सिद्धान्तितम् । तथाहि—स्वप्नादिषु बहिरवभासासंवित् , सा च बाह्यार्थमन्तरेण न सम्भवति, तस्मादर्थ एव कारणम् । निरालम्बनतातु नैव संवेद्यते प्रत्यक्षानबोधेन । तस्मादक्षजंज्ञानं न वासना निमित्तमिति । प्रत्ययस्यैवार्थ-शून्यतोप न्यासात् ज्ञानस्यैवाभावइति माध्यमिकदर्शनम् । तदेतदपि निराकृत्य ज्ञानाकारयोः भेदं प्रदर्श्य-निराकारां बुद्धिं साकारं चार्थं संस्थाप्यसर्वस्यापि प्रत्ययस्य अर्थालम्बनत्वं सिद्धान्तयामास प्रभाकरः । एतेन बाह्यस्यार्थजातस्य सत्यत्वं स्वत एव सिध्यति । तेन जगत्सत्यमिति फलति ॥

॥ सर्वसिद्धान्त सङ्ग्रहश्लोकश्च ॥

बन्धमोक्षौसृष्टिलयौ ईश्वरं तत्स्वतन्त्रताम् । जीवानां पारतन्त्र्यञ्च शास्त्रकृन्नैव मन्यते । इति गुरुमतद्वैतमतयोः साधर्म्यवैधर्म्यद्योतकः सङ्ग्रहश्लोकः ॥

मीमांसासु गुरुप्रभाकरमते सत्यं जगत्तत्त्वतः
भिन्ना जीवगणा स्वकर्मवशगाः नीचोच्चभावङ्गताः ।
मुक्तिर्नैव, सुखानुभूतिरमला स्व कर्मतत्साधनं
पञ्चैवाक्षमुखाः प्रमाणमखिलाम्नायैक वेद्यायजिः ॥
तस्माद्ध्येयं प्राभाकरं मतम् ॥

## इतिशम्

# ॥ काणादस्य सर्वशास्त्रोपकारकता ॥

म ॥ शा ॥ म ॥ वे ॥ पडिमन्नूरु नारायणाचार्याः
श्रीन्मध्वसिद्धान्त महापाठशाला, उडुपी



श्रुत्यन्तवेद्यमहिमा कविगेयमहित सुगुणधामा ।
कामं तनोतु कामं कोप्यको लोलगोपालः (गोपिकालोलः) ॥ १ ॥

गुरुवर्यसदयदृष्टिर्स्मृतिमुपयालवतोऽपि जीवहेतुः ।
भिन्तां मलीमसं मे हृदयगतं पुराणमपि सर्वम् ॥ २ ॥

श्रीराघवेन्द्रनामायं पारिजाततरुर्महान् ।
स्मृतो नियुङ्क्तकार्येऽस्मिन्नयोग्यं विकृतेर्वशम् ॥ ३ ॥

यथा वृद्धस्य सुन्दर्यां विकारः मामकस्तथा ।
सन्तः क्षमन्तां चापल्यं क्षमाभूषाहि साधवः ॥ ४ ॥

## विषयसूचनम्

अयिभो महीमण्डलमण्डनायमाना गुणैकपक्षपातिनो दिवं द्युमणिरिव स्वजन्मनाऽवनितलमवभासयन्तः पण्डितप्रकाण्डाः साधवश्च दुराग्रहपिशाचिकादूरा विषयमिमं पात्रीकुरुत नेत्रयोरथवा श्रोत्रयोः । यदत्रसुधामप्यपहसन्तीं वचोभङ्गीमङ्गीकुर्वतां सभ्यानामन्तर्वाणिशिखामणीनां पुरतः कानाम कथा मुक्ताफलमध्यगतकाचसदृक्षाया अदसीयवचोभङ्ग्याः । ममेदंनाम अतिसाहसमिति भवन्तोऽपि जानीयुरेव, तथापि "नहिकोकिलाः कूजन्तीति काका मूकीभवेयु" रिति न्यायमनुसृत्य किमप्यहमिदानीं वक्तुं कर्तुंवा उद्युक्तोऽस्मि । क्षन्तव्योऽयं जनोमहद्भिः । सभ्यैराज्ञप्तायसीयलेखनीविषयस्तु "काणदस्य शास्त्रस्य सर्वशास्त्रोपकारकता" ॥

## भूमिका

अत्राप्रस्तुतमपि "विवक्षितंह्यनुक्तमनुतापंजनयति" इति संख्यावतां समयमनुरुध्य किमप्याहमिदानीं प्रस्तौमि । अयिमहाशयधौरेयाः।मनसापि दुरवगाहा नन्वियं भगवतः सृष्टिः। क्रियासमभिहारं भ्रमन्नपि भुवं तत्र तत्र निपुणतरं विनिक्षिपन्नपिचक्षुः कोवा करतलामलकवत्सकलधरातलगताशेष वस्तुपारदृश्वा समजायत । यत्खलु सम्यग्विमृशद्भिरपि नलेशतोऽप्यश्रावि । तदेव कदाचिद्दैवाच्छ्रवणपथमुपयातम् । स्वस्यातिपुराणतां महत्त्वाञ्चप्रकश्यदानन्दतुन्दिलमानसं विधत्ते श्रोतारम् । यच्च ससाहसं धरातलपर्यटनव्यसनिना नालोकि, तदेव यर्हि दैवाच्चक्षुमथमवतरेत्तदा पुनरनिर्वचनीयामानन्द सन्तति मङ्कुरयति । अत एव परिमितनियतविषयकमस्मदीयं चक्षुः, श्रवणं वा । अत ईदृश नियतमितदर्शी कथमेकमपि सर्वांशेन द्रष्टुं श्रोतुंवा शक्नुयात् । अत एवोक्तम् "नैकञ्चतत्वतोज्ञातुं विनासर्वज्ञतां नरः"

इत्यादि । इयञ्चभूर्बहुविस्तृता बहुरत्नाच अत एव पृथ्वी, रत्नगर्भाचेत्यस्याः प्रसिद्धिः । आस्तान्नामैयंकथा दूरवर्तिनाम् । समीपतरवर्तिनां दृष्टिपथमागतानामपि बहुशः साकल्येन दर्शने नप्रभवामः । उपरिचरन्तोऽपि पादतलगतमपिनिधिं द्रष्टुं नपारयामः । साक्षात्कृता अप्यर्था नविमृश्यन्ते । विमृष्टा अपि नावध्रियन्ते । ईदृशेऽन्धेतमसि मग्ना वयं किं पश्यामः । किंशृणुमः, किं किं जानीमः, किं ब्रूमः, किंविचारयामः, के वयम्? किमारम्भाः ? किं प्रेयः ? किं श्रेयः ? किमुपकारकम् ? किमुपकार्यम् ? किं निर्णेयम् ? किं निर्णायकम् ? इत्यादिचिरं विमृशन्तोऽपि न वयं तत्वमत्र निर्णेतुं प्रभवामः । सतिचैवं कस्यचिच्छास्त्रस्य सर्वशास्त्रोपकारकतां कथं प्रतिजानीमः । कथं वा प्रतिपादयामः । अहो ! पण्डितं मन्यानामस्माकं सीमातिगाऽज्ञता । यदस्माभिरश्रुता अपि पुरातनाः कियन्तो महर्षयः स्वचङ्क्रमणेन भुवमलङ्कृत्यापि नामशेषतां नागताः । कियन्तिवा शास्त्राणि स्वयशोविशोभितदशदिशामुखानि साकल्येनास्माभिरदृष्टश्रुतपूर्वाण्यपि भुवं न मण्डयंति । सतिचैवं सामस्त्येनास्मद्दृष्टिपथं किं बहुना ! श्रवणगोचरतामप्यनासादितवतां शास्त्राणां मध्ये एकमुपकारक मितराण्युपकार्याणीति विचारणे प्रवृत्तिर्नामातीव हास्यास्पदमिति नैतत्तिरोहितं वस्तुतत्वमनवजानतां जानताम् । यद्यप्येवं वस्तुस्थितिः, अथाप्यज्ञानाद्वा, चापलाद्वा, प्रकृत्यावा, "नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः । भ्रामयन् सर्वभूतानि यन्त्रारूढानिमायया," इति गीतायां भगवदुक्तरीत्या प्रकृत्यैववाप्रेरितः "नभः पतंत्यात्मसमं पतत्रिणः" इति व्यासोक्तिमनुसरन् प्रकृतमनुसरामि ॥

## शब्दस्य सर्वोपकारकता

ऐश्वरीसृष्टिस्तावद्द्विधा नामरूपभेदेन । शास्त्रमपिद्विविधं शब्दशास्त्रार्थशास्त्रभेदेन । तत्र जगति यावन्ति शास्त्राणि, यावन्तो व्यवहारा वैदिका लौकिकाश्च ते सर्वे भाषामया एवेति शब्दस्यैव प्राधान्यम् । भाषात्र शब्दश्चेत्यनर्थान्तरम् तदुक्तमाचार्यदण्डिना "इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं नदीप्यते, इति भाषा चेयं नकेवलं लिङ्गतः स्त्री, किन्तु सर्वात्मनाऽपि स्त्रियमनुकरोति । तथाहि युवतिः कामुकयुववृन्दस्य तैस्तैर्हावभावादिभिः स्वीयैः सुमसुमनोहरैर्विलसितैः सम्मोदितान्तःकरणवतां तदेकरसताञ्चापाद्य जनयति प्रमोदातिशयम् । एवं भाषापि स्वगतांस्तांस्तांश्चमत्कारान‌नुभावयन्ती जनयन्तीचानन्दभरमग्नं विगलितवेद्यान्तरं रसिकजनमुन्मत्तमिव पिशाचिकाग्रस्तमिव जडीभूतमिव चित्रलिखितमिव करोतीत्युक्तमपि नातिशयोक्तिकोटिमाटीकते। पुनरितोऽपि सावधानं चक्षुर्निक्षिप्यतां यथा मस्तकाशिनी अनितरसाधारणसौन्दर्यसमुद्भासितापि नवनवालङ्कारालङ्कृतापि विना शरीरसंस्कारं लेशतोऽपि नप्रभवति दयितस्य मनो वशीकर्तुम् । एवमेव भाषापि नानाविधोपमाद्यलङ्कारमण्डितापि शृङ्गारादिभिर्नवरसैरूपशोभितापि विना व्याकरणसंस्कारं न शक्नोत्याक्रष्टुं मनः प्राज्ञानाम् । प्रत्युत यथाग्राम्यपददूषिता असंस्कृतादयिता निवर्तयत्यैवात्मनः सकाशाद्रसिकान् एवं व्याकरणशास्त्रासंस्कृता भाषापि अपशब्दपददूषिता पापभीरुभिः प्राज्ञैर्दूरतएव परिह्रियत इति सार्वजनीनम् । अस्तिचापशब्दप्रयोगे पापम् । तस्य "तस्माद्ब्राह्मणेन नम्लेच्छितवै नापभाषितवै, म्लेच्छोहवा एष यदपशब्दः, इति श्रुत्या निषिद्धत्वात् असंस्कृताया हेयत्वमिव संस्कृताया भाषाया उपादेयत्वञ्चैहिकामुष्मिकसुखसाधनत्वात्संस्कृतयुवतेरिवयुक्तम् । भाषायाः संस्कृतायाः सुखदत्वञ्च "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गेलोके कामधुग्भवतीति" फणिभाष्योक्त्या सिध्यति । एवञ्च शब्दमयसर्वशास्त्रस्य संस्कारकत्वेन व्याकरणस्योपकारकता । इतीममेवार्थं मनसिनिधाय "काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्" इत्यभियुक्ताः समाचक्षते । अये ! किमिदमाचरितं भवता "यद्विनायकं प्रकुर्वाणो रचयामास-

वानरम्" इतिन्यायविषयतामापन्नोऽसि । यतः काणादस्य सर्वशास्त्रोपकारकताविषयप्रतिपादनाय समुद्युक्तो भवान् किमिति तद्विरुद्धमकार्षीरिति केनचित्पृष्टः किमङ्गब्रूयाः ! सत्यं, मात्वरस्व, माकार्षीरकाण्डताण्डवायितम् । निराकरिष्यामो भावत्कीमिमांशङ्कापिशाचिकीम् । निरीक्ष्यतां सावधानम् । पुरस्तात्किमिमेवक्ष्यन्तीति ॥

## प्रकृतविषय समर्थनम्

एवं सिद्धेचैकस्योपकारकत्वेऽपरस्यापि तत्सेत्स्यति पारस्परिकोपकार्योपकारकभावएव नास्तीति चोदनायां विप्रतिपन्नमंशं विहाय यत्र क्वचिन्मनोऽवधानाय सोऽस्तीति प्रादर्शि । एकत्रोपकारकत्वेसिद्धेऽपरत्रापि तत्सुबोधं भवतीति मनीषयाऽप्रसक्तमपि "काणादं पाणिनीयञ्चेति कारिकायामेकपङ्क्तिप्रविष्टतया सङ्गतं दृष्टान्ततया न्यरूपि एवं । तर्कशास्त्रमितरशास्त्रोपकारकमिति ॥

## अर्थशास्त्रस्य शब्दशास्त्रात्प्राधान्यम्

अत्रसूक्ष्मेक्षिकामश्रित्य विचारणायामनयैव कारिकयाऽपरोविशेषो ध्वन्यते यच्छब्दशास्त्रादर्थशास्त्रस्यप्राधान्यम् । यतोहि शब्दसुन्दर्या जीवितसर्वस्वमर्थजातं तदभावेकुणपभूतैव सा द्रष्टॄणाममाङ्गल्यकरी दूरतएवपरित्यज्यते भावुकैः । त्रिलोकीतिलकायमानस्य तिलकस्य फालदेशादपसरणे का वा सुन्दरी समाकर्षति मनः सहृदयानामिति भवन्त एव विचारयन्तु । कविकुलतिलकः कालिदासोऽप्यमुमर्थमभिप्रेति "वागर्थाविवसम्पृक्तौ वागर्थप्रतिपत्तये । जगतःपितरौ वन्दे पार्वती परमेश्वरौ, इति प्रधानेश्वरस्यार्थसदृशतामप्रधानदेव्याः शब्दसादृश्यमुपवर्णयन् अर्थस्यप्राधान्यं शब्दस्याप्राधान्यंध्वनयति । अत एव "काणादं पाणिनीयञ्च" ति पाणिनीयाशब्दाशास्त्रादर्थशास्त्रस्य प्राथम्यापदेशेन प्रथमप्रयोगनिमित्तं प्राधान्यं सूचितवानिति तदेतत्कारिकाकृतोऽल्पाक्षरेण बह्वर्थ प्रतिपादन कौशलमभिनन्दामः ॥

## काणादस्य सर्वशास्त्रोपकारकता

एवमर्थशास्त्रस्य प्राधान्ये सिद्धे काणादस्य सर्वशास्त्रोपकारकता सूपपाद्य भवति । तथाहि–तत्र तावच्चतुर्दशविद्यास्थानानि प्रमितानि । यथोक्तम् "पुराणतर्कमीमांसा धर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानिविद्यानां धर्मस्यच चतुर्दशेति" अन्यत्राप्युक्तम् "अङ्गानिवेदाश्चत्वारो मीमांसान्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश" इति, अत्रोभयत्रापि तर्क न्यायविस्तरपदाभ्यां न्यायशास्त्रमेवगृहीतम् । न्यायस्तर्कोऽनुमानं सोऽस्मिन्नेवशास्त्रेव्युत्पाद्यतइति । बौद्धादि शास्त्राणां हैतुकत्वप्रसिध्या तर्कशास्त्रत्वेऽपि, तत्तर्कस्य वेदादिविरुद्धत्वान्नतेषां वेदादिविद्यास्थानमध्ये सहपाठो युक्तः । अतइदमेव न्यायशास्त्रं विद्यास्थनत्वेन परिगणितं पुरुषार्थसाधनज्ञानोपायत्वेन तर्कशास्त्रस्यान्वीक्षिकीति प्रसिद्धिश्चास्यैवग्राह्यतां दर्शयति । प्रत्यक्षागमावनुसृत्येक्षणं हि अन्वीक्षा अनुमानमित्यर्थः । तद्व्युत्पादकं शास्त्रमान्वीक्षिक । बौद्धादिशास्त्रमागमाद्यननुसारित्वान्नान्वीक्षिकीतीदमेव तर्कशास्त्रं विद्यास्थानत्वेन परिगणितमित्यतोऽपि ज्ञायते । तत्र वेदपुराणधर्मशास्त्राणां पुरुषार्थसाधनोपदेशस्वभावत्वाद्विद्यास्थानम् । अङ्गानि व्याकरण, ज्योतिः, शिक्षा, कल्प, च्छन्दो, निरुक्तानि वेदार्थोपयोगि पदादिव्युत्पादनद्वारेण विद्यास्थानत्वं प्रतिपद्यन्ते । तेष्वङ्ग संज्ञेव तदनुगामितां प्रकटयति । विचारमन्तरेणाव्यवस्थितवेदवाक्यार्थस्यानवधारणान्मीमांसा वेदवाक्यार्थ विचारात्मिका वेदेतिकर्तव्यतारूपं बिभर्तीति विद्यास्थानंभवति । तदाहुर्भट्ट-

पादाः "धर्मेप्रमीयमाणेतु वेदेनकरणात्मना। इति कर्तव्यता भागं मीमांसापूरयिष्यति" इति यागेति-कर्तव्यताया यागैकदेशत्ववत् मीमांसा वेदैकदेशत्वात्तदङ्गमिति पृथक् नपरिगणितम्। विचारसहायो हि शब्दः स्वार्थप्रतिपादनक्षमः। सर्वासां विद्यानामर्थावधारण, प्रामाण्यसमर्थन विप्रतिपत्तिनिरसनोपकारि युक्तिजालदर्शकमिदं तर्कशास्त्रम्। सर्वासांमूलस्तम्भायमानमुपकारकमिति जगति जेगीयते। यदभावे प्रामाण्यार्थ निश्चयाद्यभावात्तत्तदुक्तमपि बहुवित्तव्ययायाससाध्यं नाद्रीयेरन् साधवइत्येवं वेदादौस्वामिनि ग्लानिमापन्ने तदनुयायिनाङ्गजातेन मीमांसादिनाच परिजनेनस्थितेन, गतेन किं कृत्यामिवाति। तदा प्रामाण्यादि व्यवस्थापकं सर्वोपकारकमिदमेव तर्कशास्त्रमितीदमभिहितम् "काणादं सर्वशास्त्रोपकारक" मिति॥

## रीत्यन्तरेण सर्वशास्त्रोपकारकत्वसमर्थनम्

अपिच अनधिगतन्यायशास्त्रगन्धो हीतरशास्त्राण्यधीत्यापि पठनव्याख्यानादिदशायां तूलपिण्ड-वदर्थान् विशदयितुं प्रकटयितुं वा न शक्नोति नापिस्वावगत बोधने प्रभवति, ज्ञोन्तस्य ज्ञोन्तएवार्थ इति मुखपठितमेवानुवदतिप्रायः। इतितदधीतं शास्त्रं मूकभक्षित शर्करायितं भवतीत्यतोऽपि सर्वशास्त्रोप-कारकता तर्कशास्त्रस्य॥

## प्रकारान्तरेण तत्समर्थनम्

किंच यथा भगवतो देवदेवस्य वरदराजस्य नामैव वच्छितदातृतां कथयतीति केनचित्सहृदये नाभिहितम् "नामैवते वरद वाञ्छितदातृभावम्। इति तथैव काणादमिति शास्त्रनामाप्यस्य सर्वोप-कारकतां प्रकटयति। तथाहि काणमन्धमत्तीति काणादमित्यन्धभक्षकत्वं शास्त्रस्यास्य कण्ठतः प्रतीयते अन्धे श्रूयमाणं भक्षणकर्मत्वं विशिष्टेविधीयमानौ विधिनिषेधौ सति विशेष्येबाधे विशेषणमुपसङ्क्रामत" इति न्यायेनान्ध्येऽन्वेति। तथाचान्ध्यनिवर्तकत्वमस्यशास्त्रस्योक्तं स्यात्। यद्यपि सर्वाणि शास्त्राणि जगदान्ध्यानिवृत्तये प्रवृत्तानि तथापि नतेषामेतन्नाम्नाप्रसिद्धिः। तत्रनिमित्तमिदमेववक्तव्यम्। यदितर-शास्त्रेण भवन्त्यान्ध्यनिवृत्तिरेतदुपकारेणैवेत्यकामेनाप्यङ्गीकार्यं भवति। अतोऽसाधारण्यादस्यैव काणाद-मिति नाम तत्र काणादमितिपदप्रवृत्तेर्निमित्तान्तरसत्वेऽपि प्रकृतोपयोगित्वादविरुद्धमिदमपि निमित्त-मस्माभिरहितम्। लक्षणस्य लक्षणान्तरवन्निमितस्यनिमित्तान्तरं नदोषायेति सन्तोष्टव्यं सुधीभिः॥

## गौतमीयत्वेनशास्त्राऽग्रहणेनिमित्तम्

काणादाक्षपादमतयोर्मूलतः क्वचिंदशेभेदेऽपि सर्वाधीयमानान्मण्यादिनवनवग्रन्थावतारात्परं तयोरेकतासम्पादितेति मयाप्येकत्वेनपरिगृहीतं तर्कशास्त्रम्—अथापि "अणुरपिविशेषेध्यवसायकरः" इति न्यायेन काणादमितिविशेषनाम अक्षपाद शास्त्रस्यनास्तीति एकमपिमतिशेषमाश्रित्य "गौतमीयं

पाणिनीय" मित्यनुक्त्वा काणादं पाणिनीयञ्चेत्येवाभिहितमिति सर्वं समञ्जसम् ।—*

गुरुवर्य पदद्वन्द्वैकृतिरेषासमर्पिता ।
नारायणेन विदुषागुरुस्तुष्टस्ततोभवेत् ॥ १ ॥
नाहं शेषगवीषु जागरमतिर्नन्यायचातुर्यवाः
नाम्नायस्मृतिलोडनेच निशिताप्रज्ञानवैयासिके ।
किन्तु श्रीमदनन्तसन्ततकृपासन्तानसम्पूरिता
वाणीयं जयतात्प्रसन्नहृदये या कापि विद्वन्नृणाम् ॥ २ ॥

* मध्वसिद्धान्तबद्धादरोहमत्र प्रकृतासङ्गतमप्यास्तिककामुकोह्यकार्यमेवेदमिति मत्वाप्यकृत्वा स्थातुं नोत्सहते इति सुधायांटीकाकृदुक्तरीत्या अनुक्त्वा स्थातुं नोत्सहे । यत्प्रस्थानभेदेऽपि सर्वेषु शास्त्रेषु न्यूनाधिकभावेन सर्वविषयनिरूपणसत्त्वेऽपि मुख्यतः साकल्येन प्रमाणनिरूपकं तर्कशास्त्रं प्रमाणशास्त्रं इतरत्तु प्रमेयशास्त्रमित्यङ्गीकुर्मः । अथाप्येतावत्पर्यन्तं निरूपितं नतत् किन्तु ब्रह्मतर्केति प्रसिद्धं प्रमाणभूतं तर्कशास्त्रमेव प्रकृतं त्वप्रमाणम् । ब्रह्मसूत्रेषु निषिद्धत्वात् । तथापि काणादमिति कारिकानुसारेण लौकिकप्रसिद्धिमनुरुध्येदमभिहितम् । ममत्वेवंवदतः भाट्टदीपिकायां खण्डदेवोक्तवत् हरिस्मरणमेव शरणम् । यद्यप्येवं तथापि वक्ष्यमाणानुसारेणेनेयमनुपपत्तिः सङ्गतञ्च भवति । तथाहि वस्तुतस्तु ब्रह्मतर्काख्यं शास्त्रमेव "काणादं पाणिनीयञ्च" ति कारिकायां काणादपदेन विवक्षितमिति युक्तमुत्पश्यामः । तत्राऽन्ध्यानिवर्तकत्वेन तत्पदप्रवृत्तेः । प्रमाणबोधकशास्त्रत्वेन इतरेषां प्रामाणद्वावुपजीव्यत्वेनास्य, सर्वोपकारकत्वस्यच सूपपादत्वात् । ब्रह्मसूत्रानुकूलतया सर्वोपादेयताच ब्रह्मतर्कस्यैव सम्भवति पूर्वोक्तकाणाद शास्त्रस्य निषिद्धत्वेनाप्रमाणतया प्रमाणभूतसर्वशास्त्रोपकारकता प्रयत्नशतेनापि दुरुपपादा । ब्रह्मतर्कस्यतु प्रमाणमूर्धन्यस्यच सर्वोपकारकत्वं नकेवलं पूर्वोक्तहेतुभिः सूपपादम् किन्तु "रत्नं हेम्नासमागतमितिच स्यात् । नवनवार्थानुसरणकुतुकाः सहृदया इदमियं नवप्रवृत्त्यनुसरणं नवार्थंवा समुत्सार्यमात्सर्यं दुराग हवा विमृशन्त्विति ललाटतटचुम्बदञ्जलिपुटं प्रार्थयामः इति सर्वं चतुरस्रम् । श्रीः ॥

श्री

# ॥ व्याकरणस्य द्वैतवेदान्तानुकलता ॥

व्याकरण विद्वांसः पूर्णप्रज्ञाचार्याः गजेन्द्रगडकर
आस्थान विद्वांसः ग्वालियर संस्थानम्



हन्त भोः श्रीमद्द्वैतसिद्धान्तप्रतिष्ठापनाचार्याणां परमहंस परिव्राजकाचार्येत्याद्यमन्द बिरुदबृंद भूषणायमानसुमङ्गलविग्रहाणां श्रीमज्जगद्गुरुराघवेन्द्रयतिवर्यमठीयदिग्विजयसिंहासनाधिष्ठितानां १०८ श्रीसुयमीन्द्रतीर्थपूज्यचरणानां द्वादश संवत्सरीय वेदान्त साम्राज्याभिषेकशोभनावसरे वयमपि सच्छास्त्रसेवया विमलस्वान्ता भूयास्मेत्यभिसन्धाय श्रीमन्मूलराम प्रेरणया किंचित्साहसं कर्तुमनसः प्रथमं सद्गुरुचरणेषु क्षमामाशास्महे ॥

तच्च साहसं किमिति जिज्ञासायाममुष्मिन्वेदान्त साम्राज्याभिषेकावसरेऽन्यः कश्चिद्विचारोऽनवसर दूषणाक्रान्तो भवेदित्यपहायान्यविषयमीश्वरजीवयोः सेव्यसेवकभाव जीवातुस्सकल श्रुत्यादि प्रामाण्या कलितो द्वैतराद्धान्त एवावसरानुरूप इति तमनुरुध्यैव किंचित्प्रतिपिपादयिषुभिरस्माभिः स्वकुलपरंपरा-गत पाणिनीय शास्त्रस्यापि तदनुकूलतामधिगम्य तदाविष्करणरूपः सेवाकुसुमाञ्जलिः श्रीचरणेषु समर्प्यत इत्येतावदेव नान्यदित्येव गच्छन्तु तत्र भवन्तो विद्वद्धुरीणाः ॥

आदौ तावन्नारायणः श्रीब्रह्मरुद्रादि सकलजीवेभ्योऽन्यस्तदुत्तमश्च । "एको नारायण असीन्न ब्रह्मा नेशान" इति नारायणाथर्वशीर्षश्रुतेः । "शिव विरिंचिनुतं शरण्यम्" इति भागवताच्च । "नतत्समश्चाभ्यधिकश्च दृश्यः" इति श्रुतेश्च । "नत्वत्समोस्त्यभ्यधिकः कुतोन्य" इति भारताच्च । एवमेव "परमेश्वरो जीवाद्भिन्नः तं प्रति सेव्यत्वात् योयंप्रतिसेव्यस्स तस्माद्भिन्नो यथा भृत्याद्राजा" इत्यनु-मानमपि जीवब्रह्मणोर्भेदे तदुत्तमत्वेच साधकमिति तत्र तत्र विद्वत्प्रकाण्डैराविष्कृतमेव । अयञ्च भेदो न यथा कथंचित्किन्तु पारमार्थिक एव । मोक्षेप्यनुवृत्तेः । "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति श्रुतेः । "निरंजनं परमं साम्यमुपैति" इति श्रुतेश्च । जीवाअपि परस्परं पारमार्थिक भेदवन्तः । आनन्दतारतम्यश्रुतेः । "वृद्धिह्रास भाक्त्वमन्तर्भावात्" इति ब्रह्मसूत्राच्चेति न खल्वनास्वादितरस-मेतद्भगवत्सेवाभिरतस्वान्तानामित्यलं भानोर्दीपसमर्पणमनुकुर्वाणेन यथा ॥

प्रकृतमनुसरामः पाणिनीयतन्त्रस्यैतद्द्वैतपरताऽस्ति नवेतिचिरतरं विचारपारावारमहगाह मानानामस्मत्त्रिपथगाचार्याणामेतद्विषया उक्तयस्तत्प्रणीतेभ्यो ग्रंथेभ्य उद्धृत्याधस्तात्संग्रथ्नीमः येन तच्छास्त्रस्य द्वैतपरत्वमवधारित मंजसा भवेत् ॥

अथ श्रीमन्मध्वमुनीन्द्रोपज्ञ महानिबन्धेषु मुर्द्धाभिषिक्तो द्वैतसिद्धान्तः शब्दशास्त्रकर्तृणामपि मान्यतामावहतीति मान्याः । यद्यपि शब्दसाधुत्वा साधुत्वनिर्णायकेऽस्मिञ्शास्त्रे कंठरवेणतस्याचार्यैर्मान्यता नाभाणि तथापि सूक्ष्मेक्षिकया विचार्यमाणे शब्दशास्त्रस्य द्वैतपरत्वमेव नाद्वैतपरत्वमित्यवसीयते ॥

तथा हि यस्य यदुपादानिकोत्पत्तिः यस्मिंश्च लयः सस एव स्वर्णकुंडलोयरिव रज्जुसर्पयोरिव वेत्यनया युक्त्याऽभेदः साधनीयः। स तु भगवता महाभाष्यकारेण पस्पशायां व्याकरणाध्ययन प्रयोजन प्रस्तावे तस्यमुक्तिफलकतामाविष्कुर्वता "महता देवेन नःसाम्यं यथास्यादित्यध्येयं व्याकरणम्" इत्यनेन ग्रंथेन मुक्तावपि परमात्मना जीवानां साम्यं वदतानिराकृतः। अभेदस्याभिमतत्वे "अहमेव महादेवो यथास्याम्" इत्येव वदेत्। मुक्तावपि जीवानां ब्रह्मणि लयो नास्ति किन्तु साम्यमात्र मित्याशयकेन महाभाष्येणास्मदभिप्रतं पारमार्थिकद्वैतमेव शिरोभूषणता मापादितमिति स्पष्टमेव तद्विदाम्। किञ्च कृत्स्नप्रपञ्चस्य परोक्ता ब्रह्मोपादानकताऽपि नोररीक्रियतेभाष्यकारैः "जनिकर्तुः प्रकृतिः" इति सूत्रे हि "ध्रुवमपाय" इत्यनेनापादानत्वसिद्धिमाश्रित्य तस्य भाष्ये प्रत्याख्यानात्। तथा च भाष्यं जनिकर्तुः प्रकृतिः। अयमपियोग शक्योऽवक्तुं कथं गोमयाद्वृश्चिको जायते गोजाविलोमभ्यां दूर्वाजायन्त इति अपक्रामंति तास्तेभ्यः यद्यपक्रामंति किं नात्यन्तायापक्रामंति सन्ततत्वात् इति, अयमाशयः तेभ्यः उपादानभूत लोमाद्यवयवावशिष्ट भूतान्य लोमावयवेभ्यः ताः दूर्वा अपक्रामंति निस्सरन्तीति अनुपादानभूतावशिष्टावयवानामेवापाये ध्रुवत्वात्सिद्धं ध्रुवमपाय इत्यपादानत्वं स्फुटीकरिष्यते चेदमनुपदम्॥

स्वन्मते "यतोवाइमानि भूतानिजायन्त" इत्यत्र उपादानभूत ब्रह्मणो यच्छब्दार्थस्यापादानत्वाय सूत्रस्यावश्यकत्वेन प्रत्याख्यानासङ्गति ध्रुवमपाय इत्यपादानत्वंतु असम्भवति। उपादानस्य ब्रह्मणोऽपाये ध्रुवत्वाभावात्। ममतु जगदुपादानभूतं यत्प्रधानं तत्संसृष्टस्य ब्रह्मणोऽपायावधित्वरूप ध्रुवत्व सत्वान्नासङ्गतिः। प्रकृतधात्वर्थ गत्यनाविष्टत्वेसति तज्जन्य विभागाश्रयत्वं हि ध्रुवत्वम्। तदुक्तं हरिणा— "अपाये यदुदासीनं चलं वा यदिवाचलं। ध्रुवमेवातदावेशात्तदपादानमिष्यते"॥ १॥ इति अतदावेशादित्यस्य प्रकृतधात्वर्थगत्यनावेशादित्यर्थः। ब्रह्मण उपादानत्वेहि प्रकृतजनधात्वर्थ व्यापारानाविष्टत्वं कथं भवेदिति सुधीभिरेवाकलनीयम्। प्रधानस्योपादानत्वेहि तस्य प्रकृतधात्वर्थ व्यापाराविष्टत्वेपि ब्रह्मण अनाविष्टत्वान्नदोषः। "अजाविलोमभ्यां दूर्वाजायन्त" इत्यादावप्युपादान भूता वयवान्तर संसृष्टस्यावशिष्ट भागस्यापायावधित्वमुपपादितमेव। अवशिष्टावयवे विशिष्टवाचकशब्द व्यवहारस्त्ववशिष्टावयवानां बाहुल्यादेकदेशाविकृतमनन्यवद्भवतीति न्यायेन "पटावयवे दग्धे पटो दग्ध" इति न्यायेनवोपपाद्यां प्रत्याख्यान भाष्य बलादारम्भपक्षेपि जनिकर्तुः प्रकृतिरिति शास्त्रघटकप्रकृति शब्दोनोपादानवाची किन्तु लक्षणयोपादानसंसृष्ट बोधक इत्येव सूत्रकाराभिप्रतमित्यवश्यमभ्युपेयम्। अत एव पुत्रात्प्रमोदोजायत इत्यत्रा पादानत्वसिद्धिः। किंचोपादानत्वापादानत्वयोर्विरुद्धत्वादपि प्रकृतिशब्दस्योपादानवाचकत्वं स्वीकृत्यापादानसंज्ञा तस्य कर्तुमशक्या। तथाहि उपादीयते कार्यमनेन स्वरूपतया स्वीक्रियत इत्युपादानम्। अपादानंत्वपादीयते परित्यज्यतेऽनेनेति कथमुभयोर्विरोधः परिहर्तुं शक्यःस्यात्। स्पष्टं चेदं प्रकृत्यधिकरणे सुधायाम्। एवं च विरुद्ध धर्मयोरुपादानत्वापादानत्वयोरनुशासनसहस्रेणापि सामानाधिकरण्यं दुर्वचम्। यदि च तथैव शास्त्रकाराणामाग्रह इति ब्रूध्वे इत्थमप्याचार्यः संज्ञासंज्ञिभाव मुपमृद्य "आदेशः स्थानिवद्भवति" इतिवदुपादान मपादानवद्भवतीति वदेदित्यास्तां तावत्॥

यत्तु उपादानकारणे समवेततयोत्पद्यमानस्य ततोपक्रमणा संभवेन भाष्या सङ्गतिं मनसि निधाय तत्सङ्गमनाय "लोकप्रसिद्ध्याश्रयेणैतदुच्यते लोकेहि यद्यस्माज्जायते तत्ततो निर्गच्छतीत्युच्यत" इति प्रदीपे उक्तम्। यच्च "यथावृक्षजन्ये फले वृक्षादपक्रान्तत्व व्यवहार" इत्युद्योते तद्याख्यातं तत्तु क्लिष्टं व्यर्थं च। न च गोजाविलोमभ्यामित्यत्रोक्त दिशा "यतोवा इमानि" इत्यत्रापि उपादानभूत ब्रह्मभागाद

षशिष्टस्य ब्रह्मभागस्यापायावधित्वेनापादानत्वात्सुवचं ब्रह्मणो जगदुपादानत्वमिति वाच्यम् । परब्रह्मणस्सदैकरूपत्वनिर्विकारत्वयोः श्रुति सिद्धत्वेन तथा वक्तुमशक्यत्वात् ॥

अपिच कारकाधिकारीय संज्ञाशास्त्रैस्तत्तच्छक्तिमत्ता बोधनमपि नाविद्यमानायास्तस्या विधानं किन्तु शाब्द बोध कुक्षि प्रवेशाय सत्या एवाविष्करणमिति नकथमप्युपादानस्यापादानत्वसाधने प्रत्याशा। एतेन सूत्रस्थ प्रकृति शब्दस्योपादानपरत्वं स्वीकृत्योपादानस्यापादान संज्ञां वदन्तो नागेश कैयटादय उपेक्ष्याः ॥

अपि च पुत्रात्प्रमोदोजायत इत्यत्र उपादान त्वारोपेणापादानत्वमिति शेखरे उक्तं तद्ग्रंथस्यापि प्रकृति शब्दीय लक्षणायामेव पर्यवसानं इति ब्रूमः । शक्यतावच्छेदकारोप एव लक्षणेति शेखरस्य तत्र तत्र जयदुदुभिः गङ्गायां घोष इत्यत्रापि तीरे गङ्गाशब्दस्य शक्यतावच्छेकं गङ्गात्वमारोप्य गङ्गाशब्दः प्रयुज्यत इति हि तदुक्तिः । तथा प्रकृते पुत्रे प्रमोदोपादानभूत ममत्व संसृष्टे प्रकृतित्वमारोप्य तत्सूत्र प्रवृत्तिरित्यस्मदाचार्यैः क्षुण्णो मार्ग एव तस्य शरणमित्यलं पल्लवितेन ॥

तस्मान्नारायणः सर्वतन्त्रस्वतन्त्रो श्रीब्रह्मरुद्रादि सेव्यो निर्विकारः सदैकरूपः सर्वोत्तमः सर्वान्तर्यामी सर्वनियामकः पूर्ण सच्चिदानन्दरूपः तस्य प्रसादमृतेन मोक्षः न च ज्ञानंविनाऽत्यर्थं प्रसादः तदर्थमाब्रह्मस्तंबपर्यतमसारं चाप्यनित्यकं विज्ञाय जातवैराग्यो नवविधसाधनभक्तिमान् प्रेमरूपसाध्यभक्तिमांश्च श्रवणं मननं ध्यानञ्च कुर्यात् तेन प्रसन्नः श्रीनारायणस्तत्तद्भक्तयोग्यं स्वरूपमाविष्कृत्यतं तमुद्धरति भक्त्यात्वनन्यया शक्यमहमेवं विधोर्जुन । ज्ञातुं द्रष्टुंच तत्वेन प्रवेष्टुञ्च परंतपेति भारतात् । श्रवणं मननं चैव ध्यानं भक्तिस्तथैवच । साधनं शास्त्र सम्पत्तौ प्रधाननान्यदिष्यत इति नारदीयाच्चेति संक्षेपः विस्तरस्तुन्यायसुधाचंद्रिकादाविति शिवम् ॥

# ॥ श्री समीर सन्देशः ॥

कवितिलकाः, साहित्यालङ्काराः, वेदान्तशिरोमणयः धर्मशास्त्रभूषणं; विद्यावैभवाः
राजा श्री गुरुराजाचार्याः श्रीपादपुत्राः



पार्थिव सं ॥ वै ॥ शु ॥
पञ्चमी-

महाबदरी-
'श्री बादरायणाश्रमः'

## पूर्व संन्देशः

कार्या कार्य व्यवस्थित्यै युक्तायुक्तविवेचने ।
अयं समीर सन्देशः भूयाच्छ्री सुयमीन्द्र ! ते ॥ १ ॥

## श्रीमध्वसन्देशः

मन्दाक्रान्ते जगति बहुधा सन्दिहाने सुजीवे ।
वेदं द्वैतं सुमतमिहयो व्यासरूपी रमेशः ॥
स्पष्टं सूत्रैः श्रुतिपथगतैः स्थापयामास भूमौ ।
तस्मिन्नसद्दृदयमनिशं मूलरामे रमेत ॥ २ ॥

अहं तदाज्ञां शिरसा गृहीत्वा धरातले विप्रगृहेऽवतीर्य ।
आनन्द दातॄणि बहूनितीर्थान्यपावयं श्रीरमणस्य तुष्ट्यै ॥ ३ ॥

सदा सदानन्द सुसंविदात्मनो रमेश्वरस्याश्रयलब्धगौरवः ।
सदागतिः सर्वमहो सुतो वदं करोमि विष्णोः करुणाबलादहम् ॥ ४ ॥

अहंत्वरूपोविरसः समीरितः कुतार्किकैः सत्यमथापि भो यते ! ।
अलङ्घ्यं वारिधिमद्रिमानयं प्रियाण्यवोचं वचनानि मैथिलीम् ॥ ५ ॥

वेदान्तविद्यागगनप्रचारिणं समस्तदुर्भाष्यघनान्निरस्यच ।
सद्वैष्णवार्कच्छविमाशुसर्वतः प्रकाशयं विष्णुपदावलम्बतनम् ॥ ६ ॥

हरेरनुज्ञां परिपूर्यभूम्याविरम्य वर्तेह्यधुना बदर्याम् ।
यत्र प्रभोस्सन्निधितुष्टचेताः मुहुर्मुहुस्तत्ववराणि वेद्मि ॥ ७ ॥

ग्रन्थैर्मदीयैः शुभ 'सर्वमूल' प्रकीर्तितै विज्ञजने विसृष्टैः ।
सिद्धान्तमत्युत्तममीश्वरोक्तं विन्दन्तुमुक्त्यै सुजना भवन्तः ॥ ८ ॥

मत्प्रीतिपात्रं जयतीर्थनामा बुधेश्वरो विष्णुकृपानिधानम् ।
व्याख्याय सम्यङ्मम शास्त्रजातं महोपकारं ह्यकरोद्ध्रुवस्तु ॥ ९ ॥

ततोवतीर्णो भुवि व्यासराजः सद्द्वैतवेदान्तमतप्रचारकः ।
न्यायामृतं तर्कसुताण्डवं च सच्चन्द्रिकां योव्यकरोद्यतीन्द्रः ॥ १० ॥

कर्णाटकाधीश्वरकृष्णभूपा द्रत्नाभिषेकं ह्यलभन्महात्मा ।
स्वकीयवाग्वज्र भराद्भिभज्यद्दुर्वादिशैलान्भुवि भूसुरेन्द्रः ॥ ११ ॥

तच्छिष्यवर्यो विजयीन्द्रनामा यतिश्चतुष्षष्टिकलाप्रवीणः ।
जितेन्द्रियो विश्रुतकुम्भघोणे विराजते निर्जित शैवमौनिः ॥ १२ ॥

तंजेतुमायातमपय्यदीक्षितं ह्यद्वैत शैवागम भाष्यकारम् ।
निरीक्ष्य तं सभ्यजना उऊचुर्महाविचित्रं वचनं गभीरम् ॥ १३ ॥

"सजयति यतिचन्द्रसाहिती शास्त्रसान्द्रः सतत गलित तन्द्रस्सयशाच्छ्रीजयीन्द्रः ।
जहि ! हि निजजयाशा जाग्रदायासलेशाज्जड ! यदधिनिदेशाज्जातहर्षादिगीशाः" ॥ १४ ॥

इति निगदितवन्ते तत्र विद्वन्महान्ते विदितसकलशास्त्राप्पय्यनामाध्वरीन्द्रः ।
अवनितमुख एवाभुद्धि दुर्वादिभेन्द्रो विजयपति लसद्वाग्वैखरीनिर्जितोऽसौ ॥ १५ ॥

तेन श्रीविजयीन्द्रतीर्थ मुनिना मत्तत्ववादोञ्जसा
आगङ्गा च हिमालये दशदिशि प्रख्यापितोभूद्यते ।
येनाकारि गभीरतर्क जटिला ग्रन्थाहि मत्प्रीतये
तैरेवाधुनिकोप जीवतिभृशं यः कोपि भूयाद्ध्रुवम् ॥ १६ ॥

ततोपि विख्यातकृतीन्वितन्वन् श्रीराघवेन्द्रो यतिराड्दयालुः ।
अद्यापि मन्त्रालय पूर्वदेशेष्वहो चकास्ति प्रियकृज्जनानां ॥ १७ ॥

स एव प्रह्लाद इति प्रसिद्धो श्रीव्यासराजाभिदया च कीर्तितः ।
सद्द्वैतवेदान्त मतं पृथिव्यां विकासयन्नः प्रियमाततान ॥ १८ ॥

समूलरामस्यमदर्चितस्य पूजां वितन्वन्सुजनैर्वदान्यः ।
श्रीराघवेन्द्रेत्यधुना चकास्ति सत्तुङ्गभद्रातट मन्त्रमन्दिरः ॥ १९ ॥

कलौयुगे ह्यल्पधियोभवन्ति ह्यतत्ववादान्बहुशोवदन्ति ।
तत्वान्मदीयानपलालयन्ति तेत्वन्यभाषामुपलालयन्ति ॥ २० ॥

"अशास्त्रविदुषां पुंसामेवमेव स्वभावतः ।
अप्रमाणान्वदिष्यन्ति नीतिं पंडितमानिनः ॥ २१ ॥

उद्देश्यतो धर्मशीलाकेचिन्मध्यस्ततां गताः ।
विमर्शशीलाः केचित्तु हेतु वादकुतूहलाः ॥ २२ ॥

प्रत्यक्षमनुमानञ्च प्रमाणं चेतितिनिश्चिताः ।
प्रमाणैकं करिष्यन्ति नते पंडितमानिनः ॥ १३ ॥
अप्रमाणं करिष्यन्ति वेदोक्तमपरेजनाः ।"

मदीयशास्त्राशयमल्पमेधसो जानन्ति किं यत्तु महागभीरम् ।
सर्वानहोताम् सुयमीन्द्रतीर्थ निराकुरुष्वात्र नकोपि दोषः ॥ २४ ॥

उपेन्द्रवज्रायितवाक्यसान्द्रै स्सर्वान्विनिर्जित्य मदीय शास्त्रम् ।
प्रचारयस्वप्रियशिष्य ! भूमौ व्रतीन्द्र ! श्रीमत्सुयमीन्द्रतीर्थ ! ॥ २५ ॥

## उत्तरसन्देशः

तत्तादृक्षं मूलरामं प्रकामं मद्भस्तार्च्यं दिग्विजिष्णु चरामम् ।
पूर्वैः पुण्यैः सय्यमीन्द्र ! त्वमेतौ प्रार्चन् धन्योमुक्तिगामी विभासि ॥ २६ ॥

यते ! सहस्राधिकविप्रभोजनं दिनेदिने त्वीदृशदुस्थितौमुदा ।
दिशन्नहोदीनजनावलम्बनः प्रसस्यसे ! श्रीपतिनैवसन्ततम् ॥ २७ ॥

मतीयहानिं च मठीयहानिं क्षणेन भिक्षोः सदयं निरस्यन् ।
मदीयमानन्दभरं तनोषि प्रसीदति श्रीरमणः सदा ते ! ॥ २८ ॥

## आशंसनसन्देशः

यतीवर ! सुयमीन्द्र ! श्रीपतेः प्रीतिपात्र ! श्रितजनदुरितघ्न !! श्रेष्ठविद्वन्निषेव्यः !! ।
तवमहिततरेऽस्मिन्नुत्सवेद्वाशशाब्दे । सकलशुभसमृद्धिं चेत आशंसते मे ॥ २९ ॥

रघुपति विनतांघ्रि मूलरामं समर्चन् हरिमतमेतद्वर्धयन् सर्वदिक्षु ।
विमलविपुलकीर्त्या सम्पदा सविदा च प्रभुवरमहिशूराधीशसेव्योविभायाः ॥ ३० ॥

यत्वं श्रीगुरुराघवेन्द्र यमिनां वंशाम्बुधौ प्रोत्थितः ।
मत्पीठे लससे ! द्विजैर्विनुतभाः सद्विष्णुपादाश्रिते ॥
त्वत्कीर्तिर्जगतीतले प्रसरते सच्चन्द्रिकालङ्कृता ।
सत्यं श्रीसुयमीन्द्रचन्द्र ! सुमते जीवस्यकोटीः समाः ॥ ३१ ॥

शुभं भूयात् श्रीः ॐ

# ॥ योगः ॥

ज्योतिर्विद्वांसः नागेशकृष्णदैवज्ञाः कुकनूरु

ज्ञानं कुतोमनसि सम्भवतीहतावत्
प्राणोऽपि जीवति मनो म्रियते न यावत् ।
प्राणो मनो द्वयमिदं विलयंनयेद्यो
मोक्षं स गच्छतिनरो न कथं चिदन्यः ॥

योगांङ्गान्यष्टौ वक्ष्यमाणानि तेषां अनुष्ठानात् पापक्षये सति ज्ञानस्य दीप्तिर्भवति (योगांङ्गानि) यमनियमासनप्राणायामप्रत्याहार धारणा ध्यान समाधयोऽष्टाङ्गानि । एतानि ज्ञानस्य साधनतया योगाङ्गानि तत्र तेषु मध्ये अहिंसादयः यमाः पञ्च—सूत्रम्—तत्राहिंसा सत्यास्तेय ब्रह्मचर्यापरिग्रहाः—तत्र अहिंसा-नाम प्राणिनामद्रोहः सत्यं वाङ्मनसोर्यथार्थता । अस्तेयं परस्वानादानं ब्रह्मचर्यं अष्टविधमैथुननिवृतिः—स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोध्यवसायश्च क्रियानिर्वृतिरेवच । एतन्मैथुनमष्टांङ्गं प्रवदन्ति मनीषिणः अपरिग्रहः पदार्थानामस्वीकारः ॥

नियमाः शौचसन्तोषतपस्वाध्यायेश्वरप्रणिधानानि नियमाः । तत्र शौचं मृज्जलादिना बाह्यं पञ्चगव्य भोजनेनांतरं उभयं । शरीरं मानसन्तु रागद्वेषादि मलक्षालनं । सन्तोषः यथालाभतुष्टिः तपः चन्द्रायणादिः स्वाध्यायः मोक्षशास्त्राध्ययनं प्रणवजपोवा ईश्वरप्रणिधानं परमगुरौ परमेश्वरे सर्वकर्मार्पणं एते नियमाः ॥

यमनियमसिद्धयः अहिंसास्थैर्ये सति तत्सन्निधिस्थानां मार्जारमूषकादीनामन्योन्यवैरत्यागो भवति । सत्यस्थैर्ये तद्वचनमात्रेणान्येषां धर्मादिक्रियावत्वं अस्तेयस्थैर्ये सति स्वयमेव सर्वरत्नान्युप तिष्ठन्ते ब्रह्मचर्यस्थैर्ये सति वीर्यलाभोभवति येन ज्ञानक्रियाशक्ति मान्भूत्वा परेषु पुरुषः क्षमते । अपरिग्रहस्थैर्ये सति जन्मान्तरस्मरणं भवति शौचस्थैर्यात् स्वाङ्गे जुगुप्सा भवति अन्तश्शौचस्थैर्यात् सत्वोद्रेकोभवति ततः सौमनस्यं स्वाभाविकीप्रीतिः ततः प्रीतचित्तस्याविक्षेपादैकाग्र्यं तत इंद्रियजयः तत अत्मसाक्षात्कार योग्यत्वं तपस्थैर्यात् कायेन्द्रिययोः सिद्धिर्भवति सन्तोषस्थैर्यादनुत्तमसुखलाभो भवति स्वाध्यायस्थैर्या-त्समाधिसिद्धिर्भवति ॥

स्थिरसुखमासनं यदवेस्थिरं सुखकरञ्चतदेवासनंकार्यं तत्र सूकरत्वात्प्रथमं स्वस्तिकं जानूर्वो रन्तरे उभे पादतले सम्यक्कृत्वा ऋजुकायः यत्र समासीनो भवेत्तदासनं स्वस्तिकं योनिस्थानकं अंघ्रिमूल घटितं कृत्वा मेढ्रं दक्षिणपादं विन्यस्य हृदये हनु सुस्थिरं कृत्वा संयमितेन्द्रियः अचलदृशाभ्रुवोरंतरपश्ये द्येत् एतत् मोक्षकवाटभेदजनकं सिद्धासन एतत् नाडिशोधनकारकं आसनस्थैर्योपायं । सूत्रं प्रयत्न शैथिल्यानन्तसमापत्तिभ्यां बहुलायासनिवृत्तिः अनन्ते चित्तस्य धारणा ताभ्यां आसनं सिध्यति आसनस्थैर्या द्वंद्वैः शीतोष्णादिभिरनभिघातश्चित्तालंबनं भवति असनसिद्धसति हठक्रमे ऋभ्यसेत् ॥

अभ्यसेन्नाडिकाशुद्धिं मुद्रादि पवनक्रियाम्
आसनं कुंभकं चित्रं मुद्राख्यं करणं तथा ।
अथनादानुसंधानं अभ्यासानुक्रमो हठे ॥
ब्रह्मचारी मिताहारी त्यागी योगपरायणः ॥
अब्दादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ॥

नाडीनां शुद्धिं मुद्रा खेचर्यादिमुद्रां प्राणायामरूपं प्राणवायोःक्रियां उक्तलक्षणमासनं विविध कुंभकं महामुद्रादिकरणं हठसिद्धौ उपकारकं। अनंतरं नादानुसंधानं एवमादिसाधनं हठयोगे । अभ्यासानु क्रमः ब्रह्मचारी ब्रह्मचर्यलक्षणं पूर्वमुक्तं मिताहारी मिताहारोनाम सुस्निग्धमधुराहारःश्चतुर्थांश विवर्जितः। भुज्यते शिवसंप्रीत्यै मिताहारःसउच्यते द्वौभागौ पूरयेदन्नैस्तोयेनैकेन पूरयेत् । वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् । एवं रीत्या यः शिवप्रीत्यै भुज्यते योगाभ्यासी सर्वदा लवणं सर्षपं आम्लं उग्रं तीक्ष्णं रूक्षं वर्ज्यं अतिनिद्रा अतिभोजनं अतिभाषणं वर्ज्यं वर्जयेद्दुर्जनप्रांतं वह्निस्त्रीपथिसेवनम् । प्रातस्नानोप-वासादि कायक्लेशविधिं तथा । इत्याद्युक्तिस्तु अभ्यासकाले वर्ज्यं । आरम्भकाले प्रातस्नाने सीतविकारा-द्युत्पत्तेः उपवासादिना पित्ताद्युत्पत्तेः कायक्लेशकरक्रियां बहुसूर्यनमस्काररूपां विधिं च वर्जयेत् सर्वदा योगिनां पथ्यमपथ्यं नकदाचन । इत्युक्तरीत्या योगी पथ्यमेव सेवयन् अभ्यसेत् । पथ्यविचारस्तु गोधूमः शालिः यवः षाष्टिकाः पविचान्नं क्षीरं आज्यं खन्ड शर्करा नवनीतं पटोलं शुन्टी पञ्चशाकं, पञ्चशाकंनाम जीवन्तीवास्तु मूल्याक्षी मेघनाद पुनर्नवा इत्यादिशाकपञ्चकं मुद्गादिधान्यं निर्मलं जलं योगिनां हितकरं भोजननियमस्तु सुमधुरं पुष्टं स्निग्धं गव्यं धातुपोषणकरं योग्यं मनोभिलषितं भुक्त्वा नियमेन अभ्यसेच्चेत् योगसिद्धिर्भवेत् ॥

प्राणायामः अथासने दृढेयोगी वशीहितमिताशनः । गुरूपदिष्टमार्गेण प्राणायामान् समभ्यसेत् (सूत्रम्) तस्मिन् सति श्वासयोर्गतिविच्छेदः प्राणायामः तस्मिन्नासेनेसति श्वासप्रश्वासयोः शास्त्रोक्तरीत्या स्वाभाविकगतिविच्छेदः प्राणायामः वक्ष्यमाण चतुर्विध प्राणायामस्य सामान्यलक्षणं । सच प्राणायामः बाह्यवृत्तिराभ्यन्तरवृत्ति स्तम्भवृतिरिति त्रिविधः ।रेचक पूरक कुंभक भेदात् सोपि त्रिविधः प्राणायामो यदा देशकालसंख्याभिः परिदृष्टः नियमितो भवति तदा अभ्यासवशात् क्रमेण दीर्घसूक्ष्मसंज्ञको भवति ॥

## प्राणायाम अभ्यासक्रमः

प्राणं चेदिडयापिबेन्नियमितं भूयोऽन्यया रेचयेत् । पीत्वापिङ्गलयासमीरण यथो बद्धात्यजेद्वामया। सूर्याचन्द्रमसोरनेन विधिनाभ्यासं सदातन्वतां शुद्धानाडिगणा भवंति यमिनां मासत्रयादूर्ध्वतः ॥ इडया पूरयेत् कुंभितं प्राणं भूयः पिंगलयारेचयेत् पुनः पिंगलयापूर्य कुंभयित्वा इडयारेचयेत् सूर्याचन्द्रम सोरनेनविधिना सहा अभ्यासं तन्वतां यमिनां मासत्रयानन्तरं नाडीशुद्धिर्भवति एवं प्रातः मध्यंदिने सायं अर्धरात्रे असीतिपर्यंतं कुम्भकान्समभ्यसेत् कनीयसि प्राणायामे स्वेदः (स्वेदानुमेयः कनिष्टः) मध्यमे कंपः (कंपानुमेयो मध्यमः) उत्तमे प्राणायामे ब्रस्थानं प्राप्नोति (स्थनप्राप्त्यनुमेय उत्तमः) अतः प्राणं निरोध येत् सर्वयौगिकेषु प्राणायामो मुख्यः तत्सिद्धौ प्रत्याहारादीनां सिद्धिः तदसिद्धौ प्रत्याहाराद्यसिद्धेश्च प्राणायामएव अभ्यासक्रमेण वर्धमानः प्रत्याहारादिशब्दैरुच्यते । अत्रैवं व्यवस्था बन्धपूर्वकं पञ्चविंशत्युत्तर

शत विपलपर्यंतं यदा प्राणस्थैर्यं भवति तदा प्राणो ब्रह्म रंध्रे गच्छति ब्रह्मरंध्रे गतः प्राणः यदा पञ्चविंशति पलपर्यंतं तिष्ठति तदा प्रत्याहारः यदा पञ्चघटिकापर्यंतं तिष्ठति तदा धारणा यदा षष्टि घटिकापर्यंतं तिष्ठति तदा ध्यानं यदा द्वादशादिनपर्यंतं तिष्ठति तदा समाधिः ॥

मेदश्लेष्माधिके सति षटक्रिया उपकारिका धौतिः १. बस्तिः २. नेतिः ३. त्राटकं ४. नौलिः ५. कपालभाति ६ इयं षटक्रिया घटशोधनकारिका विचित्रगुणसन्धायी ॥

धौतिः— चतुरंगुलविस्तृत पञ्चदशहस्तासमितं वस्त्रं शनैः ग्रसित्वा प्रत्याहरेत् । एतद्धौतिकर्म फलन्तु—काशश्वासप्लीहगुष्टादिविंशति कफ रोगाः नश्यंति ॥

बस्तिः— नाभिपर्यंतजले स्थित्वा उत्कटासनेन आधाराकुञ्चनं विकसनेन शुद्धिर्भवति फलं एकविंशतिगुदरोगाः क्षीयन्ते ॥

नेतिः— सूक्ष्मसूत्रं वितस्तिमात्रं नासानाले प्रविश्यमुखान्निर्गमयेत् । एषानेतिः गुणश्च कपाल शोधिनी दिव्यदृष्टिप्रदायिनी । त्राटकन्तु—सूक्ष्मचिंह्नं अचलदृशा अश्रुपातपर्यंतं पश्येद्यत् नेत्ररोगाणां मोचनं तन्द्रादीनां नाशनं भवति ॥

नौलिः— अमंदावर्तवेगेन तुंदं सव्याप सव्यतः नतांसस्तन भ्रामयेत् एषानौलिः फलं मन्दाग्नि सन्दीपनपाचनादि सन्धापिका आनन्दकरी अशेष दोषामय शोषिणी इयं नौलिः हठक्रियाणां मौलिः कापालभातिः—लोहकारभस्त्रावत् ससंभ्रमौ रेचकपूरौ कफदोष विशोषिणी कपालभातिः । एतादृश षट्कर्म निर्गतस्थौल्य कफदोष मलादिकः योगी प्राणायामाधिकारी केवल कुम्भकरूपं प्राणायामस्य चतुर्थं ॥

सूत्रम्— बाह्याभ्यांतर विषयाक्षेपी चतुर्थः ॥

वाशिष्टः— रेचकं पूरकं त्यत्वासुखं यद्वायुधारणं ॥
प्राणायामोयमित्युक्तः स वै केवल कुम्भकः ॥
सहितं केवलं वापि कुम्भकं नित्यमभ्यसेत् ॥
यावत्केवलसिद्धिस्यात्तावत्सहितमभ्यसेत् ॥
केवले कुंभके सिद्धे रेचपूरक वर्तिते ॥
नतस्य दुर्लभं किंचित्रिषुलोकेषु विद्यते ॥

ततः क्षीयते प्रकाशावरकं प्राणायामस्थैर्यादेव विवेकज्ञानस्यावरणं क्षीयते वक्ष्यमाणधारणासु क्षमता भवति प्राणाधीनतया मनोव्यापारस्य प्राणायास्थैर्येणैव मनःस्थैर्यात् अतएव वाशिष्टादौ मनक्षोभेण प्राणक्षोभवत् प्राणक्षोभेणापिमनक्षोभ उक्तः ॥

प्रत्याहारः— इंद्रियाणां स्वस्वविषयासन्निकर्षकाले ध्यानादौ या चित्ताकारता भवति सा प्रत्याहाराः इत्युच्यतेत्याराद्रिन्द्रियाणां परमजायो भवति चित्तास्वातन्त्र्येण रत्यभावएव परमजयः ॥

धारणाः— (सूत्रं) देशबन्धश्चित्तस्याधारणा यत्र हृत्पुण्डरीकादिरूपेदेशे चित्तस्य बन्ध एकाग्र्यं धारणा ॥

ध्यानम्— तत्र प्रत्यैकतानता ध्यानं तत्र देशे चतुर्भुजादि ध्येयाकारवृत्तिप्रावाहोध्यानम् ॥

## समाधिः

सूत्रम्— तदेवार्थमात्रनिर्भासस्वरूपशून्यमिवसमाधिः तदेवध्यानं यदा ध्येयावेशवशात् ध्यान ध्यातृद्वष्टि शून्यं ध्येयमात्राकारं भवति तदासमाधिः अयं समाधिः वृत्यंतर निरोधद्वारैव साक्षात्कारहेतुः इति ॥

## सोयं योगः

यमनियमाभ्यां प्राप्तबीजोभवति आसन प्राणायामाभ्यामंकुरितः प्रत्याहारेण कुसुमितः इत्ये तत्पंचकं बहिरङ्गं धारणादित्रयेण फलतीति तदन्तरङ्गसाधनं एवमादीन्योगांग्यकुसुमानि श्रीमत्परम हंसेत्याद्यनेक गुणगणालंकृत श्री १०८ श्रीमत्सुयमीन्द्रतीर्थ श्रीपदानांद्वादश वार्षिक पट्टाभिषेक महोत्सवे ॥

# ॥ श्रीमत्सुव्रतीन्द्रस्तुतिरत्नमाला ॥



क्षुभ्यद्दुस्तर्कवक्रोत्पथगतिकुमतिग्राहनिग्राहकोद्यद्—
राजद्राजीवनेत्रोद्धृतदुलिहनुमत्क्ष्माभृदालोड्यमानात् ।
मिथ्याध्वान्तं नितांतं सपदि परिहरन् श्रीहरित्साम्वयाब्धेः
प्रादुर्भूत ! द्विजेन्दो ! कुवलयमहितं त्वां कलाढ्यं प्रपद्ये ॥ १ ॥

पित्रानन्दैकगेहद्विजकुलसुयशोदार्यमर्घ्यं सहर्षम्
कृष्ण ! त्वं प्रापितः सन् गुरुगुणनियतः शाखिमोदं व्यतानीः ।
जित्वारिं पूतनामास्यकथितनिजसद्वैभवो विश्वरूपो
युक्तो नित्यं सुधाम्ना लस इह सुपदध्वस्तमायिद्विजिह्वः ॥ २ ॥

उद्धृत्यात्मीयवंशं विबुधवरसदस्स्वग्रपूजां च लब्ध्वा
मायिव्रातं च जित्वोद्धवनुतमहिमा पार्थमोहापनोदी ।
भक्तश्रेष्ठैर्यमीन्द्रैरुपचरितपदः साधुवृन्दावनोत्कः
कृष्णं तं योगिवर्यं निजवरचरितैः स्मारयस्येव भक्तान् ॥ ३ ॥

बाल्ये लीलाविलासैरधिगतनिगमो ब्रह्मविद्याविकासी
गार्हस्थ्येऽप्यल्पकालं पितुरृणहतये कर्मठः सन्ननैषीः ।
उत्पाद्य श्रीनिवासीन् बुधवरतनयान् कन्यकामप्यनिन्द्याम्
तारुण्ये मूलरामार्चनचणहृदयो भैक्षवापेक्षकोऽभूः ॥ ४ ॥

सुज्ञानेन्द्राख्यया प्राग् यतिमरवपुषा मूलरामादिमूर्तीः
प्राच्याप्यप्राप्ततृप्तिः पुनरपि भगवन्नेवमत्राजनिष्ठाः ।
प्रेक्षांभोधीन् तदर्थं जगदुपकृतिनः श्रीसुशीलेन्द्रतीर्थान्
दुर्वादीभोग्रसिंहान् कतिपय शरदः सेवया तोषयोलम् ॥ ५ ॥

तेऽपि प्रीताः प्रपूतं शुभमति विरति क्षांतिमन्तं भवन्तम्
पारिव्राज्याधिराज्ये व्रतिवरमहितं सुव्रतीन्द्रं व्यतन्वन् ।
प्रायच्छन् ब्रह्ममध्वाद्यभिनतचरणा मूलरामादिमूर्तीः
यासामासादितेष्टो व्यतनुत च भवान् वत्सरान् सप्तपूजाम् ॥ ६ ॥

पूर्णज्ञानप्रमोदाद्यगणित सुगुणग्रामदेहाभिरामम्
कामं रक्षोविरामं परद्दतदयितोऽप्यात्मरामप्रवीणम् ।
सीमातीतारिभीमं विधिमुखसुकृति प्रार्चितं मूलरामम्
सम्पूज्य प्राज्यकीर्त्या विलसथ तदिदं सुव्रतं वो व्रतीन्द्राः ॥ ७ ॥

श्रीमत्पूर्णप्रबोध प्रभणितविपुलग्रन्थवर्यान् सटीकान्
शिष्यानध्याप्य साध्यायनमिह सततं श्रीशतुष्ट्येकदृष्ट्या ।
तत्तद्ग्रन्थप्रकृष्टप्रवचनविरतौ मङ्गळाख्योत्सवास्त्वम्
तन्वन् धन्याग्रगण्य ! व्रतमतुलमिदं सुव्रतीन्द्रान्वतिष्ठः ॥ ८ ॥

नव्यैर् व्याजनम्यैः मधुमधुरागिराकृष्टसर्वान्तरङ्गैः
साङ्गैर्भङ्गी प्रसङ्गैरुचितमृदुपदन्यासहासप्रकारैः ।
चारं चारं यथेष्टं शुभपरिमळितां न्यायनीतां सुधां ताम्
भूदेवाग्र्यान् निपाय्योद्भवमृतिरहितान् प्राप्तविष्णूनकार्षीः ॥ ९ ॥

संचारेणावलोक्य क्षितितलमखिलं भासुरान् भूसुराभान्
सर्वान् दुर्वादिशैलान् पटुतरनिजवाग्वज्रघातैर्निपात्य ।
पक्षान् स्वेच्छप्रचारप्रतिहतसुजनान् यच्च चिच्छेदिथैषाम्
तत्ते सत्यं व्रतीन्द्र ! प्रकटयतितरामैन्द्रमंशं त्वदीयम् ॥ १० ॥

योगार्थी श्रीमुखाब्दे नरदृगविषयः पुण्यवैशाखमासे
स्वच्छे पक्षे रमेशप्रियतिथिलसिते मन्दघस्रेऽपराह्णे ।
तुङ्गास्नानं सदेच्छन् गुरुवरसहितो मूलरामं तथार्चन्
स्वेष्टे मन्त्रालयेऽस्मिन् विलससि भगवन् चारुवृन्दावनस्थः ॥ ११ ॥

भूयो भूयः प्रणौमि व्रतिवर सुयमीन्द्राख्यकर्मन्दिवन्द्य !
श्रीशे, वायौ, भवत्यप्यचलित विपुलां भक्तिमेकां दिशेर्नः ।
श्रीमद्भ्योऽस्मद्गुरुभ्यः प्रदिश च सुयमीन्द्राभिधेभ्यो बुधेभ्यः
श्रेयोभूयश्चिरायुः पुनरपि भगवन् वः प्रणामान् विदध्मः ॥ १२ ॥

इति बहुभाषालङ्कारेण कविरत्नेन उडुपि रङ्गनाथाचार्येण (शिरोमणिना) ग्रथिता
श्रीमत्सुव्रतीन्द्रस्तुतिरत्नमाला समाप्ता

॥ श्रीगुरुराजार्पणमस्तु ॥

# ॥ आयुर्वेदः – आचारश्च ॥

आयुर्वेदशिरोमणयः म॥ श॥ श्री॥ बोज्जि कृष्णमूर्त्याचार्याः

योब्रह्मादिभिरीडितो जलनिधौजातो विशालेक्षणो
येनाधारिकरे सुधाहिविमलासम्प्रार्थ्यमानासुरैः ।
आचारैकपरान्निवारितजरान्योकारयत्सर्वदा
सोऽयं नो भवतापि नो जनिमतः पायात्सधन्वन्तरिः ।
धन्वन्तरिस्सदा दद्यादारोग्यं सर्वदेहिनां ।
सुधयेव सुरेशानां मनुष्याणां महौषधैः ॥

आयुर्वेदः— आयुः विद्यते, जायते अथवा आयुः विंदति, प्राप्यते अनेनेति व्युत्पत्या अयुर्वेदस्य आयुषः विज्ञानं आयुषः प्राप्तिश्चफलमिति विज्ञायते । प्रथमतः प्रजापालन तत्परः परब्रह्म प्रजापतिमायुर्वेदमुपदिदेश । सचायमायुर्वेदः अथर्वणवेदान्तर्गतः । अत एव तन्मूलाः लब्धप्रामाण्याः आसन्नार्षाऽपि चरकसुश्रुतादयः । नकेवलमयमायुर्वेदः शारीरिणां शारीरकतापशमनाय प्रवृत्तः किंतु आध्यात्मिकादि त्रिविधतापत्रयमपि निवर्तयितुं । एवमाचारोपि । नकेवलमाचारस्य आमुष्मिकं फलं । किंतु आनुषङ्गितया आरोग्यमपि फलं । पलालकुलमिवकृषेः । येच शिष्टचारेति प्रथिताः यमनियमादयः तेषां आरोग्यं प्रयोजमित्युक्ते न तत्र काप्यमूडतेति सप्रमाणं ब्रूमः । तथाहि । शिष्टास्तावत् सदाचारनिरताइति सर्वजनानुसिद्धमेतत् । नकेवलमेते आमुष्मिक फलमुद्दिश्य कायक्लेशनिरताः । किंतु आनुषंगतया आरोग्यमपीति निश्चिनुमः वार्धिक्येपि तेषां सर्वेंद्रियपाटव्यात् ॥

किंच आचारोनाम शास्त्रविहिताचरणं आहारविहारादिरूपं । शास्त्रंच न निष्फलार्थप्रकाशं । तथाच सफलोयमाचारइतिसिद्धम् । फलद्वयमाचारस्य ऐहिकमामुष्मिकं चेति । प्रथमं सम्प्राप्तव्याध्युपशमः अवाप्तस्वास्थ्य रक्षणं चेति । द्वितीयं अपवर्ग । स च न लभ्यते विना भगवतः प्रसादम् । सच प्रसादः ज्ञानसाध्यः । ज्ञानञ्च सदाचारलभ्यम् । कर्मणाज्ञानमातनोतीति श्रुतेः ॥

आत्मनः दुःखसम्बन्धो हि व्याधिरित्युच्यते । स चतुर्विधः । आगंतुकः शारीरः मानसः स्वाभाविकश्चेति । अभिघातादिनिमित्ताः आगंतुकाः । आहारविहारादिमूलवातपित्तकफादि वैषम्य निमित्ताः शारीराः । कामक्रोधादिकारणकाः मानसाः । क्षुत्पिपासा निद्राजरादिमूलाः स्वाभाविकाः । तथा च समासतः शारीराः मानसा इति द्विविधाः व्याधयः इति वक्तुं शक्यते । एतन्निरसनमेव प्रयोजनमाचारस्य । एतदाचारप्रदर्शनायैव सर्वोप्यायुर्वेदः प्रवृत्तः । तथाहि । वाग्भटे आद्यपद्ये । "रागादि रोगात्सततानुसक्तानशेषकायप्रसृतानशेषान् औत्सुक्य मोहारतिदान्जघानयोऽपूर्ववैद्याय नमोस्तु तस्मै ।" अत्ररागादित्यादिना शारीरक मानस रोगपरिहार एव प्रयोजनमायुर्वेदस्येति सुस्पष्टं विज्ञायते । अत एव "अयुष्कामीयं" अध्यायं व्याख्यास्याम इत्यारभ्यते । चतुर्विधपुरुषार्थसाधनत्वादायुषः । तत्प्रयोजनत्वादायुर्वेदस्य अत्युपादेयताच सिद्धा । शिष्टाचाराः सर्वसूक्ष्मदृष्ट्या विचार्यमाणाः प्रागुक्त विविध

व्याधिनिवर्तनार्था इति सुस्पष्टं विज्ञायते। यथा उपनयनकाले ब्रह्मचारिणः विवाहकाले स्नातकस्यच केषुचिदाचारेषु सप्रतिज्ञं दीक्षा विधीयते। त एवाऽयुर्वेदे आरोग्यार्थं विधीयन्ते । यथा वाग्भटे २ अध्याये। नदींतरेन्नबाहुभ्यां नाग्निस्कन्दमभिव्रजेत्। संदिग्धनावं वृक्षं वा नारोहेद्दुष्टयानवत् । नाक्रमेच्छर्करालोष्ट बलिस्नानभुवोऽपिवा। चैत्यपूज्यध्वजाशस्त छाया भस्म तुषा शुचीन्। नाऽसंवृतमुखः कुर्यात् क्षुतिहास्य विजृंभणम्। नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम्। नांगैश्चेष्टेत विगुणं नासीतोत्कटकस्थितः। देहवाक्चेतसां चेष्टाः प्रकुशमाद्विनिवर्तयेत्। नोर्ध्वजानुःचिरंतिष्ठेन्नक्तं शेवेत न द्रुमम्। सर्वथेक्षेतमादित्यं नभारं शिरसा वहेत्। मद्यविक्रय संधानदानादानादिनाचरेत्। अतिव्यायामतः कासोज्वरच्छर्दिश्च जायते। व्यायामजागराध्वस्त्रीहास्यभाष्यादि साहसम्। गजं सिंहइवाकर्षन् भजन्नति विनश्यति । सुखार्थाःसर्वभूतानां मतास्सर्वाः प्रवृत्तयः। सुखञ्चन विनाधर्मात्तस्माद्धर्मपरोभवेत्।" अनेन नदीतरणादि निषेधस्य आगन्तुक रोग परिहारः फलमितिज्ञायते। किंच अतिसाहसकार्यकरणमपि निषिध्यते। यथा अल्पकायः सिंहः महाकायं गजं संहरन् क्रमेणम्रियतेत्यनुभवसिद्धं तथा पुरुषोपि नदीतरणाद्यतिसाहसकार्यकरणेन राजयक्ष्मादि रोगानवाप्नोतीत्याशयः । अति साहसस्तु राजयक्ष्मकारणं तदुक्तं राजयक्ष्मनिदाने माधव निदाने। "साहसाद्विषमाशनात्। त्रिरूपोजायते यक्ष्मगदोहेतुचतुष्टयादिति"॥

## अथ आचारविशेषाः

केचन प्रत्यहं अनुष्ठीयमानाः आचाराः सकारणका इति विव्रीयते। मृत्तिकाशौचादिकं दुर्गंधादि निवर्तनद्वारा सांसर्गिकरोगनिवर्तकम्। स्नानं प्रातरेवेतिकुतचेत्। सुश्रुते ४५ अ॥ "दिवार्ककिरणैर्जुष्टं निशायामिंदुरश्मिभिः। अरुक्षमनभिष्यंदितत्तुल्यं गगनांबुना। गगनांबु त्रिदोषघ्नं गृहीतं यत्सुभाजने। बल्यंरसायनं मेध्यं पात्रापेक्षिततः परम्" एवंच प्रातःकालीनजलस्य त्रिदोषहरत्वात् रसायनत्वात् मेधोजनकत्वात् प्रातरेवस्नानं पुनः प्रातरेवजलाहरणमिति। इमयेवार्थमाह वाग्भटोपि 'तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः। समंतादप्यहोरात्रं अगस्त्योदयनिर्विषम्। शुचिर्हंसोदकं नामनिर्मलं मलजिज्जलम्। अगस्त्यनक्षत्रोदयः अरुणोदयकाले भवती' ति कार्तिकमासादौ सूर्योदयात्पूर्वं स्नानं विहितम्। किंच उष्णोदकस्नानं आकंठं शीतोदकस्नाने आशिरः कर्तव्यम्। तदुक्तं। उष्णाम्बुनाऽधः कायस्य परिषेकोबलावहः। तेनैवचोत्तमाङ्गस्य बलहृत्केशचक्षुषाम्॥

व्यायामः—लाघवं कर्मसामर्थ्यं दीप्तोग्निः मेदसः क्षयः। विभक्तघनगात्रत्वं व्यायामादुपजायते॥

अभ्यङ्गः—अभ्यङ्गमाचरेन्नित्यं सजराश्रमवातह । दृष्टिप्रसादपुष्ट्यायुः स्वप्नसुत्वक्त्वदार्ढ्यकृत शिरःश्रवणपादेषुतं विशेषेण शीलयेत्॥

संध्यावन्दनम्—तत्र प्रधानकार्याणि आचमनं प्राणायामः शुद्धजलस्य आपोशनं, अर्घ्यप्रदानं गायत्रीजपः, अभिवंदनं देवतानांच । सूर्योदयात्पूर्वं स्नात्वाक्रमादाचमनादिरूपेण अल्पस्यजलस्यकरेण प्राशनात् शरीरांतः अवयवानां स्वस्वव्यापारशक्तिं संजनयति । अत एव "उषः पानमिति" अयुर्वेदे विधीयते। किंच आचमनानन्तरं प्राणायामः विहितः। अल्पजलपानेन वायोरनुलोमगत्या तदनंतरं विधीयमान प्राणायामस्य अनुकूलं भवेत्। अतएव प्राणायामात्पूर्वमाचमनमिति तयोः पूर्वापरीभावेन अङ्गाङ्गी भावोपि ज्ञायते । किंच प्राणायामस्य श्वासनिरोधरूपत्वेन श्वासगणनाधीनत्वादायुषः, श्वासनिरोधेन आयुषः अभिवृद्धिर्जायते। अतएव अत्यायासकार्येण श्वासाभिवृध्या आयुषः क्षयोजायतेत्यभियुक्तिरपि

संजघटवे। किंच हिक्कादिरोगपरिहारकत्वमपि दृष्टं। तदुक्तं सु '°० अ " प्राणायामोद्वेजनत्रासनानि सूची तोदैः सम्भ्रमश्चात्रशस्तः। अर्घ्यप्रदानं जपश्च मनोदोषनिवर्तकम्। सएवाऽर्थः खलुगायत्रीमंत्रस्य यत् "सवितृनामकस्य भगवतः परब्रह्मणः वासुदेवस्य सर्वोत्तमं रूपं चिंतयामि, मम मनः सत्कार्येषु प्रेरये-दिति" तथाच मनः शुद्धिरेव खल्वपेक्षितं प्राणिनां। तदुक्तं भगवता गीतायां " मनोदुर्निग्रहं मन्ये वायोरिवसुदुष्करं" गुरुपादैरप्येतदेव विशदीकृतं "मनएवहरेऽखिलेंद्रियाणां वरमित्थं प्रमितं श्रुति स्मृतिभ्याम्" ॥

त्रिकालवन्दने "उरसाशिरसे" त्यादिरीत्याकृते व्यायामरूपेण तदपि आरोग्यायैवभवेत्। अत एव सनियमसूर्यनमस्कारोपि सहेतुकः॥

होमः—तुलसीकाष्ठगंधादिभिः एवं नवग्रहशांत्यर्थं उदुंबरादीनां त्वचाच होमः विहितः। अयमपि रोगनिवर्तनायैव भवति। धूमपानप्रकरणे वाग्भटे २१ अ " तत्र द्रव्याण्यगुरुगुग्गुलुः। न्यग्रोधोदुंबराश्वत्थ प्लक्षरोध्रत्वचः सिता। गन्धाश्चकुष्ठतराः तीक्ष्णोज्योतिष्मतीनिशा। गन्धद्रव्याणि तीक्ष्णाणि गणोमूर्ध विरोचनः। इति होमस्यापि रोगनिवर्तकत्वमुक्तं। तदेवोक्तं वाग्भटे "कर्णास्याक्षिस्रावकंडूतिजाडयं तन्द्राहिध्माधूमपेन स्पृशंति" तथाच होमजोधूमः शरीरान्तः प्रविश्य ऊर्ध्वजतृगतानां रोगाणांनिवर्तको भवति। अत एव नित्यौपासनाख्यस्य होमस्य नित्यमनुष्ठेयता विधीयते। "यावज्जीवमग्निहोत्रंजुहुयादि" ति। परन्तु कालवशेन अस्तं गतोयं होमः॥

वैश्वदेवः—यदन्नं विषसंपृक्तं भवेत्तदा अग्नावन्नहोमेकृते अग्नौविवर्णगन्धता ज्ञानेन तदन्नं परित्यक्तुमलं भवेत्। तथाच अन्नस्य निर्विषत्वज्ञापकत्वेन वैश्वदेवस्योपयोगः। तदुक्तं। वा ७ अ। "प्राप्यान्नंसविषं त्वग्निरेकावर्तः स्फुटत्यपि। शिखिकंठाभधूमार्चिरनर्चिर्वोग्रगंधवान्" इति॥

एवं बलिहरणमपि अन्नस्य निर्विषत्वज्ञापकं। बलिहरणमुखेन विषयुक्ते अन्ने काकादीनां दत्ते सति तेम्रियन्ते अथवा तत्क्षणं तेषु विकारो वा उपलभ्येत। तदुक्तं। वा ७ अ॥ "म्रियतेमक्षिकाः प्राप्य काकः क्षामस्वरो भवेत्" इति॥

तीर्थप्राशनम्—तीर्थं नाम तुळसीकाष्ठगन्ध, श्रीगंध, पच्छकर्पूर, केसरादि संयुक्तं शालिग्राम शिलाभिषिक्तं परम पवित्रजलम्। एतदौषधप्रायं मन्वानाः शिष्टाः प्रत्यहं त्रिकालं स्वीकुर्वन्ति। तीर्थ प्राशनस्य आनुषङ्गितया शारीररोगपरिहारः फलम्। तदुक्तं। "प्रथमं कायशुध्यर्थं" इति। शुद्धिश्च निरोगतैव। तुलस्यादि वस्तुसंयोगेन वीर्यवत्तासिद्धये च बृहदुदर सूक्ष्मकंट पात्राणां गिंडितीर्थोप योगोपि। किञ्च तीर्थमपि तुलसीदलसाहित्येनैव स्वीकरणं। तुलस्याः महिमाच अवर्णनीया। तुलसी स्वरसलेपेनपामाकंड्वादि निवृत्तिः मरीचचूर्णयुक्त तुलसीस्वरसेन विषमज्वर परिहारः। किं वक्तव्यं "अग्निरोहिणी (plauge) ग्रंथिनाशोपि लेपेन तथास्वरसपानेनच। बहवोप्युपयोगाः संति तुलस्याः उपयोगेन। तथापि विस्तरभयादुपरम्यते। अतएवोक्तं "रोगाणामभिवंदितानिरसिनी" अतएवप्रत्यहं अष्टादश तुलसीदलोपयोगः वैष्णवानामाचारः। तदुक्तं चतुःकर्णेमुखेचेकं नाभावेकं तथैवच। शिरस्येकं तथा प्रोक्तं तीर्थेत्रीणि उपाहृतम्। अन्नोपरितथापश्च भोजनन्तेदलत्रयम्॥

गङ्गोदकस्यमहिमा प्रायः सर्वैरुपलब्धः । द्वादशवत्सरात्पूर्वमानीतेपि पात्रे जलस्य स्थितिः एवं तत्र विवर्णदौर्गन्ध्यादीनामनुपलम्भश्च । प्रायः सामान्यजलं दृष्यते खलु क्रिम्यादिभिः दिनद्वयमात्रांतरादेव । अतोऽस्त्येव किंचिद्वैजात्यं जाह्नवीजले । एवं शालिग्राम शिलाभिषिक्तजलेपि । तन्नमंदमतिभिः ज्ञातुं शक्यतेत्यलं विस्तरेण ॥

## पंचगव्यप्राशनम्

गव्यक्षीरगुणाः—वा ॥ ७६ अ ॥ "प्रायः पयोत्रगव्यंतु जीवनीयं रसायनम् । क्षतक्षीणहितं मेध्यं बल्यं स्थन्यकरंसरम् । श्रमभ्रममदाऽलक्ष्मीश्वासकासाति तृक्षुधः । जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तंचनाशयेत् ॥

दधिगुणाः—सु ॥ ४५ अ ॥ स्निग्धं विपाके मधुरं दीपनं बलवर्धनं । वातापहं पवित्रंच दधिगव्यंरुचि प्रदम् ॥

घृतगुणाः—विपाके मधुरं शीतं वातपित्तविषापहं । चक्षुष्यमग्र्यं बल्यं च गव्यंसर्पिर्गुणोत्तरम् ॥

गोमूत्रगुणाः—गोमूत्रं कटुतीक्ष्ण ष्णं सक्षारत्वान्नवातलं । लघ्वग्निदीपनं मेध्यं पित्तलं कफ वातजित् । शूलगुल्मोदरानाह विरेकास्थापनादिषु । मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥

## गोमयस्यापि मूत्रसमानगुणत्वं

एवंच पंचगव्यस्य व्याधिनाशकत्वेन औषध प्रायत्वेन एकादस्यामुपवासेनशुद्धकोष्टस्य द्वादश्यां प्रातः पञ्चगव्य प्राशनेन सर्वरोगपरिहारोभवेदिति मन्तव्यम् । अतएवोक्तं "यत्वगस्थिगतं पापं देहे तिष्ठतिष्ठ मामके । प्राशनात्पंचगव्यस्य दहत्यग्निरिवेंधनम् ।" अत्र पापस्य अस्थिगतत्वाऽभावेन लक्षणया पापशब्दस्य पापजन्यरोगपरमंगीकार्यम् । तथाच रोगपरिहारोपि फलमिति वक्तुं शक्यते ॥

## पंचामृतम्

वा ॥ ८ अ ॥ क्षीणेवृद्धेच बालेच पयः पथ्यं यथाऽमृतम् । तथाच अमृतप्रायत्वात्पयसः क्षीरदधि घृत मधुशर्करा फलादि संयोगेन अमृतप्रायमिति मत्वानाः एनं पंचामृतमिति व्यवह्रियंते शिष्टाः । इदंच रसायनरूपमिति यथाग्निबलमुपयुजन्ते ॥

## आहारः

तत्र भारतीयानामाहारपद्धतिः सशास्त्रीया । तथाहि । स्वभोज्यान्नभगवते निवेद्य भोजयेदिति सम्प्रदायः । सु ॥ ४६ अ ॥ "सिद्धमंत्रैर्हतविषं सिद्धमन्नं निवेदयेदिति" मंत्रैर्हतविषमित्यनेन निर्विषी करणमपि ऐहिकं फलमिति ज्ञायते । अत एव निर्विषीकरणार्थं अमृतीकरणार्थमिति धेन्वादि मुद्राः प्रदर्शयिष्यंते । भोजनं पवित्र एकांतस्थले कर्तव्यम् । यथोक्तं सु ॥ ४६ अ ॥ "भोक्तारं विजने रम्ये निःसम्बाधे शुचौ शुभे ।" विजने=दुर्जनरहिते अनेन भुंजानस्य पुंसः दुष्टदृष्टिनिपातादि दोषोन भवति। शुचिरेव कर्णाटकभाषायां "मडि" इति व्यवह्रियते । सु ॥ ४६ अ ॥ "दद्यात्ताम्रमये पात्रे सुशीतं

सुश्रुते पयः। पानीयं पानकं मद्यं मृण्मयेषु प्रदापयेत्।" अत एव शिष्टै पानीय जलार्थं ताम्रमयमेव पात्र-मुपयुज्यते। वैशाखमासादौ पानकदानं मृण्मय पात्रेदीयते "करकदान" मिति॥

## भोजनक्रमः

आदावल्पस्य परमान्नस्य भक्षणं सकारणकं। बुभुक्षिते पुरुषे वातपित्तप्रशमनाय तत्राप्यादौ वातशमनाय अल्पपरमान्न भक्षणं। ततः पित्तशमनाय अग्निदीपनायच आम्ललवणरसौ उपयुज्येते। तत्प्रधानौहिकर्णाटक भाषायां "सारुहुलि" इत्येतौ। एवं लेह्यपेयादयः उपयुज्यन्ते। तदुक्तं॥सु॥ ४६ अ॥ "पूर्वं मधुरमश्नीयात् मध्येम्ललवणौ रसौ" इति। "वयसः स्थापिनीधात्री" इति। धात्र्याः जरा-नाशकत्वात्धर्मशास्त्रे "अतसीतुलसी धात्री" इति धात्र्याः सर्वदा ग्राह्यत्वं प्रतिपादितम्। अतसी तुलसी धात्री द्वादश्यां यस्यनोदरे। तेनभुक्तं रुदत्यन्नं किं मया दुष्कृतं कृतम्। किंच भक्ष्याणां भोजन मध्येएव भक्षणं ब्राह्मणामाचारः सकारणकः। गुरुपदार्थानां भोजनमध्ये उपयोगस्योक्तत्वात्। "ततः पेयान् ततो भोज्यान् भक्ष्यान् चित्रान् ततः परं। घनं पूर्वं समश्नीयादिति।" भक्ष्यादीनां होलिकादीनां गुरुत्वाद्घनत्वं। "पेयलेह्याद्यभक्षाणां गुरुविद्याद्यथोत्तरं।" इति भक्षाणां गुरुत्वं। "तद्वच्चवटकान्याहुः विदाहीनिगुरूणिच।" इति वटाकानां मध्ये भक्षणं॥

जलमपि मध्ये मध्ये पानीयं। तेन स्वादुता रसानस्य नूतनपदार्थेष्वभिरुचिश्चजायते। तदुक्तं। "प्रक्षालयेदद्भिरास्यं भुंजानस्य मुहुर्मुहुः। विशुद्धरसने तस्मै रोचतेन्नमपूर्ववत्। अशितश्चोदकं युक्त्या भुंजानश्चांतरा पिबेदिति। किंच क्षीरं लवणेन विरुद्धं भवति। अत एव परमान्न भक्षाणानंतरं जलं पीत्वा सलवणपदार्थानि भोज्यानि। जलपानादिना दंतांतरगतसिक्थादीनां शोधनमपि भवति। पिष्टान्न भक्षणेतु द्विगुणं जलपानं कार्यम्। प्रकृति भेदेन जलपानक्रमः वा॥ ५ अ॥ "समस्थूलकृशाः भुक्त मध्यांतप्रथमांबुपाः" इति॥

## भोजनकालः

प्रायः भोजनद्विवारं प्रशस्तं मध्याह्ने रात्रौच। हिमवंतऋतौच रात्रिकालस्याऽधिक्यात् जठराग्नेश्च बलवत्तरत्वात् प्रातरेव गुरुभोजनंकार्यं। अतएव धनुर्मासे प्रातः स्निग्धगुरुभोजनाचारः विहितः। तदुक्तं सुश्रुते "अतीवायतयामास्तु क्षपाः येषु ऋतुषुस्मृताः तेषु तत्प्रत्यनीकाढ्यं भुंजीतप्रातरेवतु" वाग्भटेपि "अतो हिमेस्मिन् सेवेत स्वाद्वम्ललवणान् रसान्। दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः॥"

## निषिद्धान्नलक्षणम्

सु॥ ४६ अ॥ अचोक्षं दुष्टमुत्सृष्टं पाषाणतृणलोष्टवत् द्विष्टं व्युषितमस्वादुपूतिचान्नं विवर्जयेत्। चिरसिद्धं शीतमन्नमुष्णीकृतंपुनः। अचोक्षं = अपवित्रं=मलिनं वा। दुष्टं = अना वृतं विषादि संयुक्तं। उत्सृष्टं=भुक्तोत्सृष्टं। द्विष्टं=मनः प्रतिघाति। इममेवार्थमाह श्रीभगवान् गीतायामपि। "यातयामं गतरसं पूति पर्युषितं च यत्॥"

केचन आम्लेव रसं विशेषतः उपयुंजते विना मधुरं केचन विनाम्लं मधुरमेवोपयुंजते। तदुभय-मप्यसमंजसं। "नचैकरससेवायां प्रसज्येत कदाचन।" एकस्य रसस्य एकदोष शामकत्वं अन्येषां प्रकोप-कत्वंच स्वाभाविकं। षड्रससेवने च त्रिविधदोषाणां समत्वं भवति। अतो षड्रसोपयोगएव श्रेयस्करः। तत्रापि मधुरप्रधानैर्भाव्यं। "षड्रसं मधुरप्रायं नाति द्रुतविलंबितं" तदुक्तं रस्याः स्निग्धाः स्थिराः हृद्याः आहाराः सात्विकप्रियाः॥

## उत्तम भोजन लक्षणं

" सौमनस्यं बलं पुष्टिमुत्साहं हर्षणं सुखं । स्वादुसंजनयत्यन्नं अस्वादुच विपर्ययम् ।" कर्णाटक भाषायां " मुसुरि " " यंजुलु " इत्ययमाचरः अन्नस्य अपवित्रतादिभिः जिगुप्सापरिहारार्थं विहितः । तदुक्तं " शब्दरूपरसाः स्पर्शाः गंधाश्चापि जिगुप्सिताः । अशुच्यन्नं तदाभुक्तमपिह्यास्यं च वामयेत् ।" इति तेषां वमनादि जनकत्वन्निषिद्धत्वम् । इष्टैर्मित्रैर्बांधवैस्सह भोक्तव्यमिति शिष्ठानामाचारः सकारणकः। भोजनानंतरं गीतावाद्यादीनां श्रवणं गंधपुष्पमाल्यादीनां धारणमपि " इष्टैर्मित्रैस्समश्नीयाच्छुचिभक्तजनाहृतं । शब्दरूपरसान् गंधान् स्पर्शान्श्चमनसःप्रियान् । भुक्तवानुपसेवेततेनान्नसाधु तिष्ठति "। एभिरन्नं सम्यक् जीर्यतेत्यर्थः । एतैर्विरुद्धैः न सम्यक् जीर्यतेत्यर्थः । यथोक्तं । " ईर्ष्या भयक्रोधपरीक्षितेन लुब्धेन रुग्दैन्यनिपीडितेन । प्रद्वेषयुक्तेनच सेव्यमानमन्नं न सम्यक् परिणाममेति ।" अत एव शोकादिना अन्नस्य अजीर्णेन अतिसारो जायते । प्रसिद्धश्चायं शोकातिसारइति । एवं भयातिसारोपि । कथमस्य संप्राप्ति रिति चेत् । शोचतः पुंसः स्त्रियोवा बाष्पोष्मा अन्तःप्रविश्य वह्निं दूषयित्वा अतिसारं जनयति । अतश्च बांधवाः तद्दशायामागत्य मृतस्य गुणादिवर्णनद्वारा दुःखमाविर्भावयित्वा शोकबाष्पजलं नेत्रनासागलादि द्वाराबहिः निस्सारयंति । तदर्थमेव दशाहांतरे बंधुभिरागंतव्यमित्याचारः ॥

## एकादश्युपवासः

प्रायः आहारविहारादि व्यत्यासेन अन्नस्य किंचिदंशः अजीर्णसन्नामावस्थयास्थीयते । तस्यपाच नार्थं लंघनप्रयोजनकाः उपवासाः विधीयंते ॥

## विहारः

अत्र बहवोंऽशाः विवेयाः वर्तंते । तथापि विस्तरभयात्केचिदेवनिरूप्यते । स्त्रीणां ऋतु धर्माः । ऋतुकाले अनुष्ठीयमानाः स्त्रीणामाचाराः शिष्टाचारपरंपरा प्राप्ताः सशास्त्रीयाः सहेतुकाश्च । येतु तद् स्पृश्यतानिराकरणमुखेन तन्नियमावमाननं, तन्मताभिमानमूलकमज्ञान विलसनमेवेति प्रतिजज्ञे । सुश्रुते शा ॥ २ अ ॥ " ऋतौ प्रथममासात्प्रभृति ब्रह्मचारिणी दिवाऽस्वप्नांऽजनाश्रुपातस्नानाऽनुलेपनाऽभ्यङ्गन नखच्छेदनप्रधावनहसनकथनातिशब्दश्रवणाऽवलेखनाऽनिलायासान्परिहरेत् । अंजनादंधः, स्नानानुलेपनाद्दुःखशीलः, तैलाभ्यंगात्कुष्टी, नखापकर्तनात्कुनखी, इत्यादि ।" ततः शुद्धस्नाताचतुर्थेऽहनि अहतवासां समलङ्कृतां कृतमङ्गलस्वस्तिवाचनां भर्तारं दर्शयेत् ।" अत्र शुद्धस्नातां " इत्यनेन दिनत्रय पर्यंतं देहतः अशुद्धिः प्रकटीक्रियते तावत्पर्यंतं अनियमितकालं ऋतुस्रावस्य सत्वात् । तस्मादेव तासामस्पृश्यता । ऋतुरक्तस्तु दूषीविषरूपं । अतएव "प्रथमेहनि चंडालीद्वितीये ब्रह्मघातकी " इत्यादि । त्रिदिन पर्यंतं भर्तुर्मुखं न पश्येत् । चतुर्थदिनेतु भर्तुरेवमुखपश्येत् । "पूर्वंपश्येत्ऋतुस्नाता यादशं नरमङ्गना । तादृशं जनयेत्पुत्रं भर्तारं दर्शयेत्ततः ।" अतएवनूतन ऋतुस्नातानां पुरुषांतर दर्शननिरसार्थं गृहांतः स्थापनादिकं शिष्टैरनुष्ठीयते । किंचदिनत्रयपर्यंतं गमने नैव गर्भोत्पत्तिरिति सकारणकं वक्ति । "प्रथमेदिवसे ऋतुमत्यां मैथुनादनायुष्यं पुंसां भवति यश्च तत्राधीयतेगर्भः सप्रसवमानोविमुच्यते । द्वितीयेप्येवं । तृतीये असंपूर्णाङ्गो अल्पायुर्वाभवति । चतुर्थेतु संपूर्णाङ्गो दीर्घायुश्च भवति ॥

यत्तुकेचिदाहुः "युग्मासुपुत्राः जायंते दिवसेष्वन्यथास्त्रियः" इति शास्त्रनैर्भर्येण आचारग्रहग्रस्तानां गर्भाधारणमुहूर्तनिर्धारणं केवलं अर्भकाणामिव छांदासानां दुर्भरोयं मूढविश्वासः । नचात्र दरीदृश्यते क्वापि अज्ञदुर्ज्ञेपि प्राज्ञज्ञेयासबीजता । कुतोवा पुत्रैषिणामपि कन्यकोद्भवः । कुतोवा केषांचित् कन्यानामेवजननं । कया वा विधया भगवतो पूजा उपयुज्यते यदि दिवसाधीनमेवचेत् पुत्रादि जननं । किंतद्दिनं शरणं पंडजनयितॄणां । क्वास्तिदिनं युग्माऽग्मेतरत् । दृश्यंते खलु परशतशः जाताः षंडाः अस्मन्मंडलेषु । कोवासंबंधः दिवसानां पुत्रपुत्र्यादि वैचित्र्यस्यच ? अतो तदत्यंतं पंडितमन्यमानानां अवैदग्ध्याऽविष्करणमेव अविचारसहम्" । तन्न । अयि भो पाठकमहाशयाः ? अवधार्यतां भगवतो वासुदेवस्य सृष्टिवैचित्र्यं प्राज्ञानां दृष्टिवैचित्र्यं च सूक्ष्मतः । यदाहसुश्रुतः "शुक्रबाहुल्यात् पुमान् आर्तवबाहुल्यात् स्त्री साम्यादुभयोर्नपुंसकं" इति । भोजोपि "शुक्राधिक्यात् पुरुषः प्रमदो रजसोधिकात् । शुक्रशोणितयोः साम्यात् तृतीया प्रकृतिर्भवेत्"।इति । तथाच पुं स्त्री जननं प्रति शुक्रशोणितयोः बाहुल्यादिकमेव कारणमिति सिद्धम् । तर्हि का गतिः युग्मासु इत्यादेरितिचेत् । तत्रैवं समादधे विदेहः। "युग्मासु दिवसेष्वासां भवत्यल्पतरं रजः । संयोगं तत्र या गच्छेत् सा पुमांसं प्रसूयते । अयुग्मेषु दिनेष्वासां भवेद्बहुतरं रजः । संयोगं तत्र या गच्छेत् सा तु कन्यां प्रसूयते" इति । तथाच स्त्रीस्वाभाव्यात् युग्मेष्वल्प रजसः स्रावात् पुरुषस्य सर्वदाशुक्रस्रावस्यैकविधत्वात् स्वभावाद्यदिरजसः अल्पत्वं तदा शुक्रस्याधिक्यात् युग्मदिने पुत्रोत्पत्तिकथनं सयुक्तिकं भवतीति उभयमप्यविरुद्धं । सकारणकं च दिनाधीनं पुत्र्याद्युत्पत्तिरिति । किंच रोगादिभिरपि शुक्रशोणितानां क्षयः संभवतीत्यायुर्वेदप्रसिद्धं । यथा राजयक्ष्मनिदाने माधवनिदाने "अतिव्यवायिनो वापि क्षीणे रेतस्यनंतराः । क्षीयन्ते धातवः सर्वे" इति । तथाच यदा पुरुषस्य शुक्रक्षयः तेन युग्मदिने ऋतुगमनेकृते स्वाभाव्यात् शोणितस्य अल्पत्वात्, दुरदृष्टवशेन यदि समत्वं शुक्रशोणितयोः तद् पंडोत्पत्तिरिति सर्वसङ्गतमित्यवदातं ॥

एवं ऋतुमतीनां आर्तिक्यादिमुखेन गुडतिलपिष्टभक्षणञ्च अत्यंत सकारणकं । प्रथमरजःस्वलानां स्त्रीणां नैव तथा स्वरसतः रजोनिर्गमः सम्भवति, किंतु केवलं बिंदुमात्रदर्शनमेव । अत एव बिंदु दर्शनमालक्ष्य फलमपि सङ्गिरंते छायाशास्त्रविदः । एवंच गर्भमुकुलस्य सम्यक् विकासनद्वारा सम्यक्ः रक्तस्रावसाधकमेतदौषधप्रायमिति मन्वानाः गुडतिलपिष्टमेवं भक्षयंति । पौर्वा खलु आहार विहारैरेव निवारयंते स्म दुर्वारानपि रोगसंचयात् । एवं सीमंतोत्सवाचारोपि दोहदपरिपूर्त्यै निर्वहनीयः इति । "इंद्रियार्थांस्तु यान् यान् स्त्रीभोक्तुमिच्छति गर्भणी । गर्भाबाधभयात्तास्तान् भिषगाहृत्य दापयेत्" इति ॥

"आहाराचारचेष्टाभिः यादृशाभिः समन्वितौ । स्त्रीपुंसौ समुपेयातां तयोः पुत्रोपि तादृशः । देवता ब्राह्मणपराः शौचाचारहितेरताः महागुणान् प्रसूयंते विपरीतान्स्तु निर्गुणान् ।" तस्मात् स्त्रीभि आचारपरैर्भाव्यमितिसिद्धं ॥

स्वस्थलक्षणं "समदोषः समाग्निश्च समधातुमलक्रियः प्रसन्नात्मेंद्रियमनाः स्वस्थइत्यभिधीयते ।" स्वास्थ्यंचेदं लभ्यते आचारेण । "नित्यं हिताहारविहारसेवी समीक्ष्यकारीविषयेष्वसक्तः । दातासमः सत्यपरः क्षमावानाप्तोपसेवीच भवत्यरोगः । इत्याचारः समासेन यं प्राप्नोति समाचरान् । आयुरारोग्यमैश्वर्यं यशोलोकाश्चविंदति" ॥

# ॥ कवितापुष्पोपहारः ॥

पि. पि. सुब्रायोपाध्यायाः
साहित्य-ज्योतिष-कन्नड विद्वांसः साहित्यशिरोमणयः



श्री भारतान्तर्विलसत्यनर्घः
श्री तुङ्गभद्रासरिदाप्लुताङ्गः ।
मन्त्रालयः शान्तपवित्रमूर्तिः
श्रीराघवेन्द्रार्यनिवासभूमिः ॥ १ ॥

प्रत्यब्दमेषाहि पवित्रभूमिः
श्रीश्रावणे मन्त्रविदां द्विजानां ।
सम्मेलनात् सार्थकनामधेया
विराजते पावनमन्त्रभूमिः ॥ २ ॥

मिलन्ति शतशो जना गुरुपदारविन्दोल्लस-
न्मधुप्रवणमानसा अभिमतार्थसिद्ध्यैर्मुहुः ।
गुरूत्सवदिनत्रयं गुरुगुणानुसंकीर्तनै
र्निमेषति विमुक्तये भवति सद्गुरोस्सेवनम् ॥ ३ ॥

अथास्य संयमिवरस्य पदाब्जसेवां
कुर्वन् विभाति सुयमी सुयमीन्द्रतीर्थः ।
बार्हस्पतं पदयुगं परिषेवमाणो
यद्वद्विभाति दिवि पूज्यसुराधिनाथः ॥ ४ ॥

वर्षे वर्षे नूतनैर्वाहनाद्यै-
र्नूत्नां कान्ति वर्धयन्नुत्सवस्य ।
भक्तान् दूरादागतान् धन्यधन्यान्
कुर्वन् श्रीमान् संयमीशश्चकास्ति ॥ ५ ॥

श्रीराघवेन्द्रोत्सववर्णनेऽत्र
द्विजिह्वराजोऽपि कथं समर्थः ।
यद्वा द्विजिह्वाः कथमेकरूपे
गुणौघपूर्णे गुणदर्शिनस्स्युः ॥ ६ ॥

ज्योतिषि व्योम्नि भूमौ च सममेवोज्ज्वले भृशम् ।
विभात्युज्ज्वल योगीन्द्र राघवेन्द्र महो महान् ॥ ७ ॥

क्वचिद्बुधगणे मुहुर्विविधशास्त्रचर्चापरे
क्वचिन्मधुरतूर्य निस्वनभृते सदा प्राङ्गणे ।
यतीश्वरकरार्चितः ण्रयतीश्वरो वाहने
गजाश्वकमुखे स्थितो विजयते सुरेन्द्रोपमः ॥ ८ ॥

नानावर्णपटैरलङ्कृतरथे चित्रैस्सुमैश्शोभिते
रम्ये दीपरुचिप्रकाशितरुचौ बृन्दावने शोभने ।
स्थित्वा भक्तजनेषु पूर्णकरुणः श्रीराघवेन्द्रो बभौ
नानारत्नमये पुटे मणिगणैराकीर्णरूपो यथा ॥ ९ ॥

अज्ञान गाढतिमिरे बहुळे जगत्यां
दिङ्मूड सज्जनगणेषु कृपालुरेषः ।
सुज्ञानभानुरुदितः किमुकान्तिकान्तः
वृन्दावने सुममये सुजनाब्जकान्तः ॥ १० ॥

शनैः पुरस्सर्पति सुन्दरे रथे
बृन्दावने तिष्ठति योगिवन्दिते ।
बृन्दावनस्थो यतिरेव हि स्वयं
शङ्क्वे जनौघं परिपातुमागतः ॥ ११ ॥

लोके कालकरालवक्त्रकुहरे शान्ति विमा दुःखिते
घोराजिज्वलने दहत्यविरतं भूमिं मुहुर्भर्जति ।
शान्तंश्रान्तजनावलिं करुणया पश्यन् सतां सुस्थितिं
तन्वन् वन्दितराघवेन्द्रयतिराट् भाति प्रभुः श्रीरथे ॥ १२ ॥

श्रीराघवेन्द्रभानौ
लसतिरथे तत्पुरःकलापूर्णः ।
सुयमीन्द्रेन्दु
रात्रौ दिवा च कुरुते दिवातिशायोगम् ॥ १३ ॥

नायं यतिर्दिनकरो निशि भाति यस्मात्
नायं पुनर्हिमकरो निशि दृक्प्रतीतः ।
वाग्वज्रखण्डित कुवादिगणाचलोऽपि
नायं सहस्रदृगहो शतमन्युरिन्द्रः ॥ १४ ॥

नायं रथो नतजनस्य शुभे शरीरम्
बृन्दावनं च नमतां हृदयं मनोज्ञं ।
तत्र स्थितो यतिवरो जगतीतलस्य
तत्प्रेरको विजयते मनसस्समानः ॥ १५ ॥

तूर्यध्वाने दिशि दिशि पूर्णे
विद्वत्संघे मिलति निकामं ।
योगीन्द्रेऽस्मिन् रथमुपयाते
भक्तास्तूर्णं मुदमुपयान्ति ॥ १६ ॥

रसालमृदुपल्लवै र्विविधपट्टवस्त्रैर्वृते
मनोहररथे स्थिते मृदुलपुष्पबृन्दावने ।
महारजतमण्डपे विलसितं यतीन्द्रं मुदा
नमस्कुरुत सज्जनास्सकलवाञ्छितार्थाप्तये ॥ १७ ॥

सीतानाथ पयोद वेङ्कट धनेष्वाद्याक्षरैरङ्कितम्
मन्थानाचल रक्षकव्रतति होमाद्याक्षरैरंकिते ।
देवेष्टीश्वर मत्स्यराज मुखरैर्वर्णैस्समं शोभितो
ह्यर्चत्यर्चितपादपद्मयुगलः कुर्वन् सुधन्यान् जनान् ॥ १८ ॥

का वा विष्णुवधूः ? हतो दशमुखः केनोदकं भूतले ?
वर्षासूद्भवतीहकस्सकरुणश्शेषाद्रिवासो हरिः ?
अर्थ्यं किं विघ्नैः ? तपांसि कुरुते को यामिनीवल्लभः ?
तेषां प्राथमिकाक्षरैस्सुघटितं यन्नाम पायात्स नः ॥ २० ॥

श्रीराघवेन्द्र दयया जनया जगत्यां
शान्ता सती च सुखिता सुमतिश्चभूयात् ।
भूमिश्च सस्यभरिताभवतात्सुरूपा
वैरं नृपेषु विरता भवतु प्रकामम् ॥ २० ॥

## समर्पणम्

सुब्रायोपाध्यायः
कवितापुष्पोपहारमिममधुना ।
श्रीराघवेन्द्रगुरवे
निवेद्य सन्तुष्टमानसो भवति ॥

# ॥ गीर्वाणवाणी ॥

सुस्वरं गोपालकृष्णाचार्याः

म ॥ श ॥ प्र ॥ साहित्यशिरोमणयः

श्रीवेङ्कटेश्वर संस्कृत महापाठशाला तिरुपति



महत्यस्मिन् जगति विधात्रा निर्मितानां जन्तूनां मध्ये मानवमेव वपुः अतिदुरासदमित्यत्र प्रत्यक्षमेव प्रमाणमिति वदन्ति विदन्तो जनाः। यतश्च जन्मनस्तस्य दौर्लभ्यं करतलगतमिव बदरं दरीदृश्यते। इदं हि शरीरं बहोः कालादनन्तरं अनेक जन्मान्तरोपार्जित सुकृत विशेषेण वयमाप्नुवाम। अत्र च विषये पद्यमिदं प्रमाणपदवीमधिरोहति "दुर्लभो मानुषो देहः"। इति। लोके हि केचिज्जन्तवः क्षुद्रतमां तनुमवाप्य पादैरस्माकैस्समुत्सारिताः तत्र तत्र लुठन्ति। अपरेतु असत्तः महतीमप्यवाप्याकृतिं बलेनाप्यस्मानतिशेरते इतरे। केचन बलेन, आकृत्याच तुलयन्त्यस्मान्, अन्ये केचन जन्तवस्तु विजने वने धैर्येण सञ्चरमाणाः तत्र दैवदुर्विपाकेन समागतान् मानुषान्, उत तत्रैव सीदतः दुर्बलान् मृगान्वा भक्षयन्तः जीवन्ति। एवं गणनाविहीनाः वर्तन्ते भुवि प्राणिनः। तथा वर्तमानानामस्माकञ्च तरतमतया वर्तमानं किमिति चेत् ज्ञानमेव। केचन एवं वदेयुः "विद्यते हि पश्वादीनामस्माकञ्च आहारादिषु ज्ञानं अतस्तेपि ज्ञानवन्तः, वयञ्च" इति। नतत्समीचीनं वचनम्। भाविफलानुरोधिषु कार्येषु कर्तव्यमिदम्, नकर्तव्यमिदमिति कार्याकार्यविवेचनधीर्येषाम्, त एव ज्ञातारः। पश्वादीनान्तु इदं कार्यम्, इदं नकार्यमिति नैवास्ति विवेकः। पश्यत, पश्वादयः पुत्रभावं प्राप्ता अपि मातरमप्यगणयन्त एव तया साकं रन्तुमप्युद्युञ्जते। इतोप्यधिकतरं किमस्त्यकार्यम्? वयन्तु "मातृ देवो भव, पितृ देवो भव"। इति श्रुत्यर्थं सम्यगनुसरन्तः मातरं सम्यगर्चयामः। तस्मादस्माकं तेषाञ्च महदस्ति तारतम्यमित्यत्र न कोपि संशयः। ज्ञानहीना मानवा अपि पशुदेश्या एव। किञ्च यथा हस्तमस्मदीयमलङ्कुरुते कटकम्, पादौच भूषयतः हंसकौ कुण्डलेच मण्डयतः श्रवणे, कटिं भूषयति काञ्ची, अङ्गदाभ्यां शोभते स्कन्धावपि, तिलकमप्यलङ्करोति फालदेशम्, इत्थं तानि तानि भूषणानि तत्तदवयवानां शोभामावहन्ति। तथा अनश्वरमात्मानं ज्ञानमेव भूषयति। तच्च ज्ञानं शास्त्राधीनमेवेत्यभियुक्ताः। अत एवाहुः।

अनेक संशयच्छेदि, परोक्षार्थस्य दर्शनम्।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः॥

इति। अस्याः कारिकायाश्चायमर्थः। अनेकेचते संशयाश्च अनेक संशयाः। तानुच्छिनत्तीति अनेक संशयोच्छेदि। किञ्च अनेकेषां संशयानुच्छिनत्तीति अनेक संशयोच्छेदि। यश्च भावी भूतोवा अर्थः तं सर्वमपि शास्त्रेणैव पश्यन्तीत्यहो शास्त्रलोचनस्य अदृष्टपूर्वा अश्रुतचरी च कापि लोभा। अत एवाह महाकविः कालिदासोपि—कामं कर्णान्त विश्रान्ते विशाले तस्य लोचने। चक्षुष्मत्तातु शास्त्रेण सूक्ष्मकार्यार्थदर्शिना। इति। तच्च शास्त्रं कापिल काणाद पातञ्जल पाणिनीयादिभिः भिन्नं दरीदृश्यते, शास्त्राणि सर्वाण्यपि गीर्वाणवाणीपरिज्ञानमन्तरा नैव सुबोधानि। अतः शास्त्रज्ञानसम्पादनेच्छुभिरवश्यं

संस्कृतभाषायां परिचयः सम्पादनीयः । यद्यपि संस्कृतान्ध्रद्राविड कर्णाटादयः बह्व्यः भाषाः सुमुपलभ्यन्ते तथापि सर्वासामान्ध्रादिभाषाणां प्रकृतिभूता संस्कृतभाषैव । अस्याएव संस्कृतभाषायाः अन्या भाषास्समुद्भूताः । अत्र केचिद्दुराग्रहग्रस्ताः यथायथमधरोत्तरमाभाषमाणाः ग्रीकु भाषामेव प्राचीनामाकलयन्ति । अन्येच लाटिन भाषामेवाग्रगण्यां गणयन्ति अपरेत्वान्ध्रभाषामेव प्राचीनामभिप्रयन्ति । इतरे तु द्राविडीमेवाद्यामभिमन्वते। एवमेते स्वयं मुह्यन्तः परानप्युन्मोहयन्तीत्यहोकलेःप्रभविष्णुता। विचारपदवीमधिरोपितन्तु हृदयं नैतेषां भाषितानि सांप्रतमाकलयन्ति । यतस्तानि निर्मूलानि निर्युक्तिकानीति निश्चप्रचमेव । संस्कृतभाषातु सर्वासां भाषाणां मूलभूता । यतः इयमेव सृष्ट्यारंभे प्रथममवातरत् । इतराः पुनः संस्कृतभाषामुपजीव्य ततः अर्वाचीने काले प्रवृत्ताः इयं च वस्तुस्थितिः पुराणादिपरिशीलनेन सम्यग्विशदीभवेद्धीमताम् । सर्वप्रमाणमूर्धन्याः सकल ज्ञानविज्ञान रत्नाकरायिताश्चतुरोपिवेदाः इमामेव गीर्वाणवाणीमवलम्बन्ते । तथा श्रुतिमूलकत्वेन अभिनन्दनीयाः स्मृतयोपि देवभाषामेवाश्रयन्ते तदनुसारीणि विश्वतोमुखानि पुराणान्यपि पुरातनीं गैर्वाणीमेवोप जीवन्ति । प्राचीनाः महामहिमशालिनवाल्मीकिबादरायणप्रभृतयः संस्कृतभाषायामेव रामायणमहा भारतादीन्प्रबन्धानकार्षुः। नत्वान्ध्रभाषायाम्। नापिद्राविडादिभाषासु । किञ्च आन्ध्र द्राविडादि भाषाणां देशकृतः आन्ध्री, द्राविडी, कर्णाटकी, इति व्यवहारः । न तथा देशकृतः संस्कृत भाषायाः व्यवहारः । एवं स्वस्वरूपं बहुधा दर्शयित्वा जाग्रतीनां भाषाणां मध्ये कीर्तनीयतामर्हति भगवतीयं गैर्वाणीतिविपश्चितामपश्चिमोनिश्चयः। अत एवेयं संस्कृतभाषा अन्यासां भाषाणां मातृभूतेति वाक्यं नार्थवाद पदवीं गाहते । इयं हि भाषा भाषान्तरविलक्षणैः प्रकृति प्रत्ययादिसंस्करणैस्संस्कृतत्वात् संस्कृतभाषेत्यन्वर्थतां प्राप्नोति ॥

इयंच संस्कृतभाषा, आर्यभाषा, देवभाषा विबुधभाषेत्यादिना आर्यादिपदपूर्वकभाषाशब्देन व्यवह्रियते। तत्र किं कारणमिति विचारयतां बहूनां बहवः आशयविशेषाः प्रस्फुरंति । तथाहि । हिमाद्रिमुत्तरेण स्थितादेश्याखण्डाद्भरतखण्डं प्रति समागमनात्पूर्वं इयं भाषा आर्याणां व्यवहारसाधनतां गता । अतः अस्याः आर्यभाषेति व्यवहारः इति केषाञ्चिदाशयः । एवं पश्याखण्डादुत्तरस्यां दिशि स्थिते मेरौ सर्गादिकाले कृताधिवासैर्देवैः व्यवहृतत्वाद्देवभाषेतिकेषांजिदाशयः । अग्निहोत्रसन्ध्यावन्दनादिषु वैदिकेषु कर्मसु हविष्प्रदानस्तवनादिक मनया भाषयानिर्वर्त्यतइति देवभाषेति केचन मन्यन्ते । दीव्यन्ती भाषा देवभाषेति केचिदाशेरते । त्रिष्वपि लोकेषु देवानां प्राधान्यात् देवादि शब्दाः प्रधानवाचकाः । तथाच देवानां श्रेष्ठानां आर्याणां भाषा देवभाषेति केचिदीहन्ते । लौकिकवैदिकसाधारण्येन भाषायामस्यां अनेकस्थलेषु इतरभाषातः विलक्षण संस्कारस्य दृश्यमानत्वात् संस्कृतभाषेत्यभिधानं लौकिक वैदिकयोस्समानमितिमन्यामहे । एतादृशीयं महामहिमशालिनी संस्कृतभाषा सर्वैस्सम्यगभ्यसनीयेति प्रार्थ्यते ॥

श्रीमत्तिरुपति नगरी संस्कृतशालापिपाश्रिता दत्तः ।
गोपालकृष्णनाम्ना भावोयं भवतु सुमनसांहृद्यः ॥

# ॥ ताराहारः ॥

रचयितारः—" साहित्यविद्यानिधयः "
पंडिताः दडेसूगूरु वेङ्कोबाचार्याः भाग्यनगरम् ॥



श्रीमद्ब्रह्मेन्द्ररुद्राद्यखिल दिविषदावन्दिताङ्घ्र्यम्बुजो यो
यस्यास्यायत्तवेणूदितमधुररवानन्दितो स्तोकलोकः ।
यत्सौन्दर्यामृताप्यायितनयनतृडुत्तुङ्गशृङ्गार भङ्गी-
तन्वङ्ग्यालिङ्ग्यमानस्स जयति यमुनोदारतीरे विहारी ॥ १ ॥

उद्यन्मूर वरपिञ्छधरं सगोपं
गोवत्सवृन्दविलसन्मुरलीकराग्रम् ।
गोवर्धने परमसुन्दरमन्दहासं
श्रीबालकृष्णमनिशं मनसा स्मरामि ॥ २ ॥

स्वयं यः प्रह्लादव्यसनपटलीकृन्तनपटु-
श्चिदानन्दादिश्रीगुणमणिगणैर्भूषिततनुः ।
सदाभक्तापायाम्बुदनिकर झंझानिलनिभः
स दद्यादद्यश्रीपतिरखिलसौख्यं नरहरिः ॥ ३ ॥

यः पाथोजभवाचलाधिपसुतानाथेन्द्रसम्प्रार्थितः
पातुं सन्मुनिवृन्दमादरधियैवात्रावतीर्णो हरिः ।
यद्वाणी समुदीरिताहि विशदातत्तत्पुराणावलिः
सः श्रीसत्यवतीसुतो दिशतु नो हृद्यां सुविद्यां सदा ॥ ४ ॥

सानन्दाश्श्रीरमन्दाःकलयतु मम वाङ्मानसप्रेरयित्री
पीयूषान्धोङ्गनासन्नुतललितपदाम्भोरुहाम्भोरुहस्था ।
श्रीमद्गोविन्ददेवाभयदभुजपरिष्वङ्गिताङ्गीकुरङ्गी
नेत्रापाङ्गैरनङ्गप्रभुवरजननी सर्वदा पातु वः श्रीः ॥ ५ ॥

यन्नेत्रापाङ्गपात्रं जगति हि मनुजः कीर्तिसौभाग्यवृध्या-
नन्दानेक प्रतिष्ठाद्युतिसुगुणगणैस्सम्भृतस्तूयमानः ।
यत्सौन्दर्यामृताम्भो निधिविधुरखिलाम्नायवेद्योऽब्जनाभः
दिश्याच्चस्सर्वसिद्धिं त्रिजगति सुरसीमन्तिनीसेव्यमाना ॥ ६ ॥

श्रीवेदव्यासपादादधिगतनिखिलब्रह्मविद्यान्सु सारः
दुर्व्याख्यातानि सूत्राणि च कुमतिभिरित्याशयेनावतीर्णः ।
तत्तद्दुर्भाष्यजालं स्मृतिनिगमगणैः खण्डयन्सत्प्रमाणैः
सोऽयंमेऽभीष्टसिद्धिं वितरतु जगदानन्दतीर्थो मुनीन्द्रः ॥ ७ ॥

टीकाकृज्जयतीर्थवर्य यतिराट् श्रीपादराजव्रती
श्रीव्यासार्य सुवादिराज विजयीन्द्रार्यादयो योगिनः ।
मे मेधां वितरन्तु मध्वयतिराड्व्यासदुद्यानस-
त्प्रज्ञासत्सरसीविहारचतुराश्श्रीमन्मरालाइमे ॥ ८ ॥

चतुःषष्टिकलाम्भोधि शारदाकेन्दुसन्निभः ।
सर्वदुर्वादिगर्वघ्नः विजयीन्द्रो विराजते ॥ ९ ॥

श्रीमत्साहित्यसाम्राज्य प्रणेता प्रोल्लसद्यशाः ।
द्वैतत्रय्यन्तसाम्राज्यसिंहासन विराजितः ॥ १० ॥

वसुधातलविख्यात सुधासारविवेकिनाम् ।
सुधियां च धियां शास्ता श्रीसुधीन्द्रो विराजते ॥ ११ ॥

महावैदुष्यवैराग्यश्रुत्व्यानर्घ्यगुणान्वितः ।
यत्पदाम्भोजसम्भूतः राघवेन्द्रो जगद्गुरुः ॥ १२ ॥

श्रीमूलरामपदपङ्कजनित्यसेवा
जम्बूनदाश्रयबलोर्जितकान्तकीर्तिः ।
श्रीमत्सुधीन्द्रजलधेर्जनिमान्महीयान्
चिन्तामणिर्विजयते भुवि राघवेन्द्रः ॥ १३ ॥

जगन्मातुर्नेतुस्सततपरमानुग्रहबला-
दिदं राज्यं प्राज्यं समधिगतमुद्दामविभवम् ।
प्रबन्धव्याख्याकृद्बुधजनशरण्यो हि नितरा-
मसौ श्रीमन्मन्त्रालयमुनिवरेण्यो विजयते ॥ १४ ॥

भवत्पादाम्भोजद्वय भजनभाजं सुमहिमा
सुतं सौख्यं श्रेयस्सपदि दिशति श्रीमिति कथा ।
किमाश्चर्यं श्रीलो हृदयसदनस्थस्तव सदा
महिम्नो भूम्ना श्रीर्भुवि बहुलभव्याय भवतु ॥ १५ ॥

तत्तज्जन्मान्तरीय प्रबलतर कुकर्मौघ विध्वंसनाद्या
सेवन्तस्तो सुवृन्दावनमनुदिनमानन्दभाजो बभूवुः ।
राराजद्राघवेन्द्रानिलमत सुतपोराजधानीन्द्रनूनम्
कोसावासेतुसीताचलमति महिमा सार्वभौमस्त्वदन्यः ॥ १६ ॥

सप्तत्रिंशत्प्रबन्धप्रणयन चतुराचार्य सिद्धान्तशूरः
दुर्वाग्गर्वाद्रिसम्भेदननिगमलसन्मानदम्भोलिशाली ।
राजद्राजीवनाभामित सततमहानुग्रहोदग्रकीर्तिः
बाभाति श्रीसुमन्त्रालयनिलयमुनीराघवेन्द्रोयतीन्द्रः ॥ १७ ॥

यावद्वेदलसत्समीरसपयप्रज्ञापयोदायिनी
पूर्णायुस्सदपत्य सौख्यविलसत्सम्पत्समुन्नाहिनी ।
श्रीमन्त्रालयवासिनी बुधजनश्श्रेयः पदप्रापिणी
सेऽयं कामगवी भुवीहभवतून्निद्राय भद्राय वः ॥ १८ ॥

व्याख्याविख्यातकीर्तिर्भजकजनचयोध्दारकारुण्यमूर्तिः
स्फूर्तिश्चान्यादृशीते निखलनिगमषड्दर्शनादिष्वजस्रम् ।
राराजद्राघवेन्द्राप्रतिहत विभवौदार्यगाम्भीर्यशाली
प्राचीनाचार्यपीठप्रभुरखिलगुणैः कोस्ति धन्यस्त्वदन्यः ॥ १९ ॥

द्वैतत्रय्यन्तशास्त्रप्रवचनपटवः प्रोल्लसद्वीप्पर्णी याम्
दृष्ट्वैवान्तर्निगूढाशयमतिविशदीकृत्य सद्बाधनीन्ते ।
उत्साहानन्दसान्द्राः कियदुपकृतिरित्यामनन्तो हि भक्त्या
दद्यादद्यानवद्यां श्रियममलधियंहृद्यविद्यां यतीन्द्रः ॥ २० ॥

कुत्रालभ्यमहामनोरथमपि क्षिप्रं हि सप्रश्रयं
यद्वृन्दावनसेवयैवसुजनाभक्त्या लभन्ते ध्रुवम् ।
प्राक्प्रह्लादनिजावतारसुकृत व्यूहोपयोगायवा
श्रीमन्त्रालयमागतोहि जगदुद्धारय धीराग्रणीः ॥ २१ ॥

अद्याप्यग्रेसमुद्यद्विभवतनयवैदुष्यमिष्टान्नदायी
भूयश्श्रेयः प्रदायीहालवमतिमतग्रन्थतत्त्वानुयायी ।
धीरैराराध्यमानः जगति जयजयध्वानजेगीयमानः
भक्तोद्धारप्रवीणो मुनिवरभवदारूढपीठप्रभावः ॥ २२ ॥

सुप्रज्ञेन्द्र सुतीर्थपावनतयः कीलालधेरुद्गतः
राराजत्सुमनोगणं निजसुधागोभिस्सदा प्रीणयन् ।

संसेव्योलसदोजसाकुवलयोल्लासप्रदो भूतले
भाति श्री सुकृतीन्द्रतीर्थयतिराडिन्दुर्बुधैर्वन्दितः ॥ २३ ॥

तेजश्रीभागधेयाश्रितबुधसहजौदार्यधैर्यप्रतापैः
कास्तद्वासोरविन्दासनमितिगदितं सुप्रसिद्धप्रभावम् ।
स्थानं नाद्यापिलब्धं किमितिनिगदितं ब्रह्मणा तर्हि शश्व
द्वासः श्रीराघवेन्द्रप्रबलतरपदस्थे सुशीलेन्द्रतीर्थे ॥ २४ ॥

श्रीराघवेन्द्रयतिराडनघाज्ञयाश्रीवृन्दारकेन्द्रनगरादवतीर्य योगी ।
उद्धर्तुमेवकिलभूतलमागतोसौ श्रीमत्सुशीलयतिपुङ्गवमेव मीडे ॥ २५ ॥

दिव्यादृष्टं च तेजोनिधिरकथयदम्भोजसम्भूतमत्रा-
स्पृष्टंकिन्त्वावयोरित्यतिविमलपदं वाक्पतिः प्राह तोषात् ।
रम्भासम्बन्धरक्षोभयविकलहृदंतत्कुशीलं सुरेन्द्रं
त्यक्त्वा श्रीराघवेन्द्राङ्घ्र्यनवरतरते श्रीसुशीलेन्द्रतीर्थे ॥ २६ ॥

सुशीलेन्द्रकर प्रोद्यत्पूतयाथोजसम्भवः ।
सुव्रतीन्द्राख्यकर्मन्दी विद्वदम्भोजभास्करः ॥ २७ ॥

तुङ्गातरङ्गसम्पूतमन्त्रसिद्धिप्रदे शुभे ।
राजतेसैय्यमीन्द्रोयं क्षेत्रे मन्त्रालयाभिधे ॥ २८ ॥

सद्यश्श्रीसुयमीन्द्रयतिराणिमष्टान्नदानोत्सुकः
राराजद्गुरुराघवेन्द्र चरणाम्भोजद्वयेन्दिन्दिरः ।
संपूर्णायुरनामयाधिकदयादाक्षिण्यविद्वद्गण-
प्रीतिप्रोच्चगुणैर्वशीकृतजगञ्जीयाच्चिरं भाग्यभाक् ॥ २९ ॥

श्रीमद्राजाधिराज गुरुराजसार्वभौम श्रीमत्परिमळाचार्य गुरुवराधिष्ठित दिग्विजयविद्यासिंहासनाधीशश्रीमत्सुशीलेन्द्रतीर्थकरारविन्दसम्भूत श्रीमत्सुव्रतीन्द्रतीर्थ श्रीचरणकरुणाभरण बुधगण बहुमानवितरणधुरीणसद्विद्यापारीण श्रीमत्सुयमीन्द्रतीर्थश्रीपाद श्रीसर्वज्ञमहापीठपरम्पराप्राप्त श्रीमूलराम पदपङ्कज चञ्चरीक श्रीगुरुसार्वभौम पीठारोहण प्रभृति द्वादशवर्ष पूर्तिप्रयुक्तपट्टाभिषेकमहोत्सवोत्सुक विद्वत्कवयः श्रीविजयशुभाशासन पूर्वकं सकलदेवतासार्वभौमं श्री श्रीनिवासं श्रीमद्राघवेन्द्र गुरुसार्वभौमं वयमधुना भाषितमधुना संप्रार्थयामः ॥

शुभंभूयादितिशम्

# ॥ पूर्णबोधार्यचंपू ॥

लेखकाः—कविरत्न कृष्णमूर्त्याचार्याः
कविभूषणं, मैसूरु



आर्यातीललितैः पदैश्चमधुरैर्य कर्णजाहेक्षणा प्रांचूतीसरसैः कटाक्षविभवैर्मदाक्षमन्दस्मितैः ।
साकं साकमलामलां कलयते यस्याब्जकण्ठेस्रजं विश्वं त्राणपरायणस्सभगवानैक्ष्वाकवःपातु वः ॥ १ ॥

कल्याणोपलसद्धामा भार्याविभवविश्रुतः ।
यः कविन्द्रागमैः श्लाघ्यः श्रीरामो जुष्यतां जनैः ॥ २ ॥

गोकुलाभ्युदये सक्तं निर्जिताक्षक्रियादरं ।
कञ्चिन्निधिमपेक्षार्हं उदयात्साधुकलापकं ॥ ३ ॥

ननिर्वृतिर्लोकविनिन्दितानां कृष्णग्रहग्रस्तनृणां लघूनाम् ।
ननिर्वृतिर्लोकविनिन्दितानां कृष्णग्रहग्रस्तनृणां लघूनाम् ॥ ४ ॥

कयाधुनाथस्यदितं दिताहितः करिष्यतीशो पिधया कयाधुना ।
इतीव पश्यत्स्वमरेषु सर्वगो यआविरासीन्नरकेसरीभवन् ॥ ५ ॥

कौतस्कुताघौघसमुन्नताद्रेर्विदारणे दारुणवज्रमूर्तैः ।
रक्षोभरक्षोभकरैर्नखाग्रैर्हर्यक्षचक्षुस्सभयं भिनत्तु ॥ ६ ॥

अनंतामरमौळीनामनंताय महासुरः ।
अनन्ताय सुतं द्वेष्टीत्यवधीन्नखरैःप्रभुः ॥ ७ ॥

विभक्तिप्रत्ययःपेतान्प्रबन्धानिव बन्धुरान् ।
जनाश्चायंजनोभूयस्त्वामनंताय ते श्रियः ॥ ८ ॥

अणोरणीयान्महतोमहीयान् गुरुर्गुरूणां प्रभवःश्रुतानाम् ।
यो वासवीसूनुमहं वृणे तं कविं पुराणं त्वनुशास्तितारं ॥ ९ ॥

अद्धानद्धासुगुणैर्विशुद्धा हृद्यानवद्यश्रुतिसारवेद्या ।
सरस्वतीसत्यवतीप्रसूतेः सारस्वतं सम्पदमातमोतु ॥ १० ॥

अपाश्रये रंजितमंजुळान्जलिर्विनिर्यदानन्दजलोक्षितेक्षणः ।
रामेधिरामेघ्विमेधनीयां करोत्वयं काण्डमृगप्रकाण्डम् ॥ ११ ॥

किमस्तत्कनकाचलेन महता किंतेन कल्पद्रुणा किंधेन्वा किमु नाकलोकमणिना स्थानान्तरस्थायिना ।
अत्रान्यत्र फलाप्तयेस्तु बलवन्मर्त्यैरमर्त्यैरपि स्तुत्यं नित्यकृपावलोकनधनं श्रेयाङ्गसेनीपतेः ॥ १२ ॥

आविर्भावमुपेत्यको कलिकलाकल्लोलमूलाकुलं यश्चित्तं विमलीचकार विदुषां नारायणाज्ञाकरः ।
पाराशर्यसपर्ययार्जितमतोमाङ्गल्यभाष्यं सतां तेने सिन्धुरिवामृतं मुनिरिह स्यात्पूर्णबोधाभिदः ॥ १३ ॥

मन्त्रागारेजगतिविदिते सेवकानां सुरद्रुः सुप्ते मय्यानतजनपरित्राणकर्मण्युदारः ।
स्वप्नेदृष्टस्सुहसितमुखो मामुदीक्ष्य स्थितो यस्सोयंजीयात्कनककपिशो राघवेन्द्रः कृपालुः ॥ १४ ॥

सर्गोप्ययं भूतनृजोनिसर्गाच्छुचिर्महिम्ना बहुना प्रतीतः ।
मन्त्रालये मांत्रिकमौळिमान्यः प्रसीदतु श्रीगुरुराघवेन्द्रः ॥ १५ ॥

परिमळघनवाणी पावनीव त्रिवेणी बहुविषयविचाराकर्णपीयूषधारा ।
जयमुनिहृदयज्ञा जातु दोषानभिज्ञा विहरतु रसनाग्रे राघवेन्द्रस्य जाता ॥ १६ ॥

देवानां प्रियमुज्झितुं कुतुकितायष्टुं चदेवप्रियान् रामे प्रेमयुजां सदागतिजुषां श्लाघास्वमोघाशयाम् ।
सन्तुष्यन्त्वनयांबुधा इति धिया पूर्णप्रबोधाभिदामेनां मनविकृष्णसूरिरधुना चंपूकृतिं सृज्यते ॥ १७ ॥

कानीनमौनिपरिकल्पितसूत्रसार्थमर्थापयन् जगति यः सुपथं वितेने ।
तस्यानिलस्य सकलागमसारवेत्तुर्वाणीविलासमनुसृत्य कृतिं करिष्ये ॥ १८ ॥

नमे वाणीश्रेणीफणिफणितिसंस्कारसुरभिर्नकाणादाभिज्ञा न च निगमसारैः परिचिता ।
सकाव्यालङ्कारव्यवसितिबलाच्चापिचतुराकथाकारं शक्ता रसिकहृदयाकर्षणविधौ ॥ १९ ॥

मात्सर्यदूरहृदयाः सदयावलोकैः स्वारस्यमत्र किमति प्रविचारयन्तः ।
शास्त्रेषु शिक्षितधियो गुणगृह्यवोये बद्धांजलौ सविनये दयिनो मयि स्युः ॥ २० ॥

कदाचित्कश्चित्सुमतिर्नाम वसुमतीसुरः पूर्णबोधार्यमार्यजनप्रियमादिवर्णवर्णनीयगुणं निर्वर्ण्य अयि महन् यदिदं दर्शनमाकस्मिकं खलु भवदीयं काकताळीयं आवयोर्दैविकस्समावेशः सन्तिविषयाः कतिकति बहुना कालेन सङ्गते भवति विचारणीयाः विषयग्रहनिग्रहजाग्रद्भिरादरणीयाः जाने तानद्य सामयिकान् ॥

पूर्णबोधः—सुमते एहि तर्ह्येतर्ह्येवावकाशः । यामः संजवनमासाकीनं इति वस्त्यमेत्यत्रास्तीर्णकट मध्यासयन् स्वयमपि समीपे दारुमयविष्टरमधितष्ठौ ॥

सुमतिः—उपविष्टः शिपिविष्टेष्टं पूर्णबोधार्यमभिवन्द्य भो महन् उष्णकालभवायासस्सोढुमभाढ इत्यवदत् ॥

पूर्णबोधः—सुमते गृहाण ताळवृन्तकं व्यजनिमदमौशीरस्यूतं सलिलसेकशीतलितमित्याख्याय तदनु देहळीन्यस्तमसितजातुर्षांमषीमानीय तयात्रामषीभीरेखाबीराकलितायां कस्यांश्चित्पत्रिकायाम् ॥

उष्णतालभवायासाः भूरुहारामसंश्रयात् ।
कदापि च न बाधन्ते विश्वासोत्र बहुस्सताम् ॥ २२ ॥

एवं श्लोकमेकं विलिख्यास्मै ददौ ॥

सुमतिः—अवागामि न मयात्र चित्रं स्वाभाविकार्थस्फोरके ॥

पूर्णबोधः—(विहस्य) सुमते प्रत्यग्रप्रबन्धप्रबन्धूतप्रौढोस्यः अनाघ्रातसाहित्यगन्ध इति भाषसे त्वदभिहितवाक्ये विद्यमानार्थविशेषो मया तु मनितः । अतः कथंकार मर्थापयेः श्लोकमास्माकीनं श्लेषदृष्टिरावश्यकीदृश्श्लोके ॥

सुमतिः—भवांस्तु षड्दर्शनीसौभाग्यशालीहि यत्किञ्चिच्छास्त्रावगतिमानहङ्किल कथमावयो स्तुला स्यात् । अवसित इदानीं यो मया निगदितवाक्यार्थविशेषः व्यमर्शि भवदीयश्लोकार्थविशेषश्च रसज्ञमान्योयं बद्धर्थबन्धुरःस्वारसिकः । अर्थविशेषो भषज्ञाषणेन कादाचित्कः ॥

पूर्णबोधः । किमद्य मया भवितव्यमावेदयस्व ॥

सुमतिः—सूर्यास्सूर्याहते शास्त्रे परप्रीतिप्रदायिनि ।
एवमाश्वास्य मे वृद्धो देहादुपरतःपिता ॥ २३ ॥

पू ॥ स्पष्टमाख्याहि मानसिकं ॥

सु॰ ॥ अजर्याचारधुर्यस्य भवतः सङ्गतमजर्यं स्याद्विविदिनोः परतत्वं ननु ॥

पूर्ण ॥ (स्मित्वा) सुमते त्वमसि नैयायिकः कृष्णातीरे त्वया कृतवाक्यार्थानुवादमश्रौषं । सुगमः शास्त्रावगमः त्वया सम्यवग्व्यस्यः ॥

सुमतिः ॥ शास्त्रान्तरे व्यवसिता मतिर्मदीया पूर्णबोधागमरहस्ये कथंकारं व्याप्रियेत गुरोरनु मतिमृते व्यवसितमतिरनुमतिसत्येव ॥

सुमतिः । दिनपरिक्षयेहस्सन्ध्याविधिमनुष्ठातुमायतीगवेश्मामाद्बहिर्विद्यमानस्य अभ्रंक स्य सनिम्बपिप्पलतरोर्वेदिकामधोधः स्थितायाः, द्विपुरुष्याः, वाप्यास्तटीमुपर्युपरि पुस्तमयीष्वपि स्त्रीव्यक्तिषु मास्माविश्वसीः इति संस्थूलाक्षरैर्लिखितशिलातले उत्तरीयं विन्यस्य प्रक्षाल्यपाणिपादमपउपस्पृश्य नाविकः जानुद्वयसपयसान्वितसोपानोपरितनस्सन्ध्याधिदेवतामभिवन्दे ॥

पद्मिनितु मस्यकरपरामर्शात् श्रीमती जाता तस्मिन्विभावसौ विपरीतार्थतां गतवति तदव-लोकनकुतूहलमपास्येव साचीक्रियमाणमुखी बभूव ॥

कुमुद्वतीतु दोषाकरस्य कराश्लेषात् पिकस्वरमुख बभूव ॥

नीलोत्पलेषु शिलीमुखचक्रं चक्रमेविहर्तुमत्यर्थं ॥

ततस्ततः प्रस्थाय जनपदे श्रृङ्गाटतस्य नेदीयुसिविद्यमानस्य कुड्मलीकृतकरारविन्दद्वंद्वस्य श्रीगन्धवहनन्दन मन्दिरमससाद ॥

तत्र तिष्ठद्भौसमूहिरे वहीयांसो विद्वांसः प्रवयसः पुमांसः पुरन्ध्री जनाश्च ॥

तदागतः सिद्धार्थ सार्थकीर्तनीय वाग्झरीजरीजृम्भमाणः कश्चिद्विपश्चिदपश्चिमः वाङ्मुख चारुगीरनवाङ्मुखः सनूकार्णवेष्टिकमबहिर्लोममाननमनुवीक्ष्य स्तोस्स्वस्य समविकेतत ॥

सतूत्थाय संसारव्यामोहव्यावृत्त कुतूहलानामस्वस्तनवृत्तितर्षाणां हर्षवर्षिणीकानीनवन्नु-सुधासारः क्षितिक्षितं परिक्षितमवसुखतीर्थतीर्थसारः साधकजनमानन्दयतिहि तस्मात्तद्विषय एवैदानीमस्मत्तातपादैरुपन्यस्यत इत्युदीर्य संपुटीकृत करयुगः सभ्यासभ्य वन्दत ॥

सविद्वान् उत्थितः —गुरुत्यागे भवेद्रोगः मन्त्रत्यागे दरिद्रता ।
गुरुमन्त्रपरित्यागे तारवं नरक व्रजेत् ॥ २२ ॥ इति गुरुन्वन्दित्वा तदन्विदमवदत् ॥

निद्राहारमैथुनभयमात्रवेदिनस्तिर्यग्जंतवः तदपेक्षयासु बहुदुर्लभं मानुषत्वं तत्रापि ब्राह्मण्यं तत्रापि शास्त्रज्ञता तत्राप्यास्तिकत्वं तत्राप्यनुष्ठानपरत्व अत साधनार्ह देहंगतः सदागति दर्शनासक्त्या परीष्टि परितुष्ट गुरूपदिष्ट मन्त्रमूर्ति ध्यानजन्य ज्ञानेन नित्यानन्दमाप्नुयात दित्यादिबोधनैः सुधाचन्द्रिका-मुदाहरणैश्च तत्रत्यान् सर्वान् शर्वरी सार्वभौमस्तृष्णाकुलचकोरानिवगोभिर्माधुरीधुरीणाभिरभ्यनन्दयत । तदा शुश्रूषवः कर्णला अन्तर्वाणयः सन्तोषातिशयेन शिरां स्यामदूदुलन्त, तदानीमहमपि तदुपन्यासे तदीय सुकुमारवचः शैलीं कर्णपूरप्रायां कर्णपूरं कर्णिलस्सन्नहमप्याकर्णयम् ॥

यइत्थमुपन्यास तस्योपन्यास चरमभागे श्रीमदाचार्य शास्त्रोक्तदिशा कर्तव्याया श्री नारायणो-पासना सर्वप्रेक्षावदपेक्षार्हामोक्षाय कल्पते, नान्यः पन्थाः इति निजहृदयकवाटमुद्धाट्य घण्टाघोषघोषँ-मवादीत् ॥

ततः करतालिकाभिस्सर्वे ते महान्त सुमनीकृत्य बहुदाप्यश्लाघिषत ॥

भो महन् भवदीयं दर्शनं मन्त्रालये प्राथमिकं कृष्णातीरे द्वितीयं सह्याचारोधसि तार्तीयीकं इदं चतुर्थ इदानीं तन समागमः शाश्वतितोबवत्विति प्रार्थये । सच्छास्त्रविषयं भवन्मुखतः श्रोतुकामेमयि अनुगृण्हातु भवान् तत्र भवान् ॥

पूर्णबोधार्यः—मुख्यांश संक्षेपतः इदानीं वक्ष्यामि शृणुत्सादरं । सकलवेदशिरोमणिना परम-पवित्रेण वर्णाष्टक जटिलेन प्रणवेन । व्यस्ताव्यस्ततया चतुर्धाभूताभिः व्याहृतिभिः । विष्णोर्नुकं वीर्याणि सहस्र शीर्षा पुरुषेत्यादि सूक्तैश्चनैरंतर्येण गण्यमाना अपि गुणाः यस्य नोपसंह्रियन्ते । जगदिदमपावृतस्य यस्य आवास्यं, यः कलामात्मीयां श्रियिनिधायपूर्ण सुखमनुभवन् अन्तः सुखोन्तरारामः स्वरमण इति प्रतीयते स्थित्वागुरुषु यस्तद्वारा तत्वमुपदिश्यस्व योग्यानन्दान्भत्र बीजभूतज्ञानाभिव्यक्तेर्निदानं भवति । यस्मिन् सुखभुजि दक्षिणाक्षिगतेजागर्त्येषलोकः । तेजोमय चित्तसम्बन्धिनः कण्ठस्थात् यस्मात् प्रत्यक्ष दृष्टानुभूत बाह्यपदार्थ ज्ञानजन्य बाह्यपदार्थ ज्ञानजन्यवासना परिणामरूपान् विविक्तान् शुभाशुभफलसूचकान स्वाप्नपदार्थान् जानातिजीवः । यो व विश्वतैजसाख्येन निजरूपद्वयेन हृदयकमलकर्णिकाकारो प्रकाशमानं आत्मानमेव समाश्लिष्यस्वरूपमविद्यामनेह सञ्ञविनाबाहिकान् स्वाप्निकान्वापदार्थान्न जीवस्य प्रज्ञापयति। चेतनाचेतनात्मिकं यदिदं जगत् केन सृष्टं कस्मिन्नायत्तं, ब्रह्मादयस्सर्वेष्युपसर्जनतयानैरंतर्येणकमुपकुर्वते

(सेवार्थकः) एवमनालोच्य, अनाद्यनुवृत्तान् देहगेहादिपदार्थान् स्वीयानवेत्य वैतथ्यप्रत्ययेन (व्यर्थ-विश्वासेन) रज्वाघटीयन्त्रमिवदण्डेन कुलालचक्रमिवकर्मणा परिवर्तनीयं यातायातमनुभूय, तदीय दुःख दर्शनेन अयथार्थज्ञानपरंपरया परिमुच्यमानो नक्राक्रान्त चक्रपाद इव (गजइव) निश्चलान्तःकरणतया, देहोयं क्षणभङ्गुरो व्याधिमयः, किं च आपातसुखसूचीसंसारः पर्यन्तदुःखदर्शी अतः संसारव्यामोहः क्ष्वेळ इव हेयः इति सञ्जातविरक्त्या सद्गुरूपसत्या समुपात्त विद्यासामर्थ्यात् सम्यग्ज्ञानमासाद्य भगवतो नारायणस्य प्रसादमत्यर्थं सम्पादनीयमित्याचार्याभिप्रायः शास्त्रैकसमधिगम्यमानस्य हरेरत्यर्थप्रसत्त्यै श्रीमत्पूर्णबोध गुरोस्तदवतारक्रिया विशेषमादौ सम्पाद्य मङ्गळावाप्तिजनकम् ॥

सुमतिः—माङ्गळिकस्य मे गुरोरवतारक्रियाः कृपयां बोधयतु भवान् कल्याणाय ॥

इति मानवी कृष्णकुलपूर्णचम्पूप्रबन्धे पूर्वोपदेश ॥

## ॥ श्री पूर्णबोध चम्पूग्रंथे उत्तरोपदेशः प्रारंभः ॥

मंथानं परिकल्प्यमन्दारगिरिं नेत्रं च नेत्रश्रुतिं मन्थनूयत्नपराऽसुराऽमरशिरोरत्नैश्वरत्नाकरं ।
लब्ध्वा तत्र विचित्ररत्नममृतं देवीं श्रियं च श्रियं यः स्वीयान्समपीपल द्विजयतां श्रीरामनामाऽच्युतः ॥

त्रेतायां येन सेनाऽऽविद्वापरेपि द्विजान्वयः ।
सद्यःपायादपायान्नस्तार्तीयीका तदा कृतिः ॥

श्रुणुयाः सुमते, यः सृष्ट्याद्यष्टकस्यकर्ता स एव परंब्रह्म स वा एष पुरुषः स एवेशः सैषभगवान् स आत्मेतिज्ञेयः। जगदिदमावास्यमस्य, तदस्मिन् समाः शतंजीवितुमिच्छेद्यदितैनैव सर्वांतर्यामिणा यद्दत्तंकर्मानुरूपं फलमनुभुंजानः समाहितेन मनसा तत्प्रियं करणैः करणैः कर्माणिकुर्याः ॥

घटपटकुड्यादि बह्यपदार्थज्ञानजनकं यच्चक्षुरिंद्रियं न ब्रह्मसात्काराय प्रभवति ब्रह्मतुशास्त्रैक समधिगम्यं हि, तदत्र शास्त्रीया दृष्टिरावश्यकी सातुशास्त्रोपदेष्टुर्गुरोः प्रसादजन्याः तत्तादृशामाचार्य-मादाउपासीथाः तदनुप्रियगुर्वेत्स्यसेत्वमिष्टापत्तिं हि तदादौ लोकत्रय गुरोर्वायोरवतारविभवं वक्ष्यामि-ममात्कया ॥

अहो किलनिटालतटनीरंध्ररुन्द्रज्वालाकरालनयनाऽनलनिर्दग्धमुग्धपुराऽसुरस्य धूर्जटेः जटापटल गह्वरोपह्वरात् निर्गलं विनिर्गळंत्याः गङ्गातरंगिण्याः मङ्गलतरङ्गरिङ्गणभङ्गुरैः शिशिरशीकरशीभरैः स्वरैः समीरैः सुखावहे। सवनभुजामवनिसवनंभुजामवनि भुंजासमज्ञाभिर्विज्ञाते साधन्यधन्य जममान्य कर्मावरणस्य शर्मावहोनिर्मलप्रदेशो सलिला निलपलाशफलकुलाजीवजीवलोकमुखाद्गम्यमानस्य, भगवतो नारायणस्य, नानावतारलीलाढ्यैः प्रतीयमाने, विद्वन्मणिकरण्डे भरतखण्डप्रकाण्डे ॥

कलानिधिकलाकलापचूडापीड शतवितान मुखबर्हिमुखलोकानां मेघंकरकालोत्कंठितैरकुंठितै-र्नीलकंठैः प्रपञ्ची क्रियमाण कलापकोटिमनुकुर्वद्भिः हिरण्मयमकुटतटघटित विविधमणिकिरण सरणि प्रभावपटले, कल्माषीकृतां नरुण.रुणपल्लवतलजयोरिवसमुल्लसल्ललितचरणयोः शक्रायुधसहस्रसारिकां।

विमलनखमुखमयूखलेखामुद्वीक्ष्य विस्मयाविष्टहृदयैः । कमलासन द्विरसन द्विजराज राजद्विजराजमौद्धि यक्षरक्षोरग गन्धर्वसिद्धविद्याधरैर्जेगीयमानस्याशय्यातपत्रायित समीराभ्यवहारशेखरस्यादौग्धसैंधवी-पीवर पयोधरधराधरपरिसर विरचित शशरुधिर गौर पाटीर पङ्कपङ्किल विशालवक्षस्थलफलकस्य । कंबुशुंभत्कंठोपकंठवल्गद्वल्गु वनमालोपलालित कौस्तुभरत्नस्य । अवदीर्ण सुवर्णसवर्णवासोवसानस्य । विश्वतोविप्रकीर्यमाणस्फारस्फुलिङ्गभंगुर चक्रचंक्रमणैर्भस्मीभूत धात्रीभारभूतयातुधानवितानस्य । निर्घातपातपरुषध्वनिविदीर्यमाण कर्बुरनिकर निर्भरधैर्याहार्येण, पुण्डरीकषंडपांडुरेण, जन्यजित्वरेण, पाञ्चजन्येन मान्यमानस्य। कोणपलावलेप द्विपविपाटनास्फालन स्फुरित शोणित शोण कौमोदकी सिंहिक याकीर्त्यमानस्य । खंडितात्युग्रविग्रह पंडितचंडरिपुमण्डल मंडलाग्रमंडितस्य । पक्षपात जातवातव्रात भीत भुवनत्रय वैनतेय पत्रिपत्रस्य । अनादि निधनस्य इष्टाऽनिष्टयोर्निरस्ततांच विधित्सोः श्रीमतोमुकुन्दस्य अशेषाभिर्ज्ञैः शेषामिवशिरसादरणीयां अनुज्ञामनुसृत्य भुवनजनान्पुनानः पवमानः कापेयमापन्नः समर्जनि सद्मनिकेसरिणः ॥

सन्तानेज्योतिषः सन्तानइव, यः प्रादुरभूत्तमकुतोभयतयापादिकयतिमेरुण्ड दण्डकारण्ये अखंडनीय कोदंडकांडपाणिमंडनं, सहासुमित्रा पुत्रेण निखा सहृदयेन हृदयदयितेन अगदतिशयालुधैर्यौ-दार्यशौर्यसौन्दर्यसीमानं अनिरोध्य साध्यधर्माणं कौसल्यासुप्रजसं श्रीरामनामानमात्मानुलोम प्रेमरस-मास्वादयमानः । क्रियासमभिहारतयास्वैरं ॥

सन्तोष्यसौरिसचिवः शुचिभिर्वचोभिः शब्दागमोचिततमैर्नतपूर्वकायः।
देवंससूनुमचिरादुचितार्थसिध्यै भक्त्याऽऽनिनाय सहरिर्गिरिमृश्यमूकम् ॥

सौरिसचिवः सुग्रीवसचिवः सः हरिः हनुमान् नतपूर्वकायः सन् शब्दागमोचिततमैः व्याकरण सम्मतैः शुचिभिः वचोभिः सन्तोष्य ससूनुं अनुजेनसहितं देवं क्रीडादिगुणविशिष्टं रामं भक्त्या ऋश्य-मूकपर्वतं प्रतिआनिनाय नि—सूनुः पुत्रेऽनुजेरवाविति रत्नमाला । ततो हनूमान् सहराघवाभ्यां निर्दोष भाषापरितोषिताभ्यां । निजाग्रजाद्विभ्यतमुग्रवीर्यात्सुग्रीवमग्रेवणमाससाद ॥

यतमानयोः फलाय सावित्रि सौमित्रि पूर्वजयोः परस्परयोरदीनेसाप्तपदीने सति सीतापतिः परितुष्यन्नथ ॥

सुग्रीवमग्रज भयाद्विनिवृत्तदेशं प्रत्याययन्नभयदः शरणागतं सः ।
आह्वाययन् गतनयं युधिशात्रजं तद्देहदसून् बहिरसाविषणाचकर्ष ॥

कुहनानुयायिना निर्दयेन नीताविनीतां सीतां विचेतुं म्राप्रियमाणहृदयः सत्वरमुदित्वरसत्व सम्भ्रमः हेमाङ्गपतङ्गपिशङ्गलोचनः, पाटलीपटलपाटलाननः, सुबहुलकलिकाकलित लतातुलितं अमर्षोत्कर्षादुल्लोमशं अभङ्गुरलांगूलमसकृदुन्मीलयन्वारिधेरुत्तर तारे विराजमान मतिरुन्द्रं महेंद्रं नाम-ग्रावाणमारूढः निरूढप्रौढः उदयशिखरिशिखर शेखरायमाणः गौसहस्त्रिक इव व्यरोचत ॥

विरही भवत्कर्तव्य क्रियोत्साहः । पौनः पुनिकसमुज्जृंभमाण द्वेषणासहसहाः तत्रौपरिष्ठः, चलाचलकल्लोल कुलाकुलसलील सलिल खेलालोल नक्रचक्रमीनप्रतानादिमोदमानयादो गणैः फेन-फेनिल प्रदेशैः पेशलं मकरालयमुत्तितीर्षुः खमुत्पपात ॥

तदामध्ये समुद्रमुद्रिकसत्वांतरसागतांतरसाशनवेषेणविरसां सुरसां सुरसां विदधे ॥

तदनुगिरिनिभस्यात्मनो गिरावनालोचित सांप्रतमसांप्रतया सिंहिकया छायाग्राहिण्याग्रस्य-मानः सतदुदरमपुष्कलं निष्कुलाचकार ॥

अथ सयौजनशतिकः नितरां निराकारिष्णुर्लंकासुरीं पुरीमासुरीं प्रविश्य तत्र सर्वत्र मृगय-माणो मैथिलीमलब्धमनोरथः कामप्यशोकवनीं माधवनीवनीकनीयसीमदपेक्ष्ययेत्यपहसन्तीं न्यविक्षत ॥

वस्वौकसारालयशंसनीयैः फलैश्चपुष्पैर्नभसङ्गमैश्च ।
वनीमनोज्ञापि विलोकनेऽस्यनमारुतेर्मानसमाससज्ज ॥

तत्रज्यान्स्यां शिंशपा पादपपदं कमनीयं भावुकं कुर्वतीं सर्वतोविसारिकांतिकल्लोलैः, स्थैर्यवतीं काञ्चनमय सौदामिनीमिव काञ्चनव्यक्तिविशेषामसौन्यशमयत् ॥

छायाद्वितीयो महिलाद्वितीयां जरत्सुधाभीषुमिवद्वितीयां ।
छायाद्वितीयान्वयजद्वितीयां विवेद लक्ष्मग्रहणेऽद्वितीयः ॥

पादाग्रविन्यस्तदृशं कृशांगीं म्लानां मृणालीमिवहिम्यकाले ।
सन्तर्ज्यमानां पुनरासुरीभिर्मन्दानिलांदोलितचेलमूलां ॥

मृणालसूत्रं सुकुमारतन्वामुखेन साक्षाच्छरदिदुबिंबं ।
विडंबयन्तीं भुवनेषुभूम्नारूपेण रंभारति भारतीश्च ॥

शामावदातस्य जगन्नियंतूरास्यरामां भुवनाभिरामौ ।
सतांसतां श्लाघ्यतमांशशंसपदं श्रितानामिवकल्पवल्लीं ॥

द्रष्टुं रूपमिदं जिष्णोरक्ष्णां दशशतीमनाक् ।
निह्नाद्दशशतीशंषी ह्रिरावृत्तापि शंसितुं ॥

देवस्सर्वगुणाऽभिज्ञोन्यग्रोधपरिमण्डलाम् ।
स्वानुरूपा मिमांस्मृत्वा व्यथतेवरवर्णिनीं ॥

साचिक्ष्वाकुकुलराजहंस गुणानुवर्णनं वनौकसः समाकर्ण्य हर्षोत्कर्षात्पुलकिततनुलता, हनुमतादत्तं प्रेयसाप्रेषित महा रजतमयं, अनर्घ्यमणिराजराजिभिरभिराजमानं, सर्षपायमान मानसमली-मसनिरासकमङ्गुलीयकमक्ष्णिभ्यामुपलालयन्ती, जगपवित्रं वायुपुत्रमात्मप्रीतिपात्रं पुत्रवेदं विवेद ॥

पाश्चात्या चलितललामं वलीमुखललाममालोक्य ॥

वैधात्री मृदुपादपल्लवरणन्मंजीरमंजुध्वने वैदग्धीं च भुजङ्गपुङ्गवगवीहैयंगवीनश्रियां ।
जीवन्त्याहतिवैखरीं शुभकरीं सौधाकरीं माधुरीं ह्रीभाराः परिकल्य रामरमणी वाणीमवाणीद्गिरा ॥

अयिवत्सचित्रकूटमधोऽधः तत्रतत्र मधुपरागभञ्जुषु विटपिहितकुंजेषु ॥
सरसीरुहेषु विहाराय विचरन्मधुपालिभिरभिरामेषु सरसीप्रदेशेषु ॥

शुकपिककलालापस्वरमाधुर्यधुर्येषु सुखसमीरसञ्चारसुभगेषु । तदितरत्र पाश्चात्यभागे मन्मथमनोरथ-सिद्धिसहकारिसहकारशिरस्पदस्फुरितकलकंठाकुंठकंठलीलाभिवल्गुषु । किंशुकपुष्पताम्रत्रोटित्रुटितरस निबरीसरसालफलरसास्वादनैरलसानां शुकदंपतीनां सल्लापसंपत्सु । मंजुमंजुनिकुंजेषु विजहीर्षया सञ्चरन्तीनां वनितानां सुकुमारतरतनुपरिमलाहूत मधुव्रतव्रातरुतमुखरितेषुवनेषु ॥ दाक्षिणात्यभागे वनमालेषु, प्रफुल्लमल्लिकामतल्लिकासमाश्लिष्टमाकन्दसन्दोहसुंदरेषुणदेषु । ततः पूर्वभागे कुंदमन्दार नंद्यावर्तादि कुसुमकेसरविसरपरिसधूलिधूसरभृरिभासुरमधुर मधुकरनिकरझंकाररव संकीर्णेषु प्रपात-प्रस्रवणरमणीयेषु विशालस्थलेषु ॥ गिरिनिर्झरतुषारपरामर्शशीतलीक्रियमाणैः चंदनगिरिमंदिरैर्मंदगन्ध-वहैरानन्दावहेषु । मल्लिकाक्ष पक्षविक्षेपणोत्क्षिप्तरोलंबकुलकोलाहल वाचालितेषु कासारेषुच । बहुविधविहारस्थलेषैः मयासह विहरमाणो यः काकुत्स्थकुलशिरोमणिश्चाटुकारालङ्कारहीरः अयोध्या-पुरनिवासविहारसौभाग्यं विस्मृतिवर्ती मां कृतवान् तेनाधुना मदीयप्रेमनिधिना यदा कदावा स्मर्यते स्विदेषायोषाकुलनिर्दोषा तपस्विनी ॥

हापितर्हापितः पुण्यादस्मि राघवमृत्युना ।
इतिदुद्रावमारीचो महांदहान्प्रतारकः ॥
अपराध्यतिमेकाके ब्राह्मेवाश्रमादिशत् ।
मनोमत्प्रेयसस्तादृक् मयि किं नानुरज्यते ॥
उदासीनवदासीनः कुतोमयिरघूद्वहः ।
मयिविन्यस्त भ्रातृत्वो सौमित्रिश्च परंतपः ॥

हनुमदुक्तिः

श्रुत्यातिथ्यविधायिनीरघिभुवा याश्चित्रकूटेकृताः ।
श्रुत्वा दंपति संपदः सुविहृतीश्चित्राः पवित्राश्चताः ॥
सानंदाश्रु निपातपूतनयनः सञ्जातरोमोद्गमो ।
व्यानम्रात्मशिरस्पदाहितकरद्वन्द्वो ब्रवीत्तामिदम् ॥

देव्याल्पतामिदं ॥

देव्यास्तेसुकुमारमन्मथकलाकल्लोलितांग्याः स्मरन् । लोकानन्दनचंदनाद्रिपवनस्पर्शनचापेक्षते ।
द्रष्टुंनोत्सहतेंबुजं कुवलयं सौधाकरीं संपदं । देवः कूजनिकोकिलेमधुमदायत्तेपि धत्तेश्रुती ॥

मातर्मास्मशोचीः, नातिचिरेणद्रक्ष्यसि लङ्कामलंकारविरहिणीं, जितामित्र, मित्रगोत्र राजपुत्र रत्नं हृदयदयितमुपस्थास्यसे, प्रयच्छप्रियेच्छाविषयं किमप्यभिज्ञानं, जिगमिषोराज्ञामनुगृहाणमेइतिरता-मभिवन्द्य, तदनु मैथिलीदत्तशिरोरत्नमादाय भग्नप्रमदावनः, वह्निसात्कृतलङ्कः, निस्तीर्णविस्तीर्ण महार्ण-वार्णाः पूर्णकामाय श्रीरामाय चूडामणिंदत्वा कांतोदंतसमर्प्यप्रभुंसमतोषयत् । पदपद्ममधिजग्मुषस्तस्य मारुतेः कैंकर्यातिशयेन परितुष्टो भगवाननुजग्राह भाविब्रह्मपदम् । एषहनुमानेव द्वापरेत्वद्वापरज्ञानी पाण्डोर्वसत्यां वास्तव्यः स्तव्यगुणैः प्रतीतः दुर्योधनमुख दुर्जननिधननिर्धूतभारां धरां विधाय स्वकृत कर्माणि सर्वाणि भगवदाज्ञयाकृतानीति निश्चितमतिर्मतिमतांवरः सर्वभावैश्चपरिशुद्धः भीमसेनः ॥

शंसंतियद्गुणान्वेदाः यस्मिन् शंसंति संततम् ।
सचाप्येषयदुश्रेष्ठं तमालश्यामलाकृतिम् ॥

कैंकर्येण दुष्टनिग्रहेणयुगद्वये यः परमात्मानं पर्यतोषयत् सएवेदानीं कलौ कलिमलिम्लुचकार्य प्रहाणाय यतिरूपेण वैयासिक सूत्राणि यथावद्व्याख्यायसम्यज्ञानमुद्दीपयितुं श्रीमान् मध्वनाम्ना प्रतीतः सुजनानुद्दधार । नित्यमङ्गलशास्त्रं यत्तत्संक्षिप्ततयातवबोधि मयावेधि मृगयस्वगुरुमविगीताचारशीलं मुदारमनुकंपासंपन्नम् ॥

सुमतिः—संत्यावयोः परिचिताः विद्वांसो बहीयांसः ॥

पूर्णबोधः—सत्यंखलु श्रृणु मदभिमतं, लोके केचिच्छात्रशब्दार्थमलक्ष्य अन्तरपराध्यंति गुरवे केचिल्लोकान्विडंबयितुमनुतिष्ठंतिकर्माणि कतिचित्पंडितंमन्याः समीपमागतं नव्याहर्तुमिच्छन्ति, कतिप यथाः स्वप्रतिष्ठालोपभिया न परगुणानुद्घाटयंति, कतिथाः केवलं परबोधनमात्रपराः, अन्येतु धनकाम-नया नयानयज्ञानविमुखलोकानां मनोवृत्त्यनुसृत्यस्थानेऽस्थानेप्यनादृत्य कालोचितं भाषंते, अपरेतु आश्रय-बलान्मत्ताः स्वानपिनलक्षयंते तेषामेतेषामाश्रयणं हेयमाहेयमिवजानीहि ॥

नरस्यनिःस्वतालोकेयोग्यतांसतृणमत्ति । विषयमयीमावृतिलतां संस्थूलमूलां समूलकाषंकषतः अजीवमात्मानं प्रकाशयतः शास्त्रस्य निस्स्पृहयालुतया वक्तारदमूऽनयालावनुगृहयालुराचार्यः मुमुक्षुवेदं पुरस्करोति । तत्तादृगाचार्यस्यपादं पाणिग्राहं गृहीत्वा मामुद्धरेतिमृदूक्तिभिः परिचर्याभिःप्रसादय ॥

सुमतिः—लोकानामंतश्शुद्धिविचयनमतिदुस्साद्म् ॥

पूर्णः—अद्धा तथाचेत ॥

सधर्मिणीं सुप्रजसः श्रियश्च विहायवैराग्यसराद्यतिस्सन् ।
प्रतीयते कश्चन तुंगभद्राकूले विशाले तपसानुकूले ॥

आनतजनसुरधेनोः श्रीराघवेन्द्र गुरुसार्वभौमस्य पावनतमपादधूली प्रभावैर्निर्धूतकिल्बिषविषं, सर्वमूलमूलरामध्यानानूनमानसं, हंसकुलोत्तंसं, श्रीसुयमीन्द्रतीर्थं समाश्रयतम् ॥

सुमतिः—कतावाननुभूयमान महोन्नतपदः परमहंसः, क्वाहं प्राकृतगुणगणतिथप्रथमः, कथं स्यात्तदीयो दृष्टिपातो मादृशेषु जनेषु ॥

पूर्ण—नवनीतमृदुहृदये, कारुणिके, सर्वजनप्रियंवदे, दूरोत्सारितलोभगुणे, तस्मिन्मा सांश-यिकोभूः तद्गुरुजनस्तवनेन नातिचिरेणैव सुप्रीतोभविष्यति ॥

सुमतिः—कदा गच्छामः ॥

पूर्ण—अमुना कर्मदित्र्यन्दत्रुन्दिष्टेन निरंकुशतयाद्यनुभूयमानं पारिव्राज्यपदं प्राप्स्यतिद्वादशाब्द-पूर्तिं पञ्चम्यां तिथौ सपूर्वपक्षायां, समाश्रवायां सपार्थिवाब्दायाम् ॥

वर्तिष्यते तत्रमहीयान्महः तदनुसकलमनोरथसिद्धिमुख्यक्षेत्रे भवति तत्र तत्रभवता यति-त्रिवन्नाधिपतिना स्वांतध्वांतांतकरेणत्वदीमनसिशयकुशेशयकोशप्रकाशः ॥

सुमतिः—गुरोदष्टयावर्षणयन्त्रीं गुरुपरंपराणां गुणस्तुतिं आख्याहि ॥

पूर्णबोधार्यः—गुरोः पुरत इमान् श्लोकान् पठन् मुकुलिताञ्जलिर्नमत्पूर्वकायोभव, परंप्रसीदति श्रीसुयमीन्द्रतीर्थचरणः ॥

स्तुतिः

आनन्दतीर्थमुनिरिंदुरिवांधकारं हार्दं निरुध्य निरवद्य मुदंप्रदद्यात् ।
प्रालेयशैलशशिखण्डशिखण्डपाण्डुकीर्तिस्सदुज्ज्वलदुद्वंबरजृंभमाणः ॥

विद्वत्सभासु विजयी विजयीन्द्रतीर्थो विद्यानिधिर्विविधवाग्विभवप्रदर्शी ।
व्याख्याकवित्वरचनासुमहाप्रगल्भो भावेस्तुमे भवभवार्तिनिवृत्तिहेतुः ॥

सुधीन्द्रतीर्थस्सुखतीर्थ तीर्थतीर्थावगाहव्यपनीतकालः ।
सुधारसग्राहिजनाग्रगण्यो गण्योस्तुगुण्यः श्रयतांशरण्यः ॥

श्रीराघवेन्द्रस्तुतिः

काषायंवसनंवसानमुदितस्मेरास्यमग्रेस्थितं श्रुत्योः श्रीतुलसीदलञ्चतुलसीमालांगलेबिभ्रतम् ।
श्रीमुद्रोल्लसदूर्ध्वपुंड्रकलितंमंत्रालयेमंटपे स्वप्नेदृष्टमुदारकाञ्चनरुचिं श्रीराघवेंद्रं भजे ॥

मंत्रागारेजगतिविदितेसेवकानांसुरद्रुः सुक्षेमग्व्यानतजनपरित्राणकर्मण्युदारः ।
स्वप्नेदृष्टः सुहसितमुखोमामुदीक्ष्यस्थितोयः सोयंजीयात्कनककपिशो राघवेन्द्रः कृपालुः ॥

परिमलगुरुभिक्षोरस्यवृन्दावनाग्रे विरचितमतिरम्यंमाल्यमुत्फुल्लमल्याः ।
दधिलवधवलिम्नाराजतेराजतेद्रौमदनदमनचूडाचुंबिबिंबं यथेंदोः ॥

आलोको गुरुराघवेन्द्रभवतो जीवातुरेवातुरैः सेव्यस्सर्वरुजावमर्दनविधौ प्रारीप्सितार्थाप्तये ।
तस्मादस्तु सएवमेह्यविरतं विद्वद्भिराशंसितस्त्रैलोक्यातिशयालुसद्गुणमणेस्सीतायतेस्सम्मतम् ॥

मृद्वीकामृदुतां सुधामधुरतां नैर्लिपनद्यंबुनो नैर्मल्यं च कुतूहलं बहुतरामाकर्णनेकर्णयोः ।
तन्वाना गुरुराघवेन्द्रभवतः क्षेमंकरी वाग्झरी योगींद्रादि यतींद्रबृंद हृदयैस्संभाविताय्याच्छिवा ॥

परिमळघनवाणी पावनीव त्रिवेणी बहुविषयविचाराकर्णपियूषधारा ।
जयमुनिहृदयज्ञा जातुदोषाऽनभिज्ञा विहरतु गविचित्ते राघवेन्द्राघजित्ते ॥

भवांबरीषे प्रतपंतमुच्चैरमुं जनं सांत्वयितुं शरण्यां ।
शक्तंनमेवस्तुविनाभवंतं तस्माद्गुरो त्वां शरणं प्रपद्ये ॥

सुशीलेन्द्रतीर्थः

सुकृतींद्रयशोराशि वाराशि शशलांछनः ।
सुशीलेन्द्रगुरुर्जीयात्सुव्रतींद्राभिवंदितः ॥

दयादृष्टि हृदिरामनाम श्रीवत्सलक्ष्माहित चित्तवृत्तिः ।
गुरुःसुशीलेन्द्रनिरंकचन्द्रो जागर्तुसंहर्तुमकीर्तिमार्तिम् ॥

सुशीलेन्द्रः श्रीमान् जयतुहृदये वाच्यपिसदा शिरोरत्नप्रायः सकलविदुषां तापसवरः ।
वदान्यो मंगल्यो मधुरवचसोयस्यमहसः कृपासेकालोको जनकतनयानायकजुषः ॥

धाराहीमवगाह्यचारुतटिनीं बालरुणाभांबरं धृत्वाफालतलोचसस्मितमुखःशुभ्रोर्ध्वपुण्ड्रं शुभम् ।
चेतोहारिणि हारिणे मृदुनि यः स्थित्वाऽजिने निश्चलं मालावर्तनतत्परांगुलिदलः पायात्सुशीलोगुरुः ॥

देवस्वभावममरद्रुममंघ्रिभाजामार्तानुकंपिहृदयं सदयावलोकम् ।
लोकंपूर्णं भजति यो गुरुराघवेंद्रं सोयंपुनातु सुधर्मींद्र गुरोर्गुरुर्नः ॥

श्रीसुव्रतींद्रतीर्थः

तपस्यति श्रीमति तुङ्गभद्रा भद्रापगारोधसि साधुसेव्ये ।
यःशांतधीर्दाशरथेः प्रसादान्महानुभावोऽवतु सुव्रतीन्द्रः ॥

सुधासारग्राही सुगुणमणिसंतानसुरभिः शरज्योत्स्नापूरस्फुरितयशसाश्लिष्टहरित् ।
प्रसादार्थं वृन्दावन भुवि तपस्यन्रघुपतेः सुशीलेन्द्रच्छात्रः स्फुरतुहृदये संततमयम् ॥

स्नात्वा तुंगतरंग मंगलमये यस्तुंगभद्रामृते गोपीचंदनचर्चयोपलसितः काषायवस्त्राऽऽवृतः ।
प्रातस्सायमुदङ्मुखः कृतमुखोमंत्रंजपन् राघवं सोयं सुव्रति सुव्रतीन्द्रचरणः संसेव्यतां संपदे ॥

करधृतजपमालः कम्रकाषायचेलः कलिमथनविलोलः स्वोचिताचारशीलः ।
कुजनगजमृगेन्द्रः स्वात्मसत्कोसलेन्द्रः शुभतमगुणसांद्रः स्मर्यतां सुव्रतींद्रः ॥

स्तुत्युपसंहृतेरर्वागेव परमकारुणिकस्य गुरोः कृपारसपरिष्वक्त नेत्रराजीवं वितनोतितेशिवम् ॥

इति मानवीकृष्णमूर्त्याचार्यविरचितायां पूर्णबोधाख्य चंपूकृतावुत्तरोपदेशः पूर्तिमगमत् शिवं श्रीः ॥
एषामानवीकृष्णमूर्तिरचिता चंपूसरण्याकृतिः सच्छास्त्रागमसिंधुसङ्गमशुचिः पूर्णप्रबोधाऽभिदा ।
श्रीशंश्रीरघुशांततीर्थमहितं श्रीराघवेन्द्रप्रियं श्रीयाच्छ्रीसुधर्मींद्रतीर्थहृदयं श्रीमूलरामं श्रियै ॥



# ॥ रसविचारः ॥

लेखकाः—गलगली रामाचार्याः
संस्कृत साहित्यरत्नं

'रसो वै सः । रसं ह्येवायंलब्ध्वाऽऽनन्दीभवति'



वेदाः खलु संस्कृतवाङ्मयस्योगमस्थानम् । तस्मादेव भारतीयानां काव्यनिर्मितिनदी प्रवहति निरवच्छिन्नप्रवाहम् । यद्यपि काव्यास्वादस्य तदन्तर्गतस्य च रसस्य शास्त्रीयविचारोनैवोपलभ्यते वेदेषु, तथापि चारुतरो रसाविष्कारः प्रमोदभरमाविष्कारयति तत्र तत्र पठितॄणां समुच्छलच्चमत्कारः । रसचर्चाविषये प्रथमतया पदनिक्षेपं कुर्वदुपलब्धं भरतमुनेर्नाट्यशास्त्रमेव । क्रिस्तशकात्पूर्वं निर्मितं नाट्यशास्त्रं निजमूलभूतानि नाट्यसूत्राणि समुदाहृत्य प्रख्यापयति तेषां प्राचीनतरत्वम् । ततोऽज्ञायते तेषामपि सूत्राणामुपज्ञं वेदा एवास्मदनुपलब्धा इति । ऋग्वेदे मुनीनां मुखकमलविनिस्सृतो रसमकरन्दः सहजतया निराडम्बरतयाचाव्याजमनोहरस्तर्पयति विबुधमधुलिहः । इन्द्रवृत्तयोः समरे वीररसः, शुनश्शेफकृतवरुणप्रार्थनायां करुणरसः, मण्डूकसूक्ते हास्यरसः परिस्फुटोऽनुभूयते । एवमितरेऽपि रसास्तत्र तत्राम्नाये ॥

'जायेव पत्ये उशती सुवासा । उषा हस्रेव नि रिणीतेअप्सः' (कामवशा ललना चारुवसनं वसाना हृष्यन्ती यथोत्सर्पति, तथा उषा प्रकटयत्यात्मनो रूपम् ) इत्यादि शृङ्गाररसप्रधानाः, 'उशतीरिव मातरः' एतादृशा वात्सल्यरसस्यूता उपमा नैकशो दृश्यन्त ऋग्वेदे । 'द्वासुपर्णा सयुजा सखाया' इति अतिशयोक्ति—रूपक—आद्यलङ्कारा अपि भवन्ति दृग्गोचराः ॥

भरतमुनेर्नाट्यशास्त्रमपि रसविचारोपज्ञी यत्व श्रुतीनामभिप्रैति—

'जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च ।
यजुर्वेदादभिनयान् रसानाथर्वणादपि' इति ।

व्याख्यानकृदभिनवगुप्तोऽपि मतमेतदनुमनुते । कविशेखरो राजशेखरोऽपि स्वकृत 'काव्यमीमांसा' ग्रन्थे शास्त्रसमाह्याने 'रसाधिकारिकं नन्दिकेश्वरः' इति रसप्रकरणस्य नन्दिकेश्वरविरचितत्वमाख्याति । एवं रसविचारोऽनादिकलतः प्रवृत्तोऽस्मद्भारते इति स्पष्टमवगम्यते ॥

रामायण-महाभारतकालो वेदोप्तबीजस्य क्रमेणाङ्कुरितस्य शाखोपशाखाभेदेन वृद्धस्य रससालतरोः नवकिसलयसुषुमाकरः । राष्ट्रीयकाव्यद्वयमिदं रुचिरतरं चकार रसपरिपोषम् । सर्वरसाकरायमाणं काव्ययोर्युगलमिदमेव पुरस्तनानामभिजातकाव्यसंपदां खनीभूतं विशेषतो महाभारतम् । अत एव साधूक्तम्—

'इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः।
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः' इति।

संस्कृतवाङ्मये पञ्चमहाकाव्यानि, भास—कालिदास—भवभूति प्रमुखानां कवीश्वराणां नाटकानि नवरसयुक्तानि सर्वाणि रामायण—महाभारतरसोत्कटप्रसंगानेवावलम्ब्य प्रवृत्तानि॥

वेदेषु न केवलं श्राव्यकाव्यरीतिर्दृश्यते, अपितु नाट्यप्रयोगपद्धतिरपि। ऋग्वेदे नाटके मुख्याङ्गभूता मधुराः संवादा हृदयमाकर्षन्ति रसिकानाम्। सरमा—पणिसंवादः, विश्वामित्र—नदी संवादः, अग्नि—देवसंवादः, यम—यमीसंवादः, पुरूरव—उर्वशीसंवादः इत्यादयोऽत्र निदर्शनीभूताः। स्त्रीवेषधारिणम् 'असङ्गम्' नामकं योगिनं पुरुषं पुरुहूतो भाषते। अनेनाऽपि रसोत्कटनाटकच्छटा वेदेष्वासीदिति ज्ञातुं सुशकम्॥

पुराणेस्वपि नाटकप्रयोगसन्दर्भा आसाद्यन्ते। हरिवंशस्य विष्णुपर्वणि प्रद्युम्नोनायकस्य, साम्बो विदूषकस्य गदः पारिपार्श्वकस्य भूमिकामादाय 'रम्भा—नलकूबरः' नामकं नाटकं प्रायुङ्क्तेति समुल्लिखितम्। तथा वज्रनाभं नामासुरं हन्तुं वज्रपुरं प्रेषिता अमी यदुकुमाराः स्वकार्यसिद्धये लोकवशीकरणार्थंच रामायणकथावलम्बमेकं नाट्यमकुर्वन्नित्यपि स्पष्टमुपलभ्यते॥

उपरि निर्दिष्टैर्हेतुभिः अनादिकालतो नाट्यप्रयोगास्तदनुकूलारसचर्चाऽपि प्राचलन्निति अनुमातुं निश्चेतुं वा शक्यम्। भरतमुनिरेव प्रथमं नाटकेषु काव्येषु रसप्राधान्य मतमात्मनो नाट्यशास्त्रे प्रत्यपीपदत्साधुतमम्। तदनुयायिना नैकेसंवृत्ताः। केचन तद्विरोधिन इतरप्राधान्यवादिन आत्मनोमतं प्रास्थापयन् परमन्ते रसप्राधान्यमतं सर्वसम्मतं समपादयन्विजयम्। संस्कृतवाङ्मये भरतेन रसमतम्, भामहेन अलङ्कारमतम्, वामनेनरीतिमतम् आनन्दवर्धनेन ध्वनिमतं कुन्तलेन वक्रोक्तिमतम्, क्षेमेन्द्रेण औचित्यमतं प्रवर्तितम्॥

सर्वेऽप्यमी मतप्रवर्तका नखलुनाद्रियन्ते रसम्। रसप्राधान्यवादीभरतो नाट्यशास्त्रे तत्र तत्र— 'नहिरसादृते कश्चिदर्थः प्रवर्तते। तत्र विभावानुभावव्यभिचारि संयोगाद्रसनिष्पत्तिः'। काव्येषु भावार्थगतानि तज्ज्ञैः सम्यक्प्रयोजानि यथारसं तु। 'प्रयोगमेषांच पुनर्वक्ष्यामि रससंश्रयम्'। इत्यादिना समर्थयामास रसप्राधान्यम्। अलङ्कार प्राधान्यमतप्रवर्तको भामहस्तदनुयायिना उद्भट–दण्डि–रुद्रट–प्रतीहारेन्दुराज प्रमुखा अपिरसं सम्मानयंत्येव। भामहः 'युक्तं लोकस्वभावेन रसैश्च सकलैः पृथुक्'। इति महाकाव्यस्य रसवत्तामङ्गीकरोति। दण्डी

'मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।
येनमाद्यन्ति धीमन्तो मधुनेव मधुव्रताः'॥

'पदासत्तिः सानुप्रासा रसावहा'। 'कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति'। 'रसवद् रसपेशलम्' 'इहत्वष्टरसायत्ता रसवत्ता स्मृता गिराम्'। इति रसपेशलतां प्रशंसति रीतिमतपुरस्कर्ता वामनोऽपि 'दीप्तरसत्वं कान्तिः' इति कान्तिगुणस्य रसोद्दीपितत्वमभिप्रैति। अलङ्कारमतपुरस्कारी प्रतीहारेन्दुराजः 'नखलु काव्यस्य रसानां वा अलङ्कार्यालङ्कारभावः। आत्मशरीरभावः। रसाहि काव्यस्य आत्मत्वेन अवस्थिताः शब्दार्थौ च शरीरतया'। 'रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः॥

कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम्' । इति रसस्य गरीयस्त्वं संगिरते । रुद्रटोऽपि 'सरसं कुर्वन् महाकविः काव्यम्' । 'तस्मात्कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्' रसस्तु सौन्दर्यादि वत् सहजोगुणः' इति रसस्य सौन्दर्याधायकत्वमभिधत्ते ।

'यामिनीवेन्दुवदना नारीव रमणं विना ।
लक्ष्मीरिवऋते त्यागान्नोवाणी भाति नीरसा' ॥

इति रुद्रभट्टः स्पष्टमाचष्ट रसस्य वरिष्ठताम् । ध्वनिमतप्रवर्तका आनन्दवर्धनाचार्यास्तु 'तेन रस एव वस्तुत आत्मा' । 'कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरन्त्रेण भवितव्यम्' । इति रसस्य काव्य सारतां स्वीकुरुते नाट्यशास्त्रस्याधारभूते अग्निपुराणेऽपि रसप्राधान्यमुक्तम्—'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इति । राजशेखरकविः 'अलङ्कारैस्तु शोभायै रस आत्मा' इति रसमहतीं गायति ॥

वक्रोक्तिमतप्रवर्तकः कुन्तलोपि 'स्वभावोयत्रभावानां रसाकूतो निबध्यते' । 'अचेतनानां स्वरूपं रसोद्दीपन सामर्थ्यबन्धुरम् । चेतनस्वरूपं रसोद्दीपसामर्थ्यबन्धुरम् । 'निरन्तर रसोद्गार गर्भसौन्दर्यनिर्भराः ॥

'इतिवृत्तान्यथावृत्तरससंपदपेक्षया ।
रसान्तरेणरम्येण यत्रनिर्वहणं भवेत्' ॥ इति स्तौतिरसम् ॥

महिमभट्टस्तार्किकः 'काव्यस्यात्मनी सङ्गिनि रसादि रूपेन कस्यचिद्विमतिः' । इति सम्मान यति रसम् ॥

भोजराजः—

'निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसास्थितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति' ॥

इति साधु गिरति रसगरिमाणम् ॥

औचित्यमतप्रवर्तकः क्षेमेन्द्रः—

'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा' ॥
'औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।
रसजीवितभूतस्य विचारंकुरुतेऽधुना' । इति रसक्षेमं चिन्तयत्येव ॥

साहित्यकसार्वभौमो मम्मटो मङ्गलाचरणएव 'नवरसरुचिरां निर्मिताम्' इति कविभारतीं वर्णयन् प्रस्तौति रसप्रौढिमानम् । 'मुख्यार्थहतिर्दोषः, रसश्च मुख्यस्तदाश्रयाद्वाच्यः' ॥

'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवः'...... । इति रसप्राधान्यमनुमन्यते स्फुटतरम् । 'काव्यानुशासन' कारो जैनकविर्हेमचन्द्रोऽपि रसाभावेतु वाच्यवाचकवैचित्र्यमात्रपर्यवसिता भवन्ति' इति वर्णयति रसमहिमानम् । साहित्यदर्पणकारो विश्वनाथः 'वाक्यं रसात्मकं काव्यम्' इति रसस्य सार्वभौमतामनुमोदते । रसप्रदीपकारः प्रभाकरः 'रसार्थमेव काव्यप्रवृत्तेः' इति रसप्रभां प्रदीपयति । साहित्यजगन्नाथो जगन्नाथपण्डितराजः 'एवं पञ्चात्मके ध्वनौ परमरमणीयतया रसध्वने रात्मा रसस्तावदभिधीयते' इति रसस्य परमरमणीयतामुद्वर्णयति । एवं वेदपुरुषादारभ्य विद्वत्पुरुष पर्यन्तं सर्वैरपि मुक्तकण्ठमनुवर्णितो महती रसमहती । रसोनाम काव्यवाचनेन नाट्यदर्शनेन वा तन्मयता

पश्चेतसि कल्पनासहकृतया भावनया समुत्पद्यमानः संवेदनापरपर्यायो किंलक्षणाह्लादजनको विगलित वेद्यान्तरतयाऽनुभूयमानो मधुरचिरस्फूर्तितरङ्ग प्रभवो मनोवृत्तिविशेषः । सचसाक्षात् रसिकगतः । परम्परया काव्यगतः । रसोऽयं यस्य चेतसि सहजतया समुत्पद्यते, यश्च रसमास्वादयंस्तल्लीनतामापद्यते-स एव रसिकः । रससामग्रीवर्णनपरं कविकर्म रसवत्काव्यमिति व्यवह्रियते ॥

सोऽयं रसः 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति नाट्यसूत्रेण कारणरूपैः विभावैः, कार्यरूपैरनुभावैः सहकारकारणैर्व्यभिचारिभावैश्च निष्पद्यते इति सहजतया विज्ञायते । सेयं निष्पत्तिप्रक्रिया प्रस्तूयत इदानीम् ॥

स्थायिभावस्य विभावादीनां संयोगेन रसोनिष्पद्यते । 'नानाभावोपगता अपि स्थायिनो भावा रसत्वमापद्यन्ते, (ना.शा.) निरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते नयः । आत्मभावं नयत्यन्यान् सस्थायी लवणाकरः' । (द.रू.) 'चिरं चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः । रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते । (र०कं.) स्थायीऽभावो वासनारूपेण सदा वर्तत एव चेतसि । अपरिपुष्टः स्थायिभावो व्यभिचारिभावादिभिः परिपुष्टो रसरूपतां प्रतिपद्यते । सच रसः अनुकार्यरामादिगतः अनुकर्तृनटगत-श्चेति द्विविधः । रामादिषु साक्षात्सम्बन्धेन, नटादिषु अनुसन्धानबलादुत्पद्यते सीतादि विभावरनु भावैस्तास्यां रामादिचेतसि प्रथमं रत्यादिभाव उत्पद्यते । तदनु व्यभिचारि भावैः परिपुष्टो रसरूपतां प्राप्नोति । नटः आत्मनो वेषभूषादिभिरभिनिविष्ट आत्मानं रामं मन्यमानः प्रवर्तते । नटस्य अभिनय कौशल्यजनितेन रामत्वभ्रमेण सामाजिका अनुभवन्त्यानन्दं इति भट्टलोल्लटो वदन् वाचकेषु प्रेक्षकेषुच स्थायिभाव न मन्यते । तत्रेषु आनन्दानुभवः किन्मूलक इति न स्पष्टीकृतं तेन । एतदेवाक्षिपति प्रदीपकारः—'सामाजिकेषु तदभावे तत्र चमत्कारानुभवविरोधात् । न च तज्ज्ञानमेव चमत्कारहेतुः । लौकिकशृङ्गारादि दर्शनेनाऽपि चमत्कार प्रसङ्गात्' इति ॥

श्रीशङ्कुकस्यास्मिन्विषयेऽयमाशयः—'रत्यादिः मुख्यः स्थायीभावो रामादिगत एव । तत्सदृशः स्थायीभावो नटेषूत्पन्नः सामाजिकैरनुमीयते । सोयं रसइत्युच्यतेऽनुकृतः । सादृश्यजन्य भ्रमविषयनटगत-रतिभावेन सत्यभूत रामगतरतिज्ञानं कथं स्यादिति शङ्कायाः समाहितिरियम्—मिथ्याज्ञानादपि क्वचिदिष्ट प्राप्तिर्भवत्येव ॥

'मणिप्रदीप प्रभयो मणिबुध्याऽभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥

इति एवञ्च नटेरामत्वानुमितिरेव सामाजिकानामानन्दकारणमिति ॥

तदुपरि भट्टतौतस्यायमाक्षेपः—नटानुकृतारतिः रामस्येति कथं वा निश्चीयते कस्य मतेन सिध्यति । किं नटस्य मतेन किंवा प्रेक्षकाणां, उत मध्यस्तस्य विवेचकस्य । पक्षत्रयेऽपि न संभवत्येवानु-करणं यतस्तत्र न केनापि रामगतरसाविष्कारो गोचरीकृतः । अदृष्टः कथं वानुक्रियेत, अनुकृत इति कथं वा ज्ञायते । किंच नटगतबाह्यचेष्टादिना रामचित्तान्तर्गतरतेरनुकरणं कथं वाऽवगम्येत । एवं पौराणि कैतिहासिक नाटकगत नटानुकृतेर्दशा । कल्पित प्रकरणादौ कल्पितनायकादीनां तु अनुकरणं नायकस्य शशविषाणाभरणमेव । इदमेव रसप्रदीपकारो वक्ति—'कल्पितविषयप्रकरणादौ वस्त्वभावात् कस्यानुकारः स्यात्' इति । एवं च अनुकरणवादो न साम अस्यमावहति ॥

भट्टनायको रसास्वादे 'अभिधा भावना भोगीकरणमिति व्यापारत्रयं परिकल्प्य विवृणुते'— काव्ये निर्दोषतया गुणलङ्कारैश्च, नाटके अभिनयादिभिः रङ्गभूमेः परिष्कारेणच कामपि विशिष्टामवस्थामश्नुते सामाजिकानां चेतः । तेन ते शकुन्तलायाः पुराणकालीनत्वं, कण्वदुहितृत्वं दुष्यन्तपत्नीत्वं च सर्वं विस्मृत्य तामेतां कमनीयां कामिनीं विभावादिसाधारणीकरणेनमन्यन्ते । अस्यामेव मनस्थित्यां स्वस्वस्थलकालौ किं बहुना व्यक्तित्वमपि विस्मृत्य आनन्दास्वादयोग्यां निबिडनिजमोहसङ्कटनिवारण कारिणीं अनुभव-स्मृत्यादि विलक्षणामवस्थां भुञ्जति इति ॥

अभिनवगुप्ताचार्यास्तु एवं साधुनिरूप्यते भरतमुनिवचनानुरोधेन—काव्यार्थस्य रसस्य प्रतिपत्ति द्विविधा, काव्यशब्दश्रवणेनैव जायमाना, विभावादीनां साक्षात्कारेणोत्पद्यमानाचेति । प्रतिपत्तेरस्या अधिकारी विमलप्रतिभानशालिहृदयः सहृदयः । येषां काव्यानुशीलनाभ्यासवशाद् विशदीभूते मनोमुकुरे वर्णनीयतन्मयती भवनयोग्यता, तेहृदय संवादभाजः सहृदयाः । सहृदयस्य चेतसि स्वाभाविकतया वर्तन्ते सुखरूपेण काश्चन वासनाः । ताभिः संवलितानां प्राणिनां प्रवृत्तिस्तु दुःखसंश्लेष विद्वेषिणी सुखास्वादलालसाद्‌राच ॥

अस्याश्चित्तवृत्तेरेव स्थायी भाव इति संज्ञा । सर्वेष्वपि विलसन्त्येवासौ काव्यवाचनादि प्रसङ्गेन समुद्दीप्यते । उद्दीपनकार्यंच काव्यगतविभावानु भावव्यभिचारिभावाः कुर्वन्ति साधारणीकृताः । रसिकस्य सुप्तः स्थायिभावोऽपि हृदयसंवादात्मकसहृदयत्व बलान् तन्मयीभावोचित चर्वणाप्राणतया तद्विभावादिसाधारणव शसंप्रबुद्धोचितनिजरत्यादिवासनावेशवशादभिव्यक्तः साधारणीकृतएव रसात्मना परिणमति विभावानु भावव्यभिचारिभिरेवं क्रमेण । एवंच काव्यगतविभानुभावव्यभिचारि भावसम्मेलनेन मूलनायकगतभावः सूच्यते, तेन तत्संवादी रसिकचित्तगतः सुप्तः स्थयीभावोऽभि व्याज्यते । इयमेव रसनिष्पत्तिः इति ॥

नाटके नटस्तु मूलनायकादितन्मयतामापन्नोऽपि रसिकैरनुभूयमानं नानुभवत्यलौकिक रसास्वाद सुखम् । विश्वनाथ आह—'राघवादेः सरूपतां दर्शयन्नर्तको नैव रसास्वादको भवति । 'संगीतरत्नाकर' कारोप्यनुमोदते मतमिदम्—किंचिन्न रसं स्वदते नटः सामाजिकास्तु लिहते रसान् । पात्रं नटो मतः इति । हृदयसंवादेन काव्य-नाटक वाचने रुचिरुत्पद्यते । सर्वेषामपि व्यवहाराणां व्यक्तिनिरपेक्षतया साधारणीकृततया च ताटस्थ्यप्राप्त्या संजायते प्रमोदः सामाजिकानाम् ॥

काव्यवाचनादिना जायमानस्य आनन्दस्य अभिव्यक्तस्य वासनाविशेषस्य वा 'रस' शब्द वाच्यत्व निमित्तं भरतमुनिराचष्टे—'को दृष्टान्तः । अत्राह यथाहि नानाव्यञ्जनौषधि द्रव्यसंयोगाद् रसनिष्पत्तिर्भवति, यथाहि गुडादिभिर्द्रव्यैर्व्यञ्जनौषधिभिश्च षाडवादयो (मधुरादयः) । रसा निवर्तन्ते, तथा नानाभावोपगता अपि स्थायिनोभावा रसत्वमाप्नुवन्तीति' । रसगङ्गाधरकारो अद्वैतमतरीत्या अभिव्यक्तरसं 'भग्नावरणाचित्' इति वदन् आत्मनो मताभिनिवेशं विशदयति ॥

अन्येऽप्येवमाचक्षते—काव्ये कविः, नाटके नटः विभावं प्रकटयन्ति । ततो व्यञ्जनाव्यापारेण दुष्यन्ते शकुन्तलारतिं रसिको जानाति । तदनुच सहृदयतया उद्दीपिते भावनाविशेषोनामदोषो रसिक चेतसि समुल्लसति तेन रसिकस्य 'अहमेव दुष्यन्तः' इति भ्रान्तिरुपद्यते । तया जायमाना शकुन्तल विषयक रतिः रसीभवति । अर्थाद् भावना विशेषदोषेण प्रभवति रसः । काव्यवाचनस्य नाटकप्रयोग

दर्शनस्य वा अवसाने दोषस्यास्यातिरोधानेन रसप्रतीतिरपि लुप्यति । रसप्रतीत्याऽनया क्रमप्यनिर्वचनीयमानन्दमनुभवति रसिक इति ॥

मधुसूदन सरस्वतीनामाविद्वान् आत्मनो भगवद्भक्तिरसायननाम्निग्रन्थे रसमेवं निरूपयति—लाक्षेवकठिनमपि मानवचेतः काम-क्रोध-भय-स्नेह प्रमुखैस्तापकविषयैः सम्बन्धं लक्षणात् द्रवीभावमापद्यते । द्रुते च चेतसि प्रतिबिम्बीभवन्ति बाह्यवस्तूनि । प्रतिबिम्बित वस्त्वाकार एव भावना वासनाभावाभिधानेन व्यवह्रियते । द्रवीभावमुपगते मानसे प्रविष्टो दार्ढ्यमापन्नो वस्त्वाकार एव स्थायिभावः । अभिव्यक्तः स्थायिभाव आनन्दमयरसरूपतां विन्दति । चित्तान्तर्गतो भगवान्परमानन्दः स्थायिभाव रूपेण रसीभवति । अयं चिदानन्दांशो विषयवासनाभिरावृतः काम-क्रोध-भयादिरूपेण व्यज्यते । भक्तिरसेन तु चित्तं भगवदाकारमधिगम्य सत्यानन्दरूपरसतां लभते इति ॥

अद्वैतपक्षाभिनिविष्टं मधुसूदनीयमेतन्मतं जगन्नाथीयं वा नकेवलमप्रामाणिकं, प्रत्यक्षादिप्रमाण विरुद्धं च । काव्यवाचनादिना भवन् रसीयानन्दो जन्य, इंद्रियगोचरो, लौकिकस्त्रैगुण्यसम्बद्धो, द्वन्द्वानुचरश्च । ब्रह्मानन्दस्तु तेषां मते अतीन्द्रियः, अलौकिकः, त्रिगुणातीतो, द्वन्द्वसम्पर्कशून्यश्च । अतः परस्पर विरुद्धयोरानन्दयोरेकरूपता कथनं कथमपि न सामञ्जस्यमावहति ॥

ज्ञानसत्तासाक्षात्काररूपो रसोऽयं अलौकिक इति कवयोमन्यते । तथाहि—रसप्रतीतिर्न सविकल्पकज्ञानम्, ज्ञातृज्ञेययोरविषयीकरणात् । विगलितवेद्यान्तरा सुखमय्येवसा । नापि निर्विकल्पकं ज्ञानम्, विभावादि सामग्रीणां ग्रहणात् । नापि योगप्रभावजा कवेरयोगित्वात्, योगजज्ञानस्य भगवदितर विषये नावस्थानात् । किं च रसास्वादकाले 'मम स्थायिभाव उद्दीपित इति वेत्ति रसिकः । नाप्यनुमानजं ज्ञानम्, व्याप्तिज्ञानविरहात् । नाप्युपमितिः, उपमानाजन्यत्वात् । नापि शब्दबोधः, अभिधाया लक्षणाया अप्रवेशात् । नापि अर्थापत्तिज प्रतिपत्तिः, अर्थानुपपत्तेरभावात् । नवा अनुपलब्धि प्रमाणजा उपलब्धिः उपलब्धि फलत्वात् । अतोऽलौकिकः स्वानुभवमात्रगम्योऽयं रस इति ॥

ध्वनि प्राधान्यवादिनस्तु एवं ब्रुवते—विभावादि ज्ञानसमकालमेव रत्यादिस्थायिप्रतीतिर्जायते । रत्यादिप्रतीतिरेव रसप्रतीतिः । विभावज्ञानस्य रसप्रतीतेश्च कार्यकारणभावो वा ज्ञाप्य-ज्ञापकभावो वा न कोऽपि सम्बन्धः, नवा पूर्वापरक्रमो वा संलक्ष्यते । दीपवस्तू इव विभावरसौ असंलक्ष्यक्रमव्यङ्ग्य ध्वनिनाऽवभासेते युगपदेव ॥

एतदसहमानो महिमभट्टः प्रतिक्षिपति नकोऽपि कोविदो ब्रूते विभाव एव रस इति । विभाव ज्ञानक्रियाप्रथमा, रसप्रतीतिर्द्वितीया । तयोः कार्यकारणभावः क्रमश्चाभ्युपगन्तव्य एवावश्यम् । परं तयोरविलम्बेन जननात् लिङ्गलिङ्गीभावक्रमौ नभासेते स्फुटतया ॥

एवं रसविषये नैकाः सन्ति विमतय आलङ्कारिकाणाम् । परं अद्वैतमतप्रक्रियां विहाय अभिनव गुप्तपादस्यैव मतमनुभावरूढं सयुक्तिकं च भासते भावविदामित्यलं पल्लवितेन ।

प्राचीनसाहित्यग्रन्थपरिशीलनेन, प्रो.के.ना. वाटवेमहाभागकृत 'रसविमर्श' नामकप्रबन्धज्योतिषा, ग्रन्थप्रकाशक प्रोत्साहन समीरणेन, मम शेमुषीधूमेनच मेघरूपतामापन्नोऽयं लेखो रसिकचातकचेतश्चेत यतादानन्दरस वर्षणेनेति भगवन्तमानन्दमयं चेद्वाग्रसमिन्दिरानन्दकन्दलं मुकुन्दमभ्यर्थयेऽमन्दभक्तिरस परवशोऽहम् ॥

# ॥ कविसार्वभौम कविता कौशल्यम् ॥

[ श्रीसौधीन्द्र कविता कौशल्यम् ]

कविः "विद्यावैभवः, वेदान्तशिरोमणिः, कवितिलकः,"

"धर्मशास्त्रभूषणं, साहित्यालङ्कारः"

वे ॥ श्री ॥ राजा । श्री । गुरुराजाचार्यः

श्रीपादपुत्रः

॥ जगद्गुरु श्रीराघवेन्द्रस्वामिनां मठः, नञ्जनगूडु ॥



॥ मङ्गलाचरणम् ॥

श्रीमद्वेङ्कटशैललोल कमलानाथश्चलन्मल्लिका
मालालालित कोमलामलतनुः कौलालजाक्षः कलौ ।
योभक्तान्कलिकल्मषौघकुलितान्योग्यान् दयालीलया
श्रीलः पालयति प्रसन्नवदनः पायादपायात्सनः ॥ १ ॥

रघुपति विजयीन्द्रौ यस्यकाव्ये विभातो
नवसरणि कृतोऽस्ति यत्सुभद्राविवाहः ।
कविकुल गुरुवर्यं साहितीसार्वभौमं
यतिकुलतिलकंतं नौम्यहं श्रीसुधीन्द्रम् ॥ २ ॥

यस्यादौ जगतिप्रसिद्धरचनामालोक हृष्टस्ततो
नित्यं यद्रसपुञ्जमञ्जु कवितामास्वाद्य तुष्टोभवम् ।
सोऽहं श्रीगुरुराज नामक कृति स्तंविद्वदिन्द्रं स्मरन्
कुर्वे तत्कविसार्वभौम कविता कौशल्यमल्पधीः ॥ ३ ॥

श्रीमद्गौतमवंश वारिधिजनिं भक्तौघतापापहं
भर्केशामर बृन्दवन्दितलसत्सद्विष्णु पादाश्रितम् ।
वन्देऽहं गुरुराघवेन्द्रयतिराड्जैवातृकं शान्तये (ज्योतिषे)
तद्वंशाम्बुधि सम्भवो जडमतिस्तन्नाम धारीमुदा ॥ ४ ॥

तर्के व्याकरणे पुराणकवने प्राभाकरे दर्शने
साहित्ये सुखतीर्थतीर्थविषये पाण्डित्यभाग्यो यतिः ।
श्रीमद्वेदमतानुवादनचणं दुर्वादिकन्ठीरवं
तं वन्दे सुकृतीन्द्रतथ्यमिमणिं ज्ञानेप्सया सन्ततम् ॥ ५ ॥

आनन्दतीर्थ मुनिवर्यमुखारविन्द
निष्यन्दिशास्त्र मकरन्द ममन्दसारम् ।
स्वैरंनिपीय मुदिकोवदनाम्बरेनः
शश्वद्विराजनु सुशील यतीन्द्र भृङ्गः ॥ ६ ॥

गङ्गासङ्गेननैर्मल्यं प्राप्तद्भिर्लभ्यते यतः ।
सुधीन्द्र महिमासक्ता सेव्या वाक्कविभिर्मम ॥ ७ ॥



॥ प्रथमोल्लासः ॥

[प्रवेशः । अणुमन्त्रालयः । तुङ्गभद्रातरङ्गिणीतटे महान्कोलाहलः]

भगवती वराहनन्दिनी, परमपावनी, पवित्रीकृतसकलसज्जनस्तोमा, अधरीकृत सुधासुधा माधुरी, द्विजगण संसेविता, विविधविद्वद्रचवेदघोषमिषेण, स्पर्शमात्रेण निखिलाघपूगान्परिहरिष्यामिति सूचयन्तीव, मञ्जुलतरमुद्घोषदन्ती, अतित्वरया प्रवहन्ती नरीनर्ति ॥

भगवान्दीनमणिरपि स्वकीयै रक्तिमोपेतैः किरणैर्भगवतीमिमां तटिनीमनुरक्तांकुर्वन्प्रेक्षकाणां मन उल्लासयति । निर्मलासु सैकातसु नैकेद्विजवराः, स्वे स्वे कर्मण्यभिरताः, देवतार्चनपरा इतरे परस्पर वाक्यार्थविचारनिरताः, अपरे विद्यार्थिनो मिलिताः परस्परमपहसन्तोऽन्त्याक्षरीस्पर्धायामभिरताश्च दरीदृश्यन्ते । अस्य विद्यार्थीवृन्दस्य नेतागुरुप्रसादशर्मा । अस्मिन्नेव समयेऽपरावन्तेवासिनौ समागत्याश्रोपविष्टौ । तदानीं गुरुप्रसादशर्मा तावबलोक्य पप्रच्छ ॥

गुरुप्रसादशर्माः—महाशयाः ! भवद्भिः कतिमोदेशोऽलङ्कृतः ? भवतां नामधेयंच श्रोतुमिच्छामि !

अन्यतरः— वारणासी निवासिना मुरलीधर भट्टाचार्येण मया तत्रत्य संस्कृतमहापाठशालायां काणाद पाणिनीये शास्त्रे अभ्यस्येते । [अपरं संसूच्य] इमे पूर्णप्रज्ञदासाचार्या अस्मत्प्रिय सुहृदः शेषाचलमधिवसन्तस्तत्रत्य श्रीवेङ्कटेश्वर महापाठशालायां द्वैतवेदान्त शास्त्रमभ्यस्यन्ति । भवन्तः किंनामधेयविभूषिताः ? कं ग्राममधिवसन्तो राजन्ते !

गुरुप्रः— अस्ति खलु दानवधुर्वह तनूजनुषा अतनुतर संशोचन समाह्लादन प्रत्यक्षीकृत नृकण्ठीरव कृपालकटाक्ष वीक्षण विक्षत निखिलाघपूगेन, समानन्दित सकल सज्जनस्तोमेन, प्रह्लादनाम्ना समनुष्ठित क्रतुनिकर निकेतनं, विदितैतद्वृत्तान्तै विबुधमणि विबुधेन्द्रयतिभि स्स्वायत्तीकृतः, तदनुनिजतपः परिशीलन प्रमुदित म्लेच्छभूपतिभिः परिमळपरिचित सुधास्वादन परीभावित वृन्दारक वृन्द मेदिनीसुर सङ्घैः,

परिमळाचार्यापरनाम विभूषितैः श्रीमद्राघवेन्द्र गुरुवरेण्यै स्समलङ्कृतः, वराहजावीचि विहरिष्यमाण गन्धवाहपावितः, निखिलतन्त्रमन्त्राभिज्ञ द्विजगण मण्डित मन्दिर विभूषितः, सर्वमन्त्रसिद्धिप्रद अत एव मन्त्रालयाभिधो ग्रामवरः। तदेव मदावासस्थलम्। जनाः मां गुरुप्रसादशर्माणं भाषन्ते। तत्रत्य श्रीगुरुसार्वभौम संस्कृतमहापाठशालायामधीत न्याय व्याकरण शास्त्रोऽलङ्कारशास्त्रमध्येमि। अत्र किं निमित्तं भवदीयागमनम्?

मुरली:—'श्रीमत्परमहंस परिव्राजकाचार्यवर्यानन्दविद्वद्बृन्द गेगीयमान श्रीमन्मध्वाचार्य मुख्य महासंस्थानाधीश जगद्गुरु श्रीमद्राघवेन्द्रस्वामिनां मठीय दिग्विजय विद्यासिंहासनाधीश्वर १०८ श्रीमत्सुधीन्द्रतीर्थ पूज्यपादानां द्वादशवर्षीय वेदान्तसाम्राज्य महाभिषेकोत्सवस्तथा सुवर्णोत्सवश्च आगामिन्यां पञ्चम्यां प्रचलिष्यति; तन्महोत्सवदिदृक्षवः नैके बुधवरा स्समागमिष्यन्ती' ति वार्ता आकर्ण्य वयमपि उत्सवभागिनो भवेम, इति कामनयाऽत्रागताऽस्मः॥

पूर्णप्रज्ञः—किमुत्सव उपक्रान्तः? अपिबुधवरा स्समागताः?

गुरुप्र:— उत्सवस्तावच्छ्वः प्रारप्स्यते। कतिचन पण्डिताः कवयोगायकाश्च समागता इतरे समागमिष्यन्ति च॥ [एवं वदन्नेव तृतीय नवोपरि कोटिमाटीकितवान्]

स्वावच्छिन्न विषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकीभूत यत्किञ्चिद्विषयित्वं यादृश यादृश धर्मावच्छिन्नानिरूपितं, तादृश तादृश धर्मावच्छिन्नाविषयक प्रतीतिविषयतावच्छेदक धर्मावच्छिन्नत्वमिति कल्पोपरि बाधविशिष्ट व्यभिचारेऽतिव्याप्तिरुक्ता। सा नसङ्गच्छते। स्वावच्छिन्न विषयकत्वावच्छिन्न प्रतिबन्धकता सामान्यावच्छेदकीभूतायां व्यभिचार विशिष्ट बाधत्वावच्छिन्न निरूपितायां विषयितायां बाधविशिष्ट व्यभिचारित्वावच्छिन्नानिरूपितत्व सत्वेन, तदवच्छिन्नाविषयक प्रतीति विषयतावच्छेकत्वस्य बाधविशिष्ट व्यभिचारत्वेऽसत्वेनानतिव्याप्तेरिति पूर्वपक्षः॥

मुरली:—सत्प्रतिपक्षेऽतिव्याप्तिवारणाय विषयितायामव्यापक विषयिताशून्यज्ञानीयत्वस्यैव निवेशनीयतया तत्रातिव्याप्ति स्सम्भवत्येव!!

गुरुप्र:— अस्यलक्षणस्य धर्मविशिष्ट धर्मवत्त्वमित्यनुगमानुसरणेनादोषात्। वैशिष्ट्यञ्च, तादात्म्य, स्वविशिष्टप्रतीति विषयतावच्छेदकत्वोभय सम्बन्धेन। प्रतीतौ, स्ववैशिष्ट्यञ्च, स्वविशिष्ट धर्मावच्छिन्न विषयताकत्व सम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताक प्रतियोगिताक भेदवत्व सम्बन्धेन। धर्मे स्ववैशिष्ट्यञ्च, स्वसमानाधिकरण भेदप्रतियोगितावच्छेदकत्व सम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताक प्रतियोगिताक भेदवत्व सम्बन्धेन। स्वाधिकरणत्वञ्च, स्वविशिष्ट प्रकृतानुमिति प्रतिबन्धकत्व सम्बन्धेन। भेदप्रतियोगितावच्छेदकत्वञ्च, आधेयता सम्बन्धेन। आधेयताच, स्वविशिष्ट विषयिता वृत्तित्व सम्बन्धेन। विषयितावृत्तित्वञ्च, स्वावच्छिन्न निरूपकताकत्व सम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताक प्रतियोगिताक भेदवत्व स्सम्बन्धेन। विषयितायां स्ववैशिष्ट्यञ्च, स्वविशिष्ट धर्मावच्छिन्न निरूपितत्व सम्बन्धेन। धर्मे स्ववैशिष्ट्यञ्च, आधेयता सम्बन्धेन। आधेयताय, स्वसामानाधिकरण भेदप्रतियोगितावच्छेदकत्व सम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताक प्रतियोगिताक भेदत्व सम्बन्धेन।

स्वाधिकरणत्वञ्च, स्वावच्छिन्न विषयताशाल्यनाहार्याप्रामाण्यज्ञानानास्कन्दिन निश्चयत्व सम्बन्धेन। येदप्रतियोगितावच्छेदकताच, स्वरूप सम्बन्धेन । इत्थञ्च बाधविशिष्ट व्यभिचारेऽतिव्याप्ति र्न सम्भवन्त्येवेति पूर्वपूक्षः दुर्धर एव !!

मुरलीः—अहो ! अश्रुतपूर्वोऽयमनुगमः ! बहुनात्र किमुक्तेन, ऋते गौतमीयम्, किमपि शास्त्रमेव न भवति ॥

पूर्णप्रज्ञः—मैवं वादीः, पूर्णप्रज्ञदर्शनमेव दर्शनम् ! इदं शास्त्रमधीतगौतमीय जैमिनीय पाणिनीय शास्त्राधिकारिकमेव। अत एवोक्तमभियुक्तैः,—

"अमूलाग्रनिबद्ध तर्कजटिलं शब्दैकजीवातुकं
मीमांसानुनयञ्च शङ्करवचो हुङ्कार भङ्गप्रदम्।
शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्वप्न तन्त्रान्तराः
व्याख्यास्यन्ति कथं पठन्तिचकथं किंवाकलौ दुर्घटम्" ॥ इति ॥

गुरुप्रः— महाशयाः! यदुक्तं भवद्भिस्तत्तथा। न्यायवेदान्त शास्त्रे विद्वज्जन मात्र तोषप्रदे। आपण्डितपामरं श्रवणमात्रेण मनोह्लाद दायिशास्त्रं साहित्यमेव भवितुमर्हति। तेन तद्वरमिति मन्मतिः ॥

मुरलीः— किं साहित्यं शास्त्रं भवितुमर्हति ? येन तद्वरं भवेत् !!

गुरुप्रः— साहित्यं शास्त्रमितिहि महाजनैः परिगृहीतं वर्तते ॥

पूर्णप्रज्ञः—[हसन्] तर्हि ते जना अनाघ्रात न्यायवेदान्तगन्धा भवेयुः !

मुरलीः—[सोपाहसं] के ते साहित्यादरभाजो महाजनाः ?

गुरुप्रः— [सगाम्भीर्यं] वैष्णवैरपि भवद्भिरेवं कथ्यते ? हन्त! द्वैतवेदान्तमत प्रवर्तकाः पावनाः पवमानाः श्रीमदाचार्याः तदनुयायिनः श्रीव्यासराज, विजयीन्द्र, सुधीन्द्र, वादिराज, राघवेन्द्र, सुमतीन्द्र यतीन्द्रादयो निगम निगमान्त निष्णाताः, सर्वतन्त्र स्वतन्त्राः महातपस्विनोऽपि साहित्य शास्त्रादर भाजिन एवहि !

मुरलीः—श्रीमदाचार्यादयः कतिपय मुनिवराः काव्यप्रबन्ध निर्मातार इति श्रुणुमस्तावत् । के ते विजयीन्द्र सुधीन्द्र सुमतीन्द्र यतीन्द्रा अश्रुतपूर्वाः ? तत्रापि 'साहित्य गन्धविधुराः माध्वा' इति किंवदन्ती दुरपह्वा ॥

पूर्णप्रज्ञः—[असहमानः] भवन्तुकेचन तद्गन्धशून्याः, न तेन सकलाः माध्वास्तदपवादभागिनो भवेयुः ! अन्यथा इतरेऽपि तदपवादविषयास्स्युः साम्यात् ॥

विद्यार्थिना—मन्यतमः—गुरुप्रसाद ! किमेतेन शुष्कवाग्जालेन ? एतै श्श्रीविजयीन्द्रादि श्रीपादानां महिमा न श्रुत इति भाति। अहो दौर्भाग्यमस्माकं ! सुहृद्वर, कथय, अमीषां तन्महिमानम् ॥

मुरली—पूर्णप्रज्ञौः—सत्यम्, तच्छ्रवणे वयमुत्सुकाः ॥

गुरुप्रः— [सोत्साहं] स्वाश्रित कामित कल्पना कलुषित कल्पपादपादयदः भवाघतूलानिल सखाः, निखिल निगमव्याख्यातारः, समग्रटीका टिप्पटी कर्तारः ; अवतार चतुष्टयेऽपि निजतत्वोपदेशेन दूरीकृत सज्जन मोहाः, अत एव निरुपपद गुरुराज पदभाजः श्रीमूलेलाजनिजानि पदनलिन रोलम्बमान मानसा अत एव राघवेन्द्रपदभाजः, यतिकुलतिलका विदितपूर्वाः किं न ?

सर्वे:— [सभक्तिकम्] तत्प्रसादैकोपजीविभि स्सर्वैरपि विदितमेवतेषां नामधेयम् ॥

गुरुप्रः— एताद्दगमहिमोपेतानाममीषां विद्यात आश्रमतश्च गुरवः कविकुलललामभूताः, निहित निखिल विद्वन्मौलिपादाः, श्रीमत्सुधीन्द्रतीर्थपूज्यचरणाः । एतेषामाऽक्षराभ्यासं सकलतन्त्रोपदेशेन, स्वीयवेदान्तसाम्राज्य प्रदानेनच गुरवः ; चतुःषष्ठि कलापरिपूर्णाः दूरीकृतदुर्मतध्वान्ताः, निराकृताऽद्वैत शैवाः, श्रीमद्विजयीन्द्रतीर्थगुरुसार्वभौमाः ॥

मुरली:— तर्हि, श्रीराघवेन्द्रयतीन्द्राणां परम गुरवः !!

गुरुप्रः— अथकिम् ! तैरेव चतुरधिकशत प्रबन्धप्रवराः निर्मिताः ॥

पूर्णप्रज्ञः—अहो, अमोघप्रभावा इमे । किन्ते प्रबन्धाः मुद्रिताः ॥

गुरुप्रः— तद्ग्रन्थप्रकाशन बद्धादरेण तच्चरण रजोनिषेविणा तत्परमानुग्रहाभिलाषिणा केनाचित्कलिता स्तत्रतत्र विद्यमाना अनेकाः कृतय स्संगृह्य परिशील्यच श्रीमद्राघवेन्द्रस्वामिनांमठीय श्रीपादानामनुग्रहसहायादिना प्रकटयितुमारब्धाः । तासु—'ब्रह्मसूत्रन्यायसङ्ग्रह, शैवसर्वस्व-खण्डन, भेदविद्याविलासा' ख्या इमे प्रबन्धा अनुपदमेव मुद्राप्य प्रकटिताः ॥

मुरली:— साधु ! साधु !! अभिवन्द्योहि तदीयारम्भः, ततस्ततः ?

गुरुप्रः— एताद्दश कृतिकरणकुशलैश्श्रीविजयीन्द्र श्रीपादैरेव द्वैतवेदान्त राद्धान्तः निष्कण्टकं प्राकाशि । नोचेन्मध्वसिन्धान्तः लुप्तप्राय एव अत एवोक्तं भगवत्याभारत्याः—
'आकल्पं मे कल्पय जीवनेच्छोः' इति ॥

मुरली:— किमेतत्स्पष्टमुदीर्यताम् ॥

गुरुप्रः— तदानीन्तनकालः ; श्रीशङ्कराचार्य विद्यारण्य समकक्ष्यै रद्वैतविद्याचार्यै श्शैवाद्वैतमत प्रवर्तकैः, अप्पय्यदीक्षितेन्द्रैः विभूषितः किल ? । एतैरद्वैत साधक नयगुम्भिताः नैकेग्रन्थाः विरचिताः; द्वैतसिद्धान्तोपरि दुर्धराः दोषाभासा उद्घोषिताश्च । तदीयप्रबन्ध खण्डनपरान् चतुरधिकशत-ग्रन्थान्निर्माय, तद्दोषाभासोद्धरणेन द्वैतवेदान्तराद्धान्तं निरर्गलमाचन्द्रार्कं स्थापयामासुरिमे श्रीमद्विजयीन्द्रगुरुसार्वभौमा इत्यत्र नकापि संशीतिः ॥

मुरली—पूर्णप्रज्ञौ:—तेष्वप्पय्य दीक्षितकृत कृतकृतिखण्डनपरेषु प्रबन्धेषु पञ्चषान् निर्दिशत ॥

**गुरुप्रः**— दीक्षितेन्द्रकृत 'मध्वमत विध्वंसना' ख्य व्याख्योपेतस्य 'मध्वतन्त्रमुखमर्दना' ख्य ग्रन्थस्य दूषणपरः 'मध्वाध्व कण्टकोद्धारः' [मध्वतन्त्रमुखभूषणम्] एकः ॥

**पूर्णप्रज्ञः**—किमयं मुद्रितः ?

**गुरुप्रः**— एकाधिकरण पर्यन्तमेव मुद्रापितोऽयम् । अस्मिन्ग्रन्थे पञ्चाधिकरणानि विस्तरशः निरूपितानि इतरत्सङ्गृहीतम् ॥

**मुरली**ः— ततः !

**गुरुप्रः**— दीक्षितेन्द्रीय 'उपक्रमपराक्रम, शिवतत्वविवेकयोः' खण्डन परावपरौ 'उपसंहारविजय, परतत्वप्रकाशिका' भिधौ प्रबन्धप्रवरौ विराजितौ विजयीन्द्रयतिचन्द्रैः। उपसंहारविजयेतावत् उपक्रमापेक्षयोपसंहारस्य प्राबल्यं सम्यग्विवेचितम्, मीमांसा नयगुम्भितम् । परतत्वप्रकाशिकायान्तु—विष्णोस्सर्वोत्तमत्वं परममुख्यवृत्या निखिलाम्नाय प्रतिपाद्यत्वञ्च श्रुत्यादिभिस्समर्थितम् । एतेभ्य इतराणि अप्पय्यदीक्षितानां ग्रन्थखण्डनपराणि-"तुरीयखण्डन, नयमुकुर, विरोधोद्धार, वाग्वैखरी, वादमालिका, चन्द्रिकोदाहृत न्यायविवरणादीनि वाचितानि । किञ्च, दीक्षितेन्द्राणां विद्यागुरुभिः नृसिंहाश्रम मुनि विरचित 'भेदधिक्कार' (सव्याख्या)स्य खण्डनपरं 'भेदविद्याविलासा' ख्य ग्रन्थरत्नमरीरचत् । तथा भेदधिक्कारस्यैव खण्डनपरा, अपरा अद्वितीय श्रुतिस्मृतिसमलङ्कृता द्वैतवादस्य मुकुटप्राया 'अद्वैतशिक्षा 'ख्या कृतिरपि व्यरचि ।

एवमेव समग्रटीकाः व्याख्याताः । तत्रापि सूत्रप्रस्थाने 'न्यायमौक्तिकमालादि' नैकाः कृतयो विरचिताः । श्रीबादरायणप्रणीत 'भागवत 'मपि व्यख्यातम् । एवं 'सुभद्राधनञ्जय, उभयग्रस्तराहुदयाख्ये' दृश्यकाव्ये, 'श्रीव्यासराजविजयादि' श्राव्यकाव्यानि च विरचितानि । एतेषां यतीन्द्राणा मनितरसाधारण पण्डित्य प्रभावाद्यवलोकनेन परितुष्टो 'अळिय रामराजा' भिदकर्णाटकसाम्राज्याधिपः (विजयनगरसिंहासनाधीश्वरः) नैकवारमिमान् 'रत्नाभिषेकेन' सममानयत् ॥

उक्तंच 'राघवेन्द्र विजये'—

'विद्वद्वरोऽस्माद्विजयीन्द्रयोगी विद्यासुहृद्यास्वतुल प्रतापः ।<br>रत्नाभिषेकं किल रामराजात्प्राप्याग्रलक्ष्मीनक्नाग्रहारान्' ॥ इति ॥

**पूर्णप्रज्ञः**—[सभक्तिकं] एतादृश महामहिमोपेतानाममीषां नामश्रवणमात्रेणैवपूताऽस्मः । ततस्ततः ?

**गुरुप्रः**— अमीषामन्तेवासिन स्सुधीन्द्रपूज्यपादाः, विशेषतः प्राभाकरमिश्र, भाट्टनां राद्धान्तेषु, महाभाष्ये, व्यासीय शास्त्रेच पण्डित्यभाजः । गुरुचरणाइमे श्रीव्यासराजयति सार्वभौमविरचित 'तर्कताण्डवाख्य' प्रबन्धमणेः 'सद्युक्ति रत्नावल्याख्यां' व्याख्यां; तथा शुल्बसूत्रस्य 'प्रदीपा' ख्यां व्याख्यामरीरचन् । एवं दुःखबोध 'भागवताद्वितीयैकादशस्कन्दस्य विवरण 'मपि विरचितवन्त इमे ॥

एतैः—'सुभद्रापरिणयनाटकं व्यासराजाभ्युदय अमृताहरण, दयालुशतक, वैराग्यतरङ्गादीनि' पद्यकाव्यानि, अलङ्कारशास्त्रे—'अलङ्कारमञ्जरी, अलङ्कारनिकष, कृष्णयत्व-

कवीन्द्रकृत रघुनाथभूपालीयव्याख्या 'साहित्य साम्राज्या' द्यनितर साधारण ग्रन्थरत्नानि विरचितानि ॥

मुरली:—[साश्चर्यं] अहो ! सर्वतन्त्रस्वतन्त्रता !! साहित्यालङ्कारेष्वीदृश्याः कृतिवराः निर्मिता इत्येतन्महानन्दप्रदम् ॥

पूर्णप्रज्ञः—अयि भो मित्रवर्य ! त्वत्समागमेनाश्रुतपूर्वानति तृप्तिप्रदान्विषयानश्रौषम् । अमीषां दृश्यकाव्य चतुरीं किञ्चिद्वर्णयत !

गुरुप्र:— इदानीं भोजनवेला समासन्नास्ति । अनन्तरं मन्त्रालय गमनसमये यथामति कथयिष्यामि तावत् ॥

सर्वे:— तथास्तु ! [निष्क्रान्तास्सर्वे]

॥ इति कविसार्वभौम कविताकौशल्ये ॥
॥ गुरुमहिमावर्णनाभिधः प्रथमोल्लासः ॥



## ॥ अथ द्वितियोल्लासः प्रारम्भः ॥

[मन्त्रालयगमनपथः—मुरलीधर पूर्णप्रज्ञदासादि विद्यार्थिभिस्सहितो गुरुप्रसादशर्मा मन्त्रालयंप्रति प्रस्थितवान्]

मुरली:—[गुरुप्रसादंप्रति] सुहृद्वर ! कथय, श्रीकविसार्वभौम कविता कौशल्यम् ! ॥

गुरुप्र:— किममीषां कवितानैपुणीमुपवर्णयितुं वयं प्रभवामः ? एतेषां माहात्म्यं श्रीमद्वादीन्द्रतीर्थ यतिवर्यैरेवमुपवर्णितम्:—

'व्याधूतावद्यहृद्यामितकृति रचनाचारुचातुर्य हृष्यत् ।
कर्णाटक्षोणिपाल प्रतिपदरचितानेक रत्नाभिषेकः' ॥ इति ॥

तथा श्रीराघवेन्द्रविजयेऽपि—

अतुल वितुल विद्वन्मण्डली लाल्यमानः
प्रभुमणि रघुनाथ प्रौढभूपालकेन ।
निहित निखिल विद्वन्मौलिपादः सुधीन्द्रः
परजन दुरवापं प्राप हेमाभिषेकम्' ॥ इति । एतेन

वेङ्कटपति नृपतिना रत्नाभिषेकं, तञ्जापुरीय रघुनाथ भूपतिना हेमाभिषेकञ्च प्राप्तवन्तस्सुधीन्द्रपूज्यपादा इति सिद्धम् ईदृशमहामहिमोपेतानां माहात्म्यं यथामपि अहमपि वाचोविशुद्धिसिध्यर्थं प्रतिपादयामि । तत्रतावद्दृश्यकाव्येषु प्रथमतः 'सुभद्रा परिणय' नाटकीय सरसरचनां निरूपयामि ॥

पूर्णप्रज्ञः—अपिमुद्रितमस्ति सुभद्रापरिणयम् ?

मुरली:—मुद्रितमेव ! तदेव किमेतदीयम् ?

**गुरुप्र:—** न, तत्त्वन्यकविकृतम् । एतदीयमन्यद्वर्तते । अस्मिन्प्रधान रसश्शृङ्गारः, तदानुगुण्येन इतरेपि रसास्समावेशिताः, धीरोदात्तश्च नायकः । प्रख्यातमितिवृत्तम् । भारतान्तर्गत सुभद्राधनञ्जय विवाहोत्सवकथाऽत्रवस्तु । इदं षडङ्ककम् । प्रस्तावनायां सूत्रधारमुखेन नाटककथासूचन समये स्वगुरून् श्रीविजयीन्द्रयतीन्द्रान्—अतिगभीर दुःखबोध महीमण्डल मण्डनायोद्दण्ड पण्डितप्रकाण्ड मण्डलीमानितालङ्कार मण्डितानन्यप्रमुख प्रचण्डपद भाण्डागाररूपेण—

'अस्तिखलु जगति वन्दन रतिकन्दलदतिबन्धुरमतिसिन्धुर पतिमन्थर गतिसिन्धुर धुरन्धर गन्धिल गण्डस्थल निष्यन्ददमन्द मदकबन्ध गुणबन्धितेन्दिन्दिर सन्दोह झङ्कीयालङ्क्रिया जङ्घनदङ्क्रिया.........गणनातीत गम्भीरगुणसान्द्रः कुवलयचन्द्रो विजयीन्द्रोनाम संयमीन्द्रः' इत्यन्तेन प्रास्तौषीत् । तथा स्वीय नाटकनामञ्च चक्रबन्धपद्येन समसूचयत् ॥

**मुरली:—** अहो ! दण्डकस्यास्य प्रौढताऽनन्यसाधारणी ॥

**पूर्णप्रज्ञ:—** किं तत्पद्यम् ! चक्रबन्धरूपेण प्रदर्शयस्तावत् ॥

**गुरुप्र:—**

'पद्यासुष्ठुनियन्त्रितं श्रुतिसुखं नानारसोपस्कृतम्
विश्रम्भग्रथनावहं रतिसुहृत्पाठ्य पारिप्लवम् ।
विद्वद्राज समर्पिताकृति महोत्सेकं प्रवीणाश्रुतम्
तन्वङ्गीपटु संविधान विभवं तन्वन्तु वन्द्यैश्श्रुतम्' ॥ इति ॥

[चक्रबन्ध चित्रं दर्शयति]

**मुरली:—** अपूर्वमेतत् । ततस्ततः ?

**गुरुप्र:—** तत्रैव श्रीमदाचार्यानारभ्य विजयीन्द्रगुरुपर्यन्तानां सर्वेषां गुरूणां महिमानमवर्णयत् ॥

**विद्यार्थिनामपरः—** प्रस्तावनाङ्गं कथोद्धतादिषु किमभिहितम् ?

**गुरुप्र:—** प्रस्तावनानन्तरं विष्कम्भ च्छलेन गर्गाचार्या लब्धवर्ण वादव्याजेन प्रवृत्तकथामनुसृत्य पात्र प्रवेशात्कथोद्घात एवादृतः ॥

**अन्य:—** तत्रत्य कथा सङ्क्षिप्यवर्ण्यताम् ॥

**गुरुप्र:—** द्वारकानगरे, वसन्तोत्सवसमयेऽभ्यस्त शस्त्रशास्त्राणां यदुकुमाराणां मभ्यासकौशल सन्दर्शनाय सबहुमानमाकारितो बलदेवेन धनञ्जयः ; प्रद्योतनवरप्रभाव विद्योदितानितर परीभव सम्भव विभव पाञ्चालक पालक सजीवग्रहण धुरीणनिजग्रहः ; अनन्य सर्वसहासहाय साधारण धनुरारोपणपणगृहीत पाञ्चालिकापाणिः, स्वबलपरितोषित पशुपतिप्रत्त पाशुपतास्त्रो मध्यम पाण्डवः ॥

विजय समक्षमं यदुकुमारा स्स्वीय शस्त्राभ्यास कौशल्यं सन्दर्शयन्ति । तदनु पार्थाय मणिप्रदान च्छलेन देवनाथेन प्रेषित स्सतुम्बरुर्नारदो, नीलमेघरुचि विराजित कमनीय वपुषा

चतुर्दश भुवननाथेन रुक्मिणीजानिना माधवेन विराजमानसभायां प्रतिवेश यदुनाथप्रमुख वन्दन पुरस्सरम् ॥

सर्वजन वन्दन कन्दलितानन्दतुन्दिलो देवर्षी स्सर्वान् सान्त्वयित्वा बलरामेण संपूजितः, वीणावादनमिषेण पार्थाय सुभद्रादर्शनं चिकीर्षु मधुरिपुभगिनीमाह्वयेत्यवादीद्बलभद्रम् । तदा सीरपाणिना वीणावादनाय समाकारिता सुभद्रा, वीणामवादयत् । परस्परमवलोकनेन जातानुरागौ सुभद्रा धनञ्जयौ । तत स्सुभद्रा वीणावादनाकर्णनेनामोघानन्दभरितो देवर्षिः, तन्नैपुणोपलितः नारायणीमस्तौत् । धनञ्जयोऽप्यपवार्य विदूषकं प्रति यदवर्णयत् तदिमे कवीश्वराः, एवमुल्लिखन्ति । तद्यथा—

"धनञ्जयः—[विदूषकमपवार्य] सखे ! इदानीमपि इयञ्च समञ्चित पञ्चम प्रपञ्चित विपञ्चिकं, आकुञ्चितलोचनप्राञ्चलं, अनतिचञ्चलकनीनिकं, आचपलकुचलिकुचं, उन्नमितचिल्लिकनुल्लसित कपोलपुलकं, उद्वेलघर्मजल हारभरं, उन्मुखोदस्तृणस्तोम विलास हरिण शावकं, अतिनिश्चल रसिकलोक मतिविस्मित वैणिक वितानं, उचितानमानमुप-वीणायमाना मामकमपहरति मानसमानताङ्गी । अपिच—

कुचकुहनसुमेरुतुङ्ग शृङ्गद्वयान्तः
श्रमजल सुरसिन्धौ मज्जतीमीनकेतोः ।
अगुणगणचगीतिं सङ्गिरन्ती किमस्या—
श्चिकिलयिषतिवाचां चारुतां वल्लकीयम्" ॥ इति ॥

मुरली:—अहो ! लोकोत्तरा रसानुगुण प्रासबद्ध पदविन्यासचातुरी ! ततस्ततः ?

गुरुप्र:— तन्मध्ये देवर्षिः श्लेषवाक्येन सुभद्रामनोरथं पार्थाय प्रबोधयितुं सीरपाणिंप्रति—'वत्स ! सुभद्रामेनां सुयोधनाय समर्पयसीति ममहृदयेऽत्यानन्द' मित्यवादीत् । तदाकर्णनेन सुभद्रा वेपमानाङ्गीबभूव । विदूषकःश्लोकार्थं स्फुटीचकार विजयशङ्का निवारण पूर्वकम् । एतद्दृढी कर्तुं वैतालिकमुखेन "विजय" पदघटित पद्यमापठयत् । विजयपद श्रवणेन उपविष्टमेनं धनञ्जयंमत्वा कृशाङ्गी अनन्दाश्रुनयना तं पार्थं निर्निमेषं दृगञ्चलेनापश्यत् । एतदप्यवलोकनेन किरीटी अपि गतशङ्कस्सञ्जातः ॥

तदनु—'मुखसन्ध्यङ्गबिन्दु' सिद्ध्यर्थं कथाविच्छेदाय चेटीपात्रं प्रवेशयित्वाऽभिनव नन्दनवने दोलोत्सवनिरीक्षण व्याजेन सुभद्राऽर्जुनयो स्तावद्वियोगं सम्पादयति कविकण्ठीरवः । प्रथमाङ्ककथात्वेतादृशी ॥

पूर्णप्रज्ञः—अतिमन हरं कथावस्तु ग्रथितं यतीश्वरैः । ततः !

गुरुप्र:— द्वितीयाङ्के प्रथमतः धनञ्जयस्य मानाऽवस्था सुष्ठु वर्णिता । तथाहि—

कामं कामपि कामनीयक विधिं भोः कामयित्वा मनः
कामस्याजनि बाणलक्ष्यमधिकानन्दत्व सान्द्री भवत् ।
कामस्योचित भूमिरेतदितरा कामन्मथार्तिच्छदे
कामन्दायित शक्तिरस्ति सकला लोकामरस्त्रीसमा ॥

…………अहो ! अविवेकता मनसः…………अथवा किं कृतं मनसा ? अपितु सैव मह्यमपराध्यति…………(सोन्मादमिव)

वक्ष्यामिवाम्भोजशरस्यतिद्याम्
द्रक्ष्यामि तत्प्रौढिमिवैनदाम्रम् ।
सह्यामि कं कैशिकमुद्वहन्तीम्
पश्यामि किंवा परमाणुमध्याम् ॥

[स्वगतमिव] तदेनां चाटुसन्दर्भैरदभ्र प्रणयिनीं करोमि [प्रकाशमिव] अयि ! अकारण-मङ्गीकृत मौनमुद्रे ! मदालसगमनविजित मत्तभद्रे ! सुभद्रे !! भद्रे ! किमिति न प्रतिपद्यसे प्रतिवचनानि ? …………कथं कारमकारणं नलिन लोचना न प्रतिपद्यते प्रतिवचनानि [सविषादमातर्क्य] अहो ! इदानीमेव नयनपथमवतीर्णा नलिनेक्षणा—

दीर्घापङ्गा दीनदीनावलग्ना मग्नाकिंवा मानसेमामकीने ।
मोहध्वान्ते मोहनाङ्गेनिलीना किंवा कामोन्मादितं विप्रलब्धुम्" ॥

………… । इत्यादि ॥

मुरली:— अहो ! विरहानल दन्दह्यमान मानसस्याऽर्जुनस्य कामोन्मादवर्णन चातुर्य मतिमात्रं हृदय-द्रावकं ग्रथितं यतीन्द्रैः ततः ॥

गुरुप्रः— ततश्चेटीपात्र समावेशेन सुभद्रायाः धनञ्जयेऽभिलाषं, विरहतापं, तद्विषये देवकीवसुदेव वासुदेवानां सम्मतिं च संसूच्य; सुभद्रापरिणयनाय सीरपाणिनाहतो दुर्योधन स्समागत इति च वार्ता धनञ्जय श्रावयित्वा, चिन्तापरं पार्थं मधुरवाणी वृत्तान्तेन विदूषक मुखा-त्समाश्वासयति । इति द्वितीयाङ्क कथा ॥

अन्यः— ततस्ततः ?

गुरुप्रः— तृतीयाङ्के—आदौ प्रवेशकः ग्रथितः । तत्र चूलिका भ्रमरक्योः पात्रप्रवेशेन—माधव मधुरवाणी धनञ्जयैरेकान्तशालापरिसरे—'अम्बा वसुदेवाभ्यां कापि यादवकुल कन्यका भर्तृहारिका भूषण भूषिता सुयोधनाय दापनीया, परिणयोत्सवदर्शन सङ्कत कामिनीजनवेष भूषितेनानेन वेषान्तरभूषितां तां गृहीत्वा राजनगरतो गन्तव्यम् । अनन्तरं कथं कथमपि सङ्कर्षणोऽनुमन्तव्यः' इत्यामन्त्रितम् । अथ केरलकेन विदितैतद्वृत्तान्तो सीरपाणिः, सकल निजगृह द्वारपालकान्यादवनापि पृथक् पृथक् समाकार्य सर्वदाऽप्रमत्तचित्तैर्विशेषतो विवाहसमये भवितव्यमिति नियोज्यैतद्वृत्तान्तं अजानन्निव विडम्बितवान् । श्रुतैतद्वार्ता सुभद्रामपि माधवस्समाश्वासयति । तदनु परस्पररागसूचकलिखितपरस्पराकारे चित्रफलके व्यत्ययेनाऽन्योन्यं हस्तंगते इत्यादि वृत्तान्तमसूचयत् ॥

तदनन्तरं विदूषकेन सहोपविष्टेन कामयमानावस्थेनार्जुनेन: सुभद्रायाः प्रभात समय संदृष्ट स्वप्नार्थ विवरणार्थं ज्योतिषानयनायाऽगतया मधुरवाण्या सह सल्लापं वर्णयति । ततः पार्थेन प्रेरितस्सुभद्रायै तद्वृत्त चिन्तामणि सहितो गृहीत ज्योतिषवेषो विदूषकः मधुरवाण्या सहितस्सुभद्रान्तः पुरमवलोक्य इत्थमवर्णयत्:—

'अयञ्च पताकिका लम्बमानाम्बर संलिखित शम्बरारेर्वैदूर्यमणि कुट्टिमेषु, सञ्जनितानेक प्रतिबिम्बैरम्बुजासन स्पर्धयेवासंख्य मीनकेन निर्माण प्रतीति मापादयन्, जलसरणी मङ्गीकुर्वाणो जातुचिदेतावमृशेतमात्म शरणाम्बुजायताक्षीः, करैरिति प्राकारमण्डलेन चण्डभानु चन्द्रमसावुपरुन्धानो ध्रुवस्थान प्राप्तिहेतो विबुधापगा सलिलशीकर विरचितावगाहो विभूति विभूषितानि गम्भीर निजाकरो·········सौधो रत्नकुट्टाभिधानो दरीदृश्यते'। इति। ततः सुभद्रायाः विरहावस्था वर्ण्यते। तत्रेदं पद्यं, इमानिच वाक्यानि—

"हाहा मन्मथ मन्मथ त्वमिदमुक्त्वा बाधसे किं
बाधमानोपि विमुग्धकन्यकाजनं लज्जसे नोवाकथम्।
किन्ते निर्जित निर्जरेश्वरंमुखा संख्येय वीरस्यमे
बाधा···न्मलिनैव कीर्ति पटली ज्योत्स्ना क्षणान्नो भवेत्॥

··········अथवा मादृश विमुग्ध विरहिणीजन मात्र बाधेनैव पुण्यवशेन त्रिभुवने प्रसिद्धः। तस्मादनेन स्त्रीजनमात्र बाधकलम्पटेन किंवा सम्भाषणेन? सर्वं दैवमेव करोति"

एतादृशावस्थोपेतां तामवलोक्य तत्र निक्षिप्त पद्मपत्रादीनि वर्णितानि ज्योतिषवेषधारिणा विदूषकेण चित्रभानुना—

'कथमिदानीं प्रशवशर विशिख विदलित मानस सारस विनिस्सरन्मौक्तिकविसर इव नवमालिका वल्लिकावेल्लित वर्षा समय समुदित पृषत धोरणीव तारुण्यमद कुञ्जरेण······विशदतर शय्याप्रसूनानिचेति विलसन्ति शीतलोपचार साधनानि' अत्यन्तम्। ततस्सुभद्राकृत चन्दन रसादि दूषणम्—

"ननु चण्डभानुकिरण मित्राण्येतानि नलिनीपत्राणि, दक्षिणाचल वाताशनदंष्ट्र विषकषायितः खल्वेषोऽपि चन्दनरसः, शम्बरारिशरकदम्बानीमानि माधवीप्रभृति कुसुमानि, हुताशन समान वैभवान्यास्तरण चूतपल्लवानि, हरनिटिल नयनज्वालाप्रचण्डः खल्वेष चन्द्रखण्डः, तस्मादेतैर्निस्सीम विरहशान्ति ग्रीष्मेण धर्मशान्तिमिव कुर्वन्तीनां युष्माकं तर्कयामि नैपुणीम्" इत्यादि॥

मुरली:—अहो! विरहिजन चित्तमति विचित्रतया चित्रितं कविसार्वभौमैः। ततस्ततः?

गुरुप्रः— ततः, नवमालिकया—सुभद्राप्रतिबिम्बित चित्रफलके स्वलिखिते पार्थः; सुभद्रानुरागसूचकं पद्यत्रयं लिलेख इति कथनम्॥

पूर्णप्रज्ञः—तत्र पद्यमेकं श्रोतुमिच्छामि। कथय सदयम्!

गुरुप्रः— "धन्योऽयं धरणीतले तव कृते धातुःकृतेरास्पदम्
मान्योमन्मथभूपते जितरते सौन्दर्य सामस्त्यतः।
व्यातेने पुनरासमस्त सवनं वैतानिकं सेवनम्
धर्म्यैवावनमेत्य सोयमसकृत्तेपेतयः पावनम्"॥

मुरली: —साधु! साधु!! ततस्ततः?

गुरुप्रः— सुभद्रानुज्ञयाऽऽहूतेन ज्योतिषेन सुभद्राऽऽशीर्वादन पुरस्सरं स्वप्नदृष्ट, हस्तपरिभव, ऐरावत समारोहण, शचीपतित्वादिकीर्तन प्रमुख वृत्तान्त विवरण पूर्वकं अर्जुनपरिगृहीता भविष्यतीति सुभद्रा समाश्वासनेन पार्थीयान्पूर्वचिन्तामणि प्रदानपूर्वकं, तुष्ट्या तया स्वपरितोषणव्याजेन रत्नादि दानसमये—" किंनुवा मन्यते वयस्य धनञ्जय" इति सङ्कीर्तन-द्वाराविदितवेषेण विदूषकेन प्रत्यागमनम् । तस्मिन्माधवादीनामागमन वृत्तान्तेन सर्वेषां पुनरपि वियोगः । इत्यादिः, तृतीयाङ्के वर्णितः ॥

पूर्णप्रज्ञः—चतुर्थाङ्के कः कथा संयोजिता ?

गुरुप्रः— प्रथमत श्शुद्धविष्कम्भकः । तत्र कञ्चुकी वेत्राजकयो स्सल्लापनिभेन वक्ष्यमाण कथा सूचिता—सुभद्रापरिणयनाय गमनोद्यतं कौरवेश्वरं प्रति 'त्वया न गन्तव्यं नोचेदन्योन्यं जन्यं स्यात्, तच्चनश्रेय' इति दूतमुखेन अकथि देवाधिपतिः । तदाकर्ण्य भीष्मद्रोणादिभिर्निवारितोऽपि दुश्शासन राधेयादिभिः प्रबोधितो दुर्योधनः द्वारकां गन्तुमुद्यत इति वेत्राजक वाक्यमाकर्ण्य; सीरपाणिरपिः—'सुभद्रा सुयोधनाय नदेया, किन्तु धनञ्जयाये'ति देवेन्द्र दूतमुखाद्वृत्तान्तमाकलय्य चिन्तापरो बभूव' इत्यकथयत्कञ्चुकी इत्यादि ॥

ततः गर्गशिष्यलब्धवर्णेन विवाहार्थं सुयोधन स्समायातीत्युदन्तं श्रुत्वा मधुरवाणी; माधवं प्रतिबोधयितुं, उद्धवसहितं रुक्मिणीजानिमासाद्य सर्वमेतद्वृत्तान्तं निवेदितवती । तच्छ्रुत्वा कोपाविष्टेनेव 'किमत्रास्माभिः परवशैरनुष्ठातव्य'मिति वासुदेवेनोक्ता, मधुरवाणी,—'श्रुतं श्रोतव्यं ? एवं खलु निष्करुणानि भ्रातृहृदयानि जानन्ती प्रथममेव साऽनर्थे प्रवर्तत' इत्युवाच । ततो माधवः किञ्चिद्विचिन्त्य, एवमवादीत्— तत्रेमे पद्य इमानिच वाक्यानि ;—

'गत्वाहं प्रतिपाल्य गौरवमीर्तिं गेहं प्रत्यग्रजो
वक्ष्यामि प्रणिपत्य पादयुगले नीत्यावचो मे नचेत् ।
अङ्गीकृत्य करिष्यतीदमहमेवैकस्तदा सर्वथा
पार्थाय प्रियसाहसाय भगिनीं प्रीत्यार्पयिष्याम्यहम् ॥

यदि पुनरिदमुदन्त माकलय्य बलदेवः स्वयमेव प्रतिषेद्धुमायास्यति ; अथ तदाः—
[सभ्रूभङ्गम् ]

आयातुस्स्वयमेव सीरमुसलौ धृत्वैकतां यान्त्वा
घूर्ण्याद्व सिन्धुरुद्धर सुरव्रातोर्मि संघूर्णितः ।
यद्वा कौरव कुञ्जरेन्द्रनिकरै र्युद्धार्थमागम्यतां
चक्रेण क्षणतो जगत्त्रयमिदं ध्वक्षामि सर्वं तदा ॥

सत्यं श्रुणु ! किं बहुना ? सर्वथा सुभद्रामर्जुनाय दास्यामि, पित्रोः प्रमोदश्च ' इति ॥

पूर्णप्रज्ञः—अहो ! वीररसाङ्ग क्रोधवर्णनम् ! ततः ?

गुरुप्रः— उद्यानवनस्थाया स्सुभद्रायाः, चेटीमुखेन ;—'विदित रहस्येन बलरामेनाऽऽहूतस्सुयोधनः त्वरया समागमिष्यति' इति विदित वृत्तान्तायाः प्राणत्यागे उद्यमस्तत्र इमानि वाक्यानि—

'अहो ! इदानीं सर्वमपि सुलभम् । हृदय ! विसर्जय इतराशां, तस्यैव महानुभावस्य चिन्तय मुखमुख सुधांशुं ! आलिङ्गस्व तस्यैव मनोहर शरीर शोभाम् !! आराधय, तस्यैव चरणपद्मं ! आकर्णय, तस्यैव सुधालापान् !! किंबहुना, जनन जननेऽपि तमेव सेवस्व !...... एषा मे भगिनी नवमालिका मम वियोगेन रुदतीव हिमबिन्दुनिकरै स्तत्प्रसादेनां कण्ठे कृत्वा सहोद्बन्धनं करोमि । ......अहो ! एतद्भगिनी मरणकारणंत्वमेकस्यैव बलदेवस्य भवतु !..."

मुरली:—[स्वयं शोकाकुलः] अहो ! शोकरसानुगुण पदसन्दर्भ रचनाऽनितरसाधारणी । ततस्ततः !

गुरुप्र:— '......हा मधुरवाणी !, उज्झित्वा मां कथं नयसिकालम् ? मम प्राणवल्लभा खलु त्वम् ! अहं! पुनर्निष्करुणा विहाय त्वां गच्छामि । आर्य माधव ! इदानीमङ्कस्तव शून्यतामापन्नः ।......... हा अम्ब ! इदानीं निर्व्यासङ्गायाः प्रलपन्त्याः काथाऽऽश्वासयितृका भविष्यति ? ......हा तात पुत्रिका वत्सलः खलु त्वम् ! ......हा महानुभाव ! एकवारमपि मां चित्ते कुरुष्व !! तावतैव कृतार्थाऽस्मि । ............हा आर्यबलदेव !! ............सिद्धमनोरथोभव !!! [नाट्येन पतितुमिच्छति] ........." इत्यादि ॥

पूर्णप्रज्ञः—[सशोकं] कष्टं भोः कष्टम् ? एतच्छ्रवणेन सुभद्रामिदानी मनुभूयमान दुःखामिव अनुभवामि !!

अपरः— अहो, रसपोषणरीतिरन्यादृशी यतिवर्याणाम् । ततस्ततः ?

गुरुप्र:— श्रुततद्वृत्तान्तेन माधवेन पार्थाय त्वां दास्यामीति सशपथं सुभद्रा समाश्वासित । तत्र समागतेन बलरामेन 'सर्वथा कृष्णमूलकमिदमनर्थजात' मित्युक्तः, कृष्णोऽपि—'बिभेमि गुरवे प्रतिवचनात्' इत्युक्तवान् । तेन क्षुब्धान्तः करणेन मुसलिना 'कथं गुरुवचनानुसरण शीलः ?'' इतिप्रेरितः 'नाहमितरवदुल्लङ्घयामि गुरुचरितानि' इति चक्री प्रोवाच तेनातिक्रुद्धः—'आः ! तिष्ठ तूर्णींआबाल्यदुर्विनीत !' इत्यादिन सीरपाणि माधवयोरन्तःकलहो वर्णितः ॥

एतन्मध्ये सुरपति वाहिन्या पराजितं सबलं दुर्योधनं ; धनञ्जयो जित्वाऽऽहवे शचीपति मानीनवानितिव कथां प्रख्याप्य बलरामादीनां निर्गमनं, ततस्सुभद्राऽपि विजयस्य विजय-महोत्सव दर्शनाकुलिता ससखी निर्गतेति ईदृशीकथा चतुर्थाङ्के ॥

मुरली:—अहो ! उत्तरोत्तरं बलीयः ! प्रथमतृतीयाङ्कादस्मिन्नङ्के कथा रुचिरतरा सहृदय हृदयाह्लादिनी वर्तते । ततस्ततः ?

गुरुप्रसादः—पञ्चमाङ्के—भीभत्स, वीर, करुण, शोकरसाः परिपोषिताः । प्रथमतः ; देवेन्द्रपराभूतो दुर्योधनः, सर्वमिदं बलभद्रमूलमनर्थजात मिति मन्वानः, तद्भगिनीं सुभद्रां विदूषकंचाऽऽहृत्य मारयितुमपभ्रंशं प्रचोदयामास । सो ऽ स्वपुत्रिकया पैशाच्या आमन्त्र्य, तस्यै सुयोधनाभि प्रायमावेद्य, सुभद्रामारणे तां नियोज्य, चित्रभानुमारणे स्वयमेव व्यापृत इति प्रवेशके कथा सूचिता ॥

पूर्णप्रज्ञः—अहो, दुर्योधनस्य दौर्मनस्यम् ! ततस्तपः ?

गुरुः— ततः, पुष्पाहरणाय सखीभिस्सह वनंगतां, सुभद्रामाकृष्य पैशाची, तारापथ पथेन गङ्गातीरं गतेति लब्धवर्णादवगत वृत्तान्तया मधुरवण्या प्रेरितः विजयोऽपि शोकाकुलितो बभूवेति वर्णितम्। तत्रेमे पद्ये ;—

'त्वल्लावण्यपयोनिधौ तरुणिमे चूडावलोकात्ययं
मग्नायस्सरविक्लवाय मनसे जालं व्यधत्वां दृशौ।
सङ्गीतामृत माधुरी तवपुनः प्राप्ता सकृत्कर्णयोः
सीमानं मनसिप्रलात्किक सुखप्रारोह निश्रेणिकाम्॥

यामाधाय हृदाप्रमोदलहरी पूरै स्समाश्वासितम्
यामासाद्य मनोरथामृतरसैः प्राणै स्समुज्जीवनम्।
यामालोक्य शशाङ्क कर्दमरसे रासिक्त मक्ष्णा सदा
तै स्सर्वै रहहा विधातरधुना शून्यं कथं स्थीयताम्?'॥ इति

ततः लब्धवर्णेन विदित वृत्तान्तः सुभद्रां पुनराहरिष्यामीति मधुरवाणीं समाश्वास्य गच्छन्, पथि पतितं, पूर्वं विदूषकमुखेन सुभद्रायै प्रेषितं मणिमवलोक्य तत्साहाय्येन सुभद्रां प्राप पार्थः। अत्रतु द्वारकापत्तने अवगतवृत्तान्तैर्माधवादिभिः प्रतिबोधितशीरपाणिः, [सरोषं] 'सत्यमरे दुरात्मन्! इदानीं वितीर्ण गुरुदक्षिणोसि' इतिविनिन्द्य दुर्योधनं, तस्याहरणाय यादवसेनां प्राहिण्वन् पितरौ समाश्वासयितुं समाधवो निष्क्रान्त इतिच कथा पञ्चमाङ्के वर्णिता॥

मुरली:— अयि सुहृद्वर! श्रृङ्गाररसप्रधान नाटकमिति कथितं पद्ये। श्रृङ्गारो न प्रपञ्चितोऽस्मिन्नाटके!

गुरुः— षष्ठेऽङ्के श्रृङ्गारः प्राधान्येन, आनुषङ्गिकतया हास्यरसोऽपि वर्णितः। आदौ— मधुरवाणी मुखविदितवृत्तान्तयो र्देवकी वसुदेवयोः प्रलापः—

'वसुदेवः—[सबाष्पम्]—

कंसानुष्ठित निघृणाधिकतर क्लेशायनोदान्मुदा
मङ्कुराण्यधिजग्मुषो मम कथं वृद्धस्य दुःखोत्तरम्।
जन्मैदंभसितावृतानल कुलप्रज्वालन प्रक्रिया
पण्डित्यैक धुरीणमद्य तनुते दैवं स्वयं दुष्कृतैः'॥ इत्यादि

तदनु माधवबलदेवाभ्यां तयोराश्वासन समये आगतेन गर्गेण सुभद्रायाः प्रत्यागमने देव्या दाक्षायिण्या—

'अथ पुनरस्य उदारकीर्तिरर्जुनोपि भागधेय वशात्समासादिताऽपूर्व चिन्तामणिनामधेय मणिना सन्दर्शित तदीय सरणिः, अचिरादुपहरिष्यती' ति सूचनं, निवेदनं च वर्णितम्॥

एतस्मिन्नेव रथारूढयो स्सुभद्रा धनञ्जययो स्सम्भाषण व्याजेन श्रृङ्गाररस स्संपोषितः। तथाहि ;—

धनञ्जयः—[सुभद्रां साभिलाषं निर्वर्ण्य] भद्रे !

चेतश्चातक पक्षितां व्रजतिते धम्मिल्लधाराधरे
बन्धूके मधुराधरे त्वधरे भृङ्गत्वमालम्बते ।
वक्त्रेन्दौच चकोरभावमयते वेदान्तिनां ब्रह्मवत्
नानात्वेप्युपधेरितीदमभितानन्दैकतामं कथम् ॥

सुभद्राः—[स्वगतं] जानामि त्वां वचनैरपि परकीयमानस पश्यतोहरत्व प्रवीणोसीति ॥

धनञ्जयः—भद्रे ?

चिरन्तन तपः फले स्त्वयिचिराय लग्नंपुरा
निरन्तरमिदं मनो निशित पञ्चबाणाशुगैः ।
विद्धमितिकथं न वितरत्यकीर्तिं ततो
विधेहि वधुराधरे तव विधेय मेनं जनम् ॥

तेन,

किं वीजयामि सुतनुव्यजनेन नित्यं
किं वाहयामि चरणावरणाब्ज जैत्रौ ।
किं वीटिकां सुदतिते वितरामि भृत्यं
संशाधि येन भविता स्वयमेष धन्यः ॥

सुभद्राः—नाहमनुचितेष्वेवं विधेष्वात्मानं नियोजयिष्यामि ॥

धनञ्जयः— तलोदरि निरन्तरं त्वदधरामृतःवातये
तपत्यनुचितं कथं तवद ा विधान मयि ।

तेन,

मधूर्मिल वचोभरैः प्रमदमन्थराश्लेषणैः
मनोभव मनोरथा नवितथान्विधेहि प्रिये ॥
[इत्यालिङ्गितुमिच्छति]

सुभद्राः—[सकातर्यं] पान्डुनन्दन ! तिष्ठ ! इदानीं हृदयं मे निरवधिकं वेपते । [स्वगतं] अये हृदय ! दुर्विनीत !! कं मनोरथं परोक्षताध्यवस्यसि इदानीं पुनः कुत्र गतं ते धीरत्वं ? अथवा, ते अयं स्वभावः !

धनञ्जयः—ननु वर्तते मत्सकाशं तदल मावेगेन ॥ [इति बलादेनामालिङ्गितुमिच्छति]

सुभद्राः—[समन्दस्मितं, सत्रासं च] पान्डुनन्दन ! विरम, सर्वथाविरमेदानीम् ॥

धनञ्जयः—विरमामि. पुनरिदानीं ;—

आश्लिष्य गाढमधरामृतमाभिलाषं आस्वाद्य चूचुकनिपीडन मारचय्य ।
आधाय किञ्चकुचयोः करजक्षतं त्वां आराधयामि मदयामि कदा प्रसन्नाम् ? ॥

सुभद्रा:—यदा नव उपहारी क्रियतेऽयं जनोऽस्मादीयै……[इति लज्जयामुखमवनमयति]

धनञ्जयः— तावत्कथं तु कथय प्रथित प्रभावाश्वेतोभवो विषहिता विषदग्ध काण्डः।
यावत्त्वदीयजन सम्मति वज्रखेटमादाय जीवितमिदं परिपालयामि ॥
[इतिबलादेनामालिङ्गति]

सुभद्राः—[भिकातर्यं] पाण्डुनन्दन ! मुञ्च मुञ्च मां !, रक्ष रक्ष विनयम् !! यत्नं मे कुलधर्मम् ॥

धनञ्जयः— यन्मुञ्च मुञ्च विनयं परिरक्ष रक्षेत्याभाषणं सततमञ्चित मञ्चमन्ते।
पञ्चायुध प्रथन काहल नाथ धीरं तन्मे प्रिये त्वदधरामृतमेव मन्त्रः॥
[इत्यस्याः मुखमुन्नमय्य बलादधरं पिपासुः पुरोवलोक्यसहसैनां विमुञ्चति]……" इत्यादि ॥

मुरलीः—अहो ! असमान शृङ्गाररस स्रोतोवहः प्रवाहो विरचितः। 'शाकुन्तले' द्वित्रैः पद्यैश्शृङ्गारो वर्णितः। अत्रतु, बहुभिरसाधारण गभीर ललितपद कदम्बैरिति 'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तले' ति गाथाऽदृष्टेतन्नाटकानां सहृदयानामेवेति तर्कयामि !! ॥

पूर्णप्रज्ञः—सत्यं खल्वेतत्, तेत्वप्रतिम प्रतिभा प्रभाव शालिनः सर्वतन्त्र स्वतन्त्राः खलु ?

मुरलीः—कथं वा हास्यरस स्संपोषितः ? तद्विवृणुत !

गुरुः— आकर्णित देवदत्तीय शङ्खध्वनिभिः—

'सौवर्ण्य स्यन्दनाग्र ध्वजपट विलुठन्मातरिश्वात्मजोसौ
श्वेतास्ते लसन्ते सततविजयिनः स्रग्धराकन्धराभिः।
सत्यं सुत्रामपुत्र स्तदयमुपगतो देवदत्तीयतां नः
शङ्खध्मानेनसद्यो ध्वनित दशदिशश्चान्द्रएव व्यनक्ति'॥

इत्यादिना ऊहित सुभद्रा धनञ्जयागमनै स्तदनु अवलोकित सुभद्रार्जुनैः; सुभद्रां समाश्वासयद्भि स्सीरपाणि माधवादिभिः, मणिसहायेन निशाचर्यपहृतां सुभद्रामद्राक्षं ततस्सुभद्रां विमोच्यान्तर्हितां तां निशाचरीं शब्दवेधिना शरेण निहत्य एतयासह पुरीमिमां प्रस्थितोऽस्मी त्युदन्तमावेदयित्रे पार्थाय बहुमानकरणवेलायां; दुर्योधनप्रेरित, अपभ्रंशापहृत, यादवजन विमोचित विदूषक पात्रप्रवेशेन हास्यरसो निदेशितः। तथाहि ;—

विदूषकः—हा हतोस्मिप्रियवयस्य ! [इत्युच्चै रोदन् भूमौपतति]

धनञ्जयः—अये ! किमेवमकारणमेव खिद्यसे ?

विदूषकः—कथमकारणमितिभण्यते ?

धनञ्जयः—किं तदभिधीयताम् ?

विदूषकः—भो वयस्य ! किं भणामि, प्राणामे पुरतोनसन्ति ॥

धनञ्जयः—कुतएतत ?

विदूषकः—ननु दुर्योधनो, सानुजशतो मृत इति ॥ [सर्वे आश्चर्यं नाटयन्ति]

धनञ्जयः—[सवैक्लव्यम्] आः किमेतदभिदधासि !

विदूषकः—ननु तमेव भणामि त्वम्मृत इति ॥

धनञ्जयः—ब्रूहिरे किं कारणमिति ॥

विदूषकः—कथं ! किं कारणमिति भणसि ? [इत्युच्चै रोदति]

धनञ्जयः—अरे दुरात्मन् ? अभिप्रायमावेदय ॥

विदूषकः—ननु भणामि अनाथस्य मे ब्राह्मणस्य मारणे ब्रह्महत्याकथं नमारयिष्यति ? अथवा, अहं वा ब्रह्मराक्षसोभूत्वा कथं न विनाशयिष्ये ?

धनञ्जयः—अये ! किमेतदुन्मत्त इव अनन्वित मभिदधासि ?

विदूषकः—भोवयस्य, निरवधिकं वेपते शरीरम् ॥

धनञ्जयः—अये ! इत उपविश्य आमूलाग्रमावेदय ॥

विदूषकः—शृणुभणामि अनिमित्तं ब्राह्मणहतक मरणम्' । ……इत्यादि ॥

पूर्णप्रज्ञादयः—[हसन्तः] ततस्ततः ?

गुरुप्रः— एवं विदूषक मुखेन विदितवृत्तान्तेन ; सर्वमपि दुर्योधन विचेष्टितं मन्वानेन तस्मै प्रकुपितेन, पार्थबहुमन्वानेन बलभद्रेन ;—

"पैतृष्वश्रेयभावं प्रथममुपगत स्सख्यमाबाल्यवृत्तम्
सर्वोत्कृष्ट प्रतापस्त्रिभुवन विदितानन्य सामान्यधैर्यः ।
लावण्यैकान्तसीमा सकल निजजनालक्ष्य दाक्षिण्यशाली
सोऽयंनोचेत्सुभद्रा ललितगुणसमः कस्तोन्यस्त्रिलोकाम्" ॥

इत्यभिनन्दितो विजयः सर्वमपि गुरुजनानुग्रहबलमित्युवाच । तदनु पार्थानुमोदनेन तस्मै सुभद्रा प्रदानाय बलरामेन प्रेरिताभ्यां देवकीवसुदेवाभ्यां धनञ्जयाय सुभद्रा प्रदानम् । तयोरवस्थावर्णनं, माधवामोदनं, पुष्पवृष्ट्यादिकं च वर्णितं कविकण्ठीरवैः, षष्ठेऽङ्के । [मुरलीधरपूर्णप्रज्ञानवलोक्य] अयिमित्रवर्याः ! एवं सुभद्रापरिणय नाटकीयकथा मया यथामतिसङ्गृह्य प्रतिपादिता । श्रीमत्सुधीन्द्रकवीन्द्राणां कवितावर्णने सहस्रमुखोपि फणिपतिः नप्रभवतिसति कोवाहम् ?

पूर्णप्रज्ञः—[सहर्षं] कविता सुधास्वादनतत्परैरस्माभि रमन्दानन्दाम्बुधि निमग्नैर्वेलापिनलक्षिता ॥

गुरुप्रः— [पुरवलोक्य] अहो महाद्वारः समायातः ! (कतिचित्पदानिगत्वा) स्रोतस्विन्यां जलाधिक्येन वस्त्राण्यार्द्री भविष्यन्ति । तेन शनैर्गच्छामः ॥

सर्वे:— तथास्तु (तरन्ति)

इति कविसार्वभौम कविता कौशल्ये
दृश्यकाव्य कौशल्यनिरूपणं नाम

॥ द्वितीयोल्लास स्समाप्तः ॥

## ॥ अथ तृतीयोल्लासः प्रारम्भः ॥

**पूर्णप्रज्ञः** (गुरुप्रसादंप्रति) इदानीमलङ्कार शास्त्रकौशल्यं किञ्चिभिगद्यतान् !

**गुरुप्रः**— इदानीं श्रान्ताभवन्तः, कथयिष्येचानन्तरम् ॥

**मुरलीः**—(सोत्साहं) पीतैतादृश कविता कौशल्यानां श्रमः कुतः ? श्रोतुमुत्सुकावयम् !

**गुरुप्रः**— तर्हि, महानन्दः । शृणुत सावधानम् । शब्दार्थालङ्कार निरूपणपरा अलङ्कारमञ्जरी नामिका कृतिः ; अमीषामेव । तत्र किञ्चिदुदीर्यते । यथा विद्यानाथेन दृष्टान्ततया प्रतापरुद्रस्सङ्गृहीतः ; तद्वदमीभि स्स्वगुरवो श्रीमद्विजयीन्द्रतीर्थ श्रीमच्चरणा अपि दृष्टान्ततया वर्णिताः !

**पूर्णप्रज्ञः**—शब्दालङ्कारेषु पञ्चषान्विवृणुत ॥

**गुरुप्रः**— अत्रायंविशेषः, एतद्व्याख्यातारः, कविकण्ठीरवा श्श्रीमत्सुमतीन्द्रतीर्थ पूज्यपादा अपि स्वविद्यागुरून् श्रीमद्राघवेन्द्रयतीन्द्रान् ः स्वाऽऽश्रमगुरून् श्रीमद्योगीन्द्रतीर्थचरणान्, तत्रैव दृष्टान्ततया, उपपादयन्ति । तथाहि ;—

"यमकं बहुवर्णानां साच्कानां द्विस्समीरणम् ।
विजयीन्द्रो जयीन्द्रोक्तं चञ्चलाक्षीचलाक्षिभिः ॥
मनोभवाधीनमना नामनागपि यद्भुवि' ॥ [अलङ्कारमञ्जरी]

(व्याख्या-मधुधारा) ;—

'साच्कानां सस्वरकाणां बहूनां वर्णानामव्यवधानेन द्विस्समीरणं, अनेकधोच्चारणं यमकम् । स्वर व्यञ्जन समुदाय पौनरुक्त्यं यमकमिति । न चैवं च्छेकानुप्रासेऽतिव्याप्तिः । साच्कानामित्यस्य नियताच्काना मित्यर्थेन तन्निवारणात् । अत एव 'भारेण भरेणवा' इत्युदाहरणम् । अत्र बहुपदे नैत्राऽतिव्याप्ति निरश्चेति चेन्न । द्वयोस्त्रयाणां वा व्यञ्जनानामावृत्ति श्छेकानुप्रास इति बहुग्रन्थेषु दृष्टत्वात् । द्विरित्यस्याऽविवक्षितार्थत्वात् । नापि लाटानुप्रासेऽतिव्याप्तिः । तत्रार्थ पौनरुक्तयस्य नियतत्वादत्र तदभावः । अत एव 'साहित्यसाम्राज्ये ;— अर्थपौनरुक्तयराहित्येसतीति, विशेषणं दत्तम् । स प्रसिद्धः विजयीन्द्रः ; जयीन्द्रः-जयीनां जयशीलानामीन्द्रः प्रभुः, यद्यस्माच्चञ्चलाक्षीणां चलै रक्षिभिः मनागीषदपि मनोभवाधीनमनाः- कामवश्य हृदयो न भवति । अत्रकाव्यलिङ्गमलङ्कारः । सर्वलोकजित्वर कामजिष्णुत्वं मनोभवाधीन मना न भवतीति वाक्यार्थेन समर्थितं, 'हेतोर्वाक्य पदार्थत्वे काव्यलिङ्गमलङ्क्रिये' ति तल्लक्षणात् ॥

अत्र पादावृत्तौ प्रथमपादस्य द्वितीयादिभिस्त्रिभिः क्रमाद्योगपद्येनच, आवृत्तौ चत्वारः । द्वितीयस्य तृतीयचतुर्थाभ्यां द्वौ । तृतीयस्य चतुर्थे एकः, प्रथमस्य चतुर्थे द्वितीयस्य तृतीये चैकः आहृत्य नवप्रभेदाः । अत्रोदाहरणं, प्रथमस्य द्वितीयेन यथा ;—

नाम्नाय शोभा जित वादिवाचा
नाम्नाय शोभा जित वादिवाचा ।
नश्रीरयोगीन्द्र दिशावधूटी
दुकूल धम्मिल्लकमल्लि माल्यम् ॥

आदिवाचा वेदेनहेतुना आम्नाय शोभाया आभास जन्यकान्त्या, जिता वादिना वाक् येनतत्, तेन तव नाम्ना दिशां क्षौमल्लिकामाल्यकल्पं यशः नाना भाति ॥

प्रथमस्य तृतीयेन यथा :—

नानाविद्यैर्य शोभासि सुमेरोरपिकैर्बुधैः ।
नानाविद्यैर्यशोभासि शीलं योगीन्द्र मौनिनः ॥

प्रथमस्य चतुर्थेन यथा ;—

साधूनयन्ती व्रतमादरेण संयोजयेदित्यरिसूरिसङ्घः ।
सुधीन्द्र धीरुद्वहते नितान्तं साधूनयन्ती व्रतमादरेण ॥

द्वितीयस्य तृतीयेन यथा ;—

त्वद्दानकीर्ति स्तनुतेसिताभा
सद्योधुनीतामरसाल सत्वम् ।
सद्योधुनीतामरसाल सत्वं
विस्तृत्वरीयं विजयीन्द्र योगिन् ॥

तत्र प्रथमपादस्य युगपदावृत्य यथा ;—

समुद्रमानन्तर साधनेनः
समुद्रमानन्तर साधनेनः ।
समुद्रमानन्तर साधनेनः
समुद्रमानन्तर साधनेनः ॥......" इत्यादि

अत्रापि अनेक सोधाहरण प्रभेदाः वर्णिताः ॥

मुरलीः—अहो ! व्याख्येयापेक्षया व्याख्यानस्य प्राबल्यम् !!

पूर्णप्रज्ञः—[सस्मितं] अत एव इमे उपक्रमादुपसंहारस्य प्राबल्यवादिनः !

इतरः— अमीषामपि कविता प्रौढिमा असाधारणा । गुरुप्रसादशर्मन् ! शब्दालङ्कारमन्यमावेदय !

गुरुप्रः— 'छेकानुप्रास नामासौ द्विर्व्यञ्जनयुगोक्तितः ॥

व्यञ्जयो र्हलयो र्युगस्य अव्यवधानाद्विरुक्तिश्छेकानु प्रासः ।

उदाहरति—

विभाति भातिसौजन्य जन्याभुविजयीन्द्रते " ॥ [अलङ्कारमञ्जरी]

[व्याख्यायां] यथावा,—

' गोष्ठींनह्यत नह्यतः खलुहतिर्वाचारतां चारतां
माचत्वं गतभङ्गतः किलकलौ स्यातत्वराजित्वरा ।
अभ्यस्तश्च परास्त्र शास्त्रवदुपादध्वंध्युवध्वं श्रुतं
रौद्रन्तीत्यभियाभियाति सुधीयो योगीन्द्र मन्द्रोक्तयः ' ॥ इति ॥

अपरः— बन्धानुगुण पद्यं किञ्चिद्विवृणुत ॥

गुरुप्रः— बन्धेषु नैके प्रभेदा स्सन्ति । तेषु पञ्चषनिरूप्यन्ते ॥

'छूरिकबन्धः'—

'योगमार्गायिगण्यासा वाशावासा जयौजसा ।
सारसाशयते भासा साभाते यशसारसा' ॥

'खड्गबन्धो' यथा :—

'वारिजारिहारि कान्ति कीर्तिपूर्तिनर्तिता
तादृशावनीश लालसच्चकोर सन्तते ।
तेजसाञ्जसाजयीन्द्र मौनिचन्द्र गुम्भिता
तावकेनभूनभोन्तराल भूर्विराजते' ॥

'छत्रबन्धो' यथा :—

'शीताक्ष्णातावतानीता सीतायाताद्भुताहिता ।
नीतिपालन दक्षासा साक्षादनल पालिनी ॥'

'कुलाल चक्रबन्धो' यथा :—

'नयेनसेवा मनसाधवेन नवेधसाजय्यम वैहितेन ।
नतेहिवैरं मुनिनाजवेन नवेजनाकिं सरसेनयेन ॥'

'आलिकाबन्धो' यथा :—

'साजराततरामश्री रामश्रीररसामता ।
तामसा रतिदास्यान्मे दास्यान्मेषित राजसा ॥' इत्यादि ॥

प्रहेलिकापि सलक्षणोदाहरणं निरूपिता ;—

'प्रहेलिकातु प्रश्नानां स्याद्गूढोत्तर कल्पनम् ॥' (अलङ्कारमञ्जरी)

[व्याख्यानम्],—'तच्च बहुविधम् । आदिमध्यावसानेषु अनन्तरुत्तरा, बहिरुत्तरा, उत्तरगर्भा, प्रश्नोत्तरेत्यादिकम् । तत्र प्रश्नोत्तरमाह ;—

"कीदृशो विजयीन्द्राङ्घ्रि पल्लवोब्रूत पण्डिताः ॥"

बहिरुत्तरासु श्लेषेणविच्छित्ति विशिष्टमुत्तरं यथा ;—

'सौधाग्रभूमौ रुदतीं चरन्तीं
चन्द्रोनुयुङ्क्त तमियञ्च बाला ।
द्विषो जयीन्द्रे भुवि कीदृशास्ते
त्वच्चूडमौलौ वदकास्फुरन्ति ॥'

व्यस्त समस्तोत्तरत्वं यथा,—

'राघवेन्द्रेणयतिना कावादे खण्ड्यते कुतः ।
वचोस्य चेतोवा कीदृग्वादि धीरजयादृतम् ॥'

अलङ्कारमञ्जर्यां गूढं लक्षितम् । तद्यथा ;—

'प्राभावं भजतां प्रीत्यै प्रवणो विजयीन्द्र ते ।
प्रसत्तय ऋषीन्द्राणी परिचारी भवत्यलम् ॥' इति ॥

[व्याख्या मधुधारायां] यथावा :—

'सद्योवश्यमहोद्भिषामिहविभा भाग्यस्य लब्ध्वापदं
भोभास्वद्भगवाननं नहरहर्भूम्ना मुदोति क्षमः ।
श्रीमत्तत्स्वदित त्रयी पथगतामीड्यः क्रतुल्योधिको
विन्दामो विजयीन्द्र भावरमणे भावं भयत्यन्वहम् ॥' इति ।

अत्र क्रियायास्सप्तविभक्तीनाञ्चगोपनम् ॥

मुरली:—अहो ! असाधारण्यं शब्दालङ्काराणाम् । अर्थालङ्कारे किञ्चिद्वर्णयताम् ॥

अन्यः— किमर्थालङ्कारेऽपि उदाहरणतया श्रीविजयीन्द्रयतिवर्या उपात्ताः ?

गुरुप्रः— अथ किम् !

पूर्णप्रज्ञः—तर्हि, अवश्यं श्रोतव्यम् ॥

गुरुप्रः— उल्लेखालङ्कारः,—

"उल्लेखो बहुधोकेनानेकैर्वोल्लिखनं द्विधा ।
गिरिर्धृतो गुरुर्वाचि जयीन्द्रो भासिभास्करः ॥
अर्थिप्रत्यर्थिशिष्याणां स्वर्दुःकाल फणीश्वरः ॥

हेत्वापन्हुतिः,—

हेत्वपन्हुतिरेषैव कथ्यते युक्तिपूर्विका
वाण्यासक्तो यतोनायं जयीन्द्रः किन्तु पद्मभूः ॥

चपलातिशयोक्तिः,—

चपलाद्याच साकार्य सिद्धौहेतुप्रसञ्जनात् ।
दास्यामीति जयीन्द्रोक्त्या दारिद्र्यं कापिलीयते ॥

पर्यायोक्तिः,—

पर्यायोक्तं भवेदन्य भाग्याप्रस्तुत वर्णनम् ।
दयारसैरभ्यसिञ्चद्य स्सुधीन्द्र मिमंनुमः ॥

हेतुमाला :—

हेतुमाला पूर्वपूर्व मुत्तरोत्तरकारणम् ।
श्रीजयीन्द्रगिरा शास्त्रं शास्त्रेणस्फूस्सकारयशः ॥

एकावली :—

एकावल्यार्थ निर्देशो गृहीतद्यागरीतिभाक् ।
जयीन्द्रदृक् श्रुतिर्व्यापिन्येते हरिकथांचित् ॥

सारालङ्कारः—

सारस्यात्पूर्व पूर्वास्सादुत्तरोत्कर्ष युग्वचः ।
अच्छाहंसी ततोज्योत्स्ना ततःकीर्ति र्जयीन्द्रते ॥

ललितम्,—

ललितं प्रकुतार्थस्य प्रतिबिम्बानु कीर्तनम् ।
गतापं बन्धुमिच्छन्ति जयीन्द्रप्रतिवादिनः ॥

रत्नावली :—

रत्नावलीप्रस्तुतानां क्रमिकोन्यास उच्यते ।
जिष्णुधर्मप्रचेत श्री प्रदा श्रीविजयीन्द्रगीः ॥

प्रश्नोत्तरम् ,—

कीदृग्जयीन्द्रो वर्षाब्ध सदृक्कीदृग्गुणेऽर्जुनः ।
कस्तुत्यर्होहिकोयतीन्द्रो जयीन्द्रो भुविकोमलः ॥

अत्युक्तित्वद्भुतातथ्यौदार्य शौर्यादिवर्णनम् ।
जयीन्द्रदान सलिलैर्जाता स्सप्ताब्धयः क्षणात् ॥

हेतुस्तद्वतोरैक्यं सहोक्तिर्वा तयोर्भवेत् ।
विजयीन्द्र कृपादृष्टि स्स्वर्णवृष्टि र्मनीषिणाम् ॥

प्रसवःप्रेयसी शेषौ रसभावौ परस्यचेत् ।
जयीन्द्रो भात्यनङ्गो यज्जितोजित जगत्रयम् ॥

स्मरन्स्मरारिमाश्चर्याद्यं वीक्ष्याहमविस्मयः ।
ऊर्जस्यङ्ग रसाभासो भावोङ्गश्चेत्समाहितम् ॥
सन्तुकान्ताहृतस्वान्ता यतीन्द्रस्त्वां परंनुमः ॥' इत्यादयः ॥

अपिच, वक्त्रमेव दृष्टान्ततयोपपाद्यालङ्कारास्सङ्गृहीताः पद्यचतुष्टये ;—

'वक्त्रं पद्ममिमेत्यसा उपमिति स्सोनन्वयो वक्त्रवत्
वक्त्रं पद्ममिवास्यमास्यमिव चाब्जं सोपमेयोपमा ।
अब्जेन स्मृतमाननं स्मृतिरिदं वक्त्रं किमम्बोरुहम्
सन्देहो वदने लयोम्बुजधियो पायान्त्यसौ भ्रान्तिमान् ॥

पद्मवक्त्रमिव प्रतीप मवभात्यास्याम्बुजं रूपकम्
वक्त्राब्जं विकसत्यसौ परिणति र्नास्यं परं त्वम्बुजम् ।
एषापन्हुतिरब्जमित्यधिरहं मन्येत्वदास्यं तदि—
त्युल्लेखो मुखमम्बुजञ्च शरदुल्लासीति तद्दीपकम् ॥

उत्प्रेक्षा ध्रुवमब्जमित्यतिशयोक्तिः पद्ममेतत्परं
भ्राजत्यत्रचभातिनेत्रयुगमि त्यावृत्तदीपंजिते ।
चन्द्राब्जे इति तुल्ययोगि सलिले पद्मभुवि त्वन्मुखं
दृष्टान्तोऽथ निदर्शनं मुखमिदं धत्तेब्ज लक्ष्मीमिति ॥

सक्तोहं वदनेलिरम्बुरुहतः प्रत्याद्य वस्तूपमां
न स्तारालि मुखं समभ्वितिं समासोक्ति सहास्यं दिवा ।
भात्यब्जेन महोक्ति रासमनलङ्कारोपिरन्यंविना
पूर्वोक्ति व्यतिरेक आस्यमनिशोत्फुल्लं सरोधाद्वयम् " इति ॥ (आख्य)

मुरली:—अहो! निर्जित गुरुप्रतिभाः कविसार्वभौमा स्सव्यसाचिवत् सर्वत्रप्रसारितप्रतिभाप्रभावा श्रीसुधीन्द्रयोगिनः ॥

पूर्णप्रज्ञः—अतिगभीरमिदं काव्यम्। अस्य व्याख्यातारः के? तैरपि महाप्रतिभाशालिभिर्भवितव्यम्। केषामन्तेवासिन इमे। किमेतैरपि द्वैतराद्धान्तेषु निर्मिताः प्रबन्धाः?

गुरुप्रः— सत्यम्! एतद्व्याख्यातार श्रीमत्सुमतीन्द्रतीर्थ श्रीपादाः, इमे श्रीपरिमळाचार्याणां सविध एवाभ्यस्तशास्त्रा श्रीसुरीन्द्रतीर्थ पूज्यपादानां करसरसीरुहसमुद्भवाः। एतेषां विदित सर्वशास्त्रपाण्डित्येन पाण्ड्यभूपतिना [मधुरा राजधानीशेन] कनकाभिषेकादिसम्मानेन; अनर्घ्य मणिमय्याः श्रीभूदुर्गा समेत वैकुण्ठवासुदेवार्चाया स्समर्पणेनच संसेविता इमे ॥

तथा अष्टदिनपर्यन्तं पाणिनीये विवादं कृत्वा पराजितो सुभानुमहाराजः [आरणीराजाधिपः],—

'प्रतिमत्सुदरंश्वयो यतयो बहवो हन्त वर्तन्त!
सुमतियते! विततमते भवता समता कःपुमानियेत?' ॥

इति पद्येनस्तुत्वा—'राहुकेतुवाद्य, चित्रासन्दया' इत्साधारण राजचिह्नादि वितरणेना सेवयत्। एतादृश पाण्डित्यप्रभाभासितनिखिलाशामुखानिमान् महाराष्ट्र सार्वभौम स्छत्रपति शिवाजीभूपपौत्रः तञ्जापुरीय (तञ्जावूरु) सिंहासनाधीश्वरः शाहुमहाराजः [शहाजि] रत्नाभिषेकाद्यनितरसाधारणबहुमानेन समपूजयत्। श्रीसुमतीन्द्रतीर्थ श्रीमच्चरणा पूर्वाश्रम [श्रीमुद्दुवेङ्कटकृष्णाचार्याः] एव शाहुमहाराजेनातिसम्मानिताः ॥

शाहुभूपविषये ललितगम्भीरपदकदम्बकवितोपेतानेकान्—'जयघोषणा, बिरुदावली, राजस्तुति, शाहुविजय, चक्रवालप्रबन्ध विवरणे मदन्यः क स्समर्थः? इति प्रतिज्ञातम्;—

'प्रपञ्चने न किञ्चनेऽत्र वञ्चना विलुञ्चने
मुदञ्चता मुदञ्चता मयाञ्चिता विरञ्चिता।
तपश्चितां विपश्चितां मयाविना मयाविना
मलं मलं धुनाति को विना सुधीन्द्रसूक्तिषु ॥' इत्यादिना ॥

एतैः—'प्रमेयदीपिका, तत्त्वप्रकाशिका, ऋग्भाष्यटीका' दीनां 'भावरत्नकोशा' ख्य व्याख्या विरचिता। किञ्च, ब्रह्ममीमांसार्थ सङ्ग्राहक 'अधिकरण माला' ख्या कृतिः कृता। अत्र पूर्वस्मिन्पद्ये पूर्वपक्षः, अपरे सिद्धान्तश्च संगृहीतः ॥

एवं साहित्ये—'रामतारावली, रामदण्डक, योगीन्द्र विजय, योगीन्द्रतारावली' प्रभृति प्रबन्धाः प्रकटीकृताः। तद्व्याख्याश्च निर्मिताः। तथा,'अलङ्कारमञ्जरी, उषाहरण, सुभद्रापरिणय नाटक, श्रीविजयीन्द्रतीर्थकृत श्रीव्यासराजविजया' दीनां व्याख्याश्च निर्माय सर्वशास्त्रेष्वनितर साधारण पाण्डित्यं प्राकाशि ॥

मुरली:—सर्वज्ञ परम्पराप्राप्त महापीठ प्रभावः! अप्रतिमप्रतिभाप्रभावशालिनः महामहिमोपेताश्च इमे। श्रुतैतादृश महामहिमोपेत गुरुवरेण्य तपः प्रभावाः वयमेव पुण्यशालिनः!

सर्वे:— सत्यमुक्तं भवद्भिः ॥

अन्यः— कथं ! कोण्डापुर आगतः ?

गुरुप्रः— [पुरतोऽवलोक्य मुरलीं प्रति] महाशयाः, कोण्डापुरेऽस्मिन् महामहिमोपेतस्सर्वजीवप्राण-नायको वासुदेवः रराजते । तत्रगत्वा तद्दर्शन वन्दनादिना सर्वेवयं पुनीता भवाम ॥

सर्वेः— [सभक्तिकम्] तथास्तु ॥

[इति कोण्डापुरेशालयं प्रविशन्ति]

इति कविसार्वभौम कविता कौशल्ये

अलङ्कारमञ्जरीवर्णनाभिधो

॥ तृतीयोल्लासः ॥

॥ श्रीः ॥

## ॥ अथ चतुर्थोल्लासः ॥

पूर्णप्रज्ञः—[श्रीप्राणदेवमन्दिराद्बहिरागत्य]

[गुरुप्रसादंप्रति] सुहृद्वर ! तावकवाङ्मुखसुधास्वादनानन्दित मानसं प्रेरयति मां पुनः कविताऽस्वादने । अपरं किञ्चित्तावदुपवर्णय ॥

विद्यार्थिप्रवरः—"साहित्यसाम्राज्या" मिश्रमन्यद्रचितं सुधीन्द्र यतीन्द्रै रित्युक्तं भवता । अन्यकविकृत काव्यव्याख्याकरणे निमित्तं किमेतेषां यतिसार्वभौमानाम् ?

गुरुप्रः— तत्तैरेव कथितम्—

"तेन श्रीरघुनाथ भूमिपतिना सम्प्रार्थितस्तन्मुदे
तत्ताद्दग्विजयीन्द्र संयमिमणेः षड् दर्शिनी दर्शिनः ।
शिष्यो व्याकुरुते सुधीन्द्र यतिराट् कृष्णाध्वरीन्द्रोदितं
ग्रन्थं तद्गुणबन्धुरं रसगुणालङ्कार झङ्कारितम् ॥" इति

किञ्च तदानीन्तनकाले सर्वेऽपिनृपतयो विशेषतः साहित्यादरभाजिनोऽवर्तन्त । तत्रापि रघुनाथ भूपालः स्वयं कविः । द्वैतसिद्धान्तस्थापनं भूमिपालमुखेन चिकीर्षवः स्वभक्त शिखामणिकृष्णयज्वकवीन्द्रकृतकाव्यव्याख्यानमदोषमिति मन्वानाः "साहित्यसाम्राज्यं" विरचय्य दिगन्तरालोज्जृम्भमाण कीर्तिचन्द्रिकालङ्कृता व्यराजन्त यतिचन्द्रा इत्यलं पल्लवितेन ॥

मुरलीः—श्रुतमेव श्रोतव्यम् ! ततस्ततः ?

गुरुप्रः— "साहित्यसाम्राज्ये" आद्यपद्यावतारिका इत्थं वर्तते 'इहखलु धरणीमण्डलइव कविमण्डलेऽपि सकले साम्राज्यपदवीमुपारूढस्य चक्रवालाचल पश्चार्थ कटकनिकटवापि कैरवणि-

कनिकाय सौखशायनिकायमानयशश्चन्द्रिकाधवलितनिखिलदिगन्तरालस्य 'दिनचव्व-महिपाल' पुण्य पुञ्जायितान्ध्रुतावनीपतिरत्नाकरसुधाकरस्य निरन्तर हृदन्तर मन्दिर महितरघुनन्दनपदारविन्दस्य सन्ततमभिनन्दितधरणीवृन्दारकवृन्दस्य रघुनाथभूवरस्य ; शौर्यौदार्य गाम्भीर्यादि रमणीय गुणगणप्रतिपादनपरं काव्यमीमांसारूपं 'रघुनाथभूपालीयं' नामालङ्कारशास्त्रं चिकीर्षुः कृष्णाध्वरीन्द्राभिधानो मनीषी—'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वतये कान्तासम्मिततयोपदेश युज'इत्यालङ्कारिक वचनप्रामाण्यात्, 'काव्यस्यानेकश्रेयस्साधनतां काव्यालापांश्च वर्जये' दित्यादेशस्य असत्काव्यगोचरतामनुसन्दधानः चिकीर्षित महाप्रबन्धाविघ्नपरिसमाप्तिप्रचयोपचयहेतुभूतं 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुख' मिति 'काव्यादर्श' प्रदर्शितनयेन, आशीराद्यन्यतमस्य प्रबन्धमुख लक्षण लक्षणतया प्रकृतकृतिनायकाभिष्ट प्रार्थनारूपं मङ्गलमादावाचरति 'श्रीमदिति' इति ॥

पूर्णप्रज्ञः— अमिषां व्याख्याकरणसरणी श्रवणेऽस्मदीये श्रवणे, अत्युत्सुके । तस्मादाद्यपद्यव्याख्यानं विवृणुत ?

गुरुः— मूले [रघुनाथभूपालिये] मङ्गलाचरणश्लोकः—

'श्रीमत्कौशिक यज्ञरक्षणकृतः क्षेमंक शिश्रूषया
ताते प्रेमभरात्समं पुरजने तातस्ततान्वेषिणी ।
वैदेहीरघुवीरयोरुपनता वैवाहिकी पत्रिका
तत्तादृग्रघुनाथ भूमिपतये दत्तां मुदं श्रेयसीम् ॥' इति

व्याख्यानम् [साहित्यसाम्राज्यम्]

'अत्रादौ लक्ष्मीबीजस्य शकारस्य क्षेमंकरस्य मगणस्य च प्रयोगेण श्रीभूप्राप्तिः फलमिति विभावितम् । यदाहुः—'लक्ष्मीबीजं शकारस्याच्छ्रमाभश्श्रीकरोमतः । क्षेमं सर्वगुरोर्दत्ते मगणो भूमिदेवतः । वर्णगणश्च काव्यस्य मुखेकुर्याच्छुशोभनम् । कर्तृकारकयोस्तेन कल्याणमुपजायत' इति । 'संयोगस्सर्वदा त्याज्यो वर्णानां कवितामुख' इत्यादिकन्तु श्रीशब्दादि व्यतिरिक्त विषयम् । तदुक्त—'देवतावाचकाश्शब्दाः येच भद्रादि वाचकाः । ते सर्वे नैव निन्द्यास्युः वर्णतो गणतोपि ने' ति । अतएवच, 'श्रियः पतिश्श्रीमति शासितुं जगत्,' 'श्रियः कुरूणामधिपस्य पालिनी' मित्यादौ आंध्रभाषां च प्रतिबन्धमादौ श्रीशब्दप्रयोगो महाकविभिः अभ्युपगतः । श्रीः श्रयन्त्येतां सर्वइति श्री महालक्ष्मीः संपत्सुषुमा वा नित्यं भूम्नाऽतिशयेन वा अस्यास्तीति श्रीमान् 'क्विब्वची' त्यादिना कर्मणि क्विपूर्वं दीर्घञ्च । 'भूमनिन्दाप्रशंसासु नित्ययोगेनि शायने । संबन्धोस्ति विवक्षायां भवन्ति मतुपादय' इति नित्ययोगादौ 'मतुम्' । अत्र श्रीरामभद्रस्य श्री महालक्ष्मीनित्यसम्बन्धोक्त्या नारायणावतारत्वं वैदेह्या लक्ष्मीरूपत्वं च सूचितम् । तदुक्तं—'श्रीविष्णुपुराणे ॥'

'भाग्यैर्यागाजगत्स्वामी देवदेवो जनार्दनः । अवतारं करोत्येषा तदा श्री स्तत्सहायिनी । राघवत्वे भवेत्सीता रुक्मिणी कृष्णजन्मनि । अन्येषुचावतारेषु विष्णोरेषा सहायिनी' इति च । कुशिकस्यापत्यं पुमान् कौशिको विश्वामित्रः, 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यत्र प्रत्ययः । तस्य यो यज्ञः तद्रक्षणं करोतीति वा, 'करोतीति कृत्, कर्तरिक्विप्' कौशिक यज्ञरक्षणस्य

कृदितिवा । अत्र 'वाऽसरूपोऽस्त्रिया' मिति पाणिनिस्मरणात् 'क्विप्नकर्मण्यण्' तस्य रघुवीरस्य । अत्र 'निदानगर्भामिव सागराम्बरा' मित्यादिवत् विशेष्यवाचक पदानुपादानेऽपि असाधारणविशेषणमहिम्नैव तल्लाभः । तथाच वामनसूत्रम्—'विशेषणमात्र प्रयोगो विशेष्य प्रतीतौ' इति । एकस्य शिश्रूषा एकशिश्रूषा, क्षेमस्य एकशिश्रूषा क्षेमैकशिश्रूषा । शिव भागवतवत्समासः । ताते पितरि दशरथे प्रेमभरात् स्नेहभारत् प्रेमातिशयात् । 'अप्यथाति-शयोभरः' पुरजनैस्समं सह । तातस्ततान्वेषिणी ततस्ततः तस्मात्तस्माद्देशात्समागताः तातस्तताः, ततस्ततश्शब्दात् 'तत्तआगत' इत्यण् । 'अव्ययानां भमात्रे टिलोपः' इति टिलोपः । तानन्वेष्टुं शीलमस्यास्तीति तातस्ततान्वेषिणी । 'सुप्यजातौ णिनिस्ताच्छील्य' इति णिनिः । यद्वा अन्वेषणमन्वेषः 'भावेघञ्' तातस्ततानामन्वेषः तातस्ततान्वेषः 'तनोमत्वर्थीय इति नः' । तस्मिन् सति उपनता तक्षणमेव समागता । वैदेही रघुवीरयोः, विदेहानां राजा वैदेहः तस्य राजान्यपत्य वदित्यपिन् । वैदेहस्यापत्यं स्त्री वैदेही । 'जनपदशब्दात् क्षत्रियादञ्' इत्यादिनाऽञ् । टिड्ढाणञित्यादिनाङीप् । यद्यपि सीता विदेहराजस्य नापत्यम् तथापि पोषकत्वादिना पुत्रीकरणेन देवतावरप्रसादेन च तस्यास्तदपत्यत्वमुपपन्नम् । तथाच श्रीमद्रामायणे सीतावचनम्— 'अनपत्येन च स्नेहादङ्कमारोप्य च स्वयं । ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः । अन्तरिक्षे च वागुक्ता प्रतिमा मानुषी किल । एवमेतन्नरपदे धर्मेण तनया तव' इति ॥

रघुपुवीरो रघुवीरः । ननु रघूणां वीर इति 'ननिर्धारण' इति षष्ठीसमास निषेधात् शेषषष्ठ्या वा समासः । रघुभ्यो वीर इति वा तदपि परास्तपर इति भाष्यकारवचनात् । पञ्चमीति योगविभागात् 'कर्तृकरणे कृताबहुल' मिति सर्वोपाधि व्यभिचारर्थात् । बहुल ग्रहणाद्वा समासः । तयोः वैवाहिकी विवाहमाहेति वैवाहिकी 'तदाहेति माशब्दादिभ्य उपसंख्यान' मिति ठक् । सापेक्षत्वेऽपि गमकत्वात्तद्धितोत्पत्तिः यद्वा वैदेही रघुवीरयोः पत्रिकेति सम्बन्धः । विषयविषयीभावस्संबन्धः । तस्मात्तयोरेव विवाहमाहेति गम्यते । तत्तादृग्रघुनाथभूमिपतये तमिवेनं पश्यति जन इति तादृक् तत्सदृश इत्यर्थः । 'त्यदादिषु दृशोऽनालोचने कञ्च' इति क्विन् । 'असार्वनाम्न' इत्यात्वम् । सचासौ तादृक्च स्व नदृशः, अनुपम इति यावत् । यद्वा तस्मै प्रसिद्धाय तादृशे कवेर्बुद्धौ विपरिवर्तमान लोकोत्तरगुण रघुवीर सदृशाय रघुनाथभूमिपतये । तत्तादृगिति पत्रिका विशेषणं वा वैदेही सदृगित्यर्थः । श्रेयसीं प्रशस्ततरां 'प्रशस्यस्य श्रः' इति श्रादेशः । मुदं हर्षं दत्तां प्रयच्छत् 'डुदाञ् दाने' इति प्रार्थनायां लोट् ॥

अत्र श्रीमत्कौशिक यज्ञरक्षणकृत इत्युक्त्या क्वचिदाश्रमदेशे निवसतो रघुपतेः क्षेमवार्ता कथं जानीयुः ? इति शङ्का निराकृता । कौशिक महामुनेः मखे नानादिगन्तरोपनतसकलजन समाजावश्यंभावेन मखरक्षणस्य च तादृग्घातियातुधानप्रधानविधूनम साध्यततया, सकल लोकावगततयाच तातस्ततानामपि तत्सम्भवादितिभावः । श्रीमदित्यनेन यज्ञरक्षणकृति शोभा सम्बन्ध बोधकेन तादृशयातुधाननिवहेनानासादित क्लेशलेश एव कौशिकाध्वरमरक्षदिति व्यज्यते । लक्ष्मीर्नित्यवाचिना च नासादितक्लेशता, न यादृच्छिकीति व्यज्यते । क्षेमेनेत्येक पदेन च निश्शेषनिशाचरनिवेदिततदीयजनकृतनिकृतिशङ्कातरङ्गितान्तरङ्गता व्यज्यते । प्रेमभरादिति च प्रभुशिखामणेरमुष्यनिजभुजिष्यजनमुखेन तदीय कुशलसमाकर्णनमेव

युक्तमिति तातस्ततान्वेषणमनुचितमिति शङ्कानिराकृता। निजपरिजनमुखेन सत्यपि तदवगमे अनवरत तदवगम कुतूहलातिशयवशेन तावस्ततान्वेषणस्यापि युक्तत्वात्। पुरजनैस्समिति पौरजनानां दशरथानुरांग समानुरागशालिताप्रतिपादनेनातिरमणीय गुणाभिरामो रामभद्र इति गम्यते। वैदेहीति सीतायाः विदेहराजसुतात्व प्रतिपादनेन विदेहराजकृत धनुरारोपण पणप्रापणीयता प्रतीयते। रघुवीरेति वीरपदेन च इतरदुरासदशरासनसमारोपण समर्थतोपसर्जनता वैवाहिकी पत्रिकेत्यनेन तन्निवृत्तिश्च व्यज्यते।

अत्र तातस्ततेति रक्षणकृत क्षेमेत्यादौ च वृत्यनुप्रासः। तादृगित्यत्र व्याख्याभेदेनानन्वयोपमे, देवताविषयरतिभावस्य कृतिनायक गोचर रतिभावाङ्गत्वात्प्रेयानी। श्रीमत्वादि विशेषणानां पूर्वोक्तरीत्या साभिप्रायात् परिकरः। क्षेमैकशिश्रूषया तातस्ततान्वेषिणि सति वैवाहिकी पत्रिकोपनतेत्यनेन वांछिताधिकेष्टप्राप्तेः प्रहर्षणञ्चार्थालङ्कार इत्येतेषां मौक्तिकपद्मराग न्यायेन संसृष्टिः"॥ श्रीमत्सुधीन्द्रयतिवर्याणां व्याख्यासरणी एतादृशी॥

विद्यार्थिष्वन्यतमः—अयि गुरुप्रसाद।

'शुचिर्दक्षश्शान्त स्सुजन विनुतस्सूनृततरः
कलावेदी विद्वान्कलमृदुपदः काव्यचतुरः।
कृतज्ञो दैवज्ञ स्सदय हृदयो वाक्पटुतरः
शुभाकारच्छन्दोगुणगणविवेकी सचकविः॥'

इत्युक्त कविलक्षणस्य समग्रस्यामीषु परिदृश्यमानेन कविकुलललामभूता इमे इति भवदुक्तिरन्वर्थकी। ततस्ततः?

गुरुः—'रघुनाथभूपालीये'—आदौ नायकप्रकरणम्। विद्यानाथकृत 'प्रतापरुद्रीये' यथादृष्टान्ततया प्रतापरुद्रः, तद्वद्रघुनाथभूपालोऽत्रवर्णितः। मङ्गलाचरणानन्तरं द्वितीयश्लोके प्रबन्धकरण प्रतिज्ञा, तृतीये प्रबन्धुः कृतिनायकप्रसादरूप प्रबन्धकरण सामग्री। चतुर्थे, महीपालाङ्गीकारेण चिकीर्षित प्रबन्धस्य आचन्द्रार्क स्थितिः; पञ्चमे—तदुपयोगि वाग्देवी सान्निध्यप्रार्थनम्, षष्ठे—रघुनाथभूपालविषयक प्रबन्धकरणौचित्यं च प्रतिपादितम्॥ यथा—

"निद्राभक्षणकुम्भकर्णमपि वा निर्निद्रदानक्रिया
कर्णोसाविति वर्णयन्ति कवयो कण्डूलया जिह्वया।
स्यामासेचनके सदन्वयवहे सर्वज्ञचूडामणौ
राज्ञः श्री रघुनाथनामनि कला रज्ञन्ति यत्सौचिती॥"

लोकेऽविद्यमानानपि गुणानारोप्य दुर्नायकवर्णनं कुर्वाणाः कवयः बहुलमुपलभ्यन्ते। तथापि अनवद्यगुणगणाकरे प्रकृतकृतिनायके रघुनाथनामके प्रवृत्तमाना वाचः नानृतवादितामाप्नुवते।' इति॥

एवं प्रकारेण चिकीर्षितप्रबन्धविषयः प्रतिपादितः। कविरयं, अतिगभीरभावगर्भा मदीया कृतिः; आपातदर्शिषु हृदयं नाविष्करोति यद्यपि। तथापि सकलशास्त्राभ्यासपरिष्कृतहृदयेषु सहृदयेषु तथाऽऽविष्करोत्येवेति न दोष इत्युक्तवान्—

'पदवाक्यप्रमाणज्ञैर्भावो भाष्येन मत्कृतेः ।
प्लवमाना न विन्दन्ति पारावारान्तरे मणिम् ॥'

इति पद्येन ।

मुरली :—सत्यम् । एतादृश काव्यपरिशीलनाय सर्वतन्त्रविदग्धता आवश्यकी । ततः ?

गुरवः—औदार्यादीनि क्रमेणोदाहृतानि ;

'तत्कङ्कणद्वयमिभाधिभुवर्पितं मे
ग्रैवेयकं तदिदमश्वपते गृहीतम् ।
सेवागतैरिति नृपैस्स्वविभूषणानि
ज्ञात्वोदितानि रघुनाथनृपाश्रितेषु ॥'

अत्र गजपत्यश्वपतिसमर्पितानि विभूषणानि सेवकराजन्यैरुपायनीकृतानि । कृतिनायकेन निजाश्रितसात्कृतानीत्यनर्घ्यवस्तुप्रतिपादनरूपमौदार्यं वर्णितम् । महामहिमत्वम्—(मूले)

'देवाः प्रसीदन्तु दिशामधीशाः
स्तोत्रेण मह्यं रघुनाथनेतुः ।
भोगादिभिस्संवलिता यदत्र
मात्राभिरेते मघवत्प्रधानाः ॥'

अत्र देवतात्मतया महामहिमत्वं वर्णितम् । (साहित्यसाम्राज्ये) अष्टदिक्पालकधर्माः, राज्ञः गुणा उपपादिताः । तदुक्तम्—'यथेन्द्रश्चतुरो मासान् वार्षिकानभिवर्षति । एवं राष्ट्रपरीहारैरभिवर्षे जनाधिपः ॥ अष्टौ मासान्यथाऽदित्यस्तोयं हरति रश्मिभिः । एवं राष्ट्रात्करान्राजा हरेदादित्यसन्निभः ॥ प्रविश्य सर्वभूतानि यथा चरति मारुतः । चारैरेवं चरेद्राजा वृत्तमेतत्तु मारुतम् ॥ यथा प्रियं वा द्वेष्यं वा याऽमकालं नियच्छति । तदर्हं दण्डयेद्राजा वृत्तं वैवस्वतं हितम् ॥ यथा धावन्ति नद्यस्तु सिंधुमाकांक्षया विना । यथा नाकांक्षते राजा वृत्तमेतत्तु वारणम् ॥ परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः । एवं प्रकृतयो नित्यं हृष्यन्ति नृपतेर्गुणैः ॥ तस्मादभिभवेत्त्वेष स्वेन भूतानि तेजसेति ॥' इति ॥ ततः पाण्डित्यमुपवर्णितम् । तद्यथा—

(मूले) 'षधिश्चतुष्षष्टिकलं बोधयितारो बुधास्समायान्ति ।
आस्थाने तानेतान् गणयति रघुनाथभूपतिप्रतिभा ॥' इति ॥

अत्र सकलकलाभिज्ञत्वप्रतिपादनेन पाण्डित्यं प्रतिपादितम् । "साहित्यसाम्राज्ये" चतुष्षष्टिकला निर्दिष्टाः ;—

'नृत्तं गीतं तथा वाद्यमालेख्यं मणिभूमिका ।
दर्शनाद्यङ्गयोगश्च माल्यगुम्भविचित्रता ॥
वेणुवीणादिकालापा पाटवंशोश्वरक्रिया ।
नैप्यस्थ्यं ग्रन्थयुक्तिश्च कर्णपत्रक्रियाभिदा ॥
विशेषच्छेद्यक्लृप्तिश्च नानाभूषणयोजनम् ।
इन्द्रजालं कैचिमारसामुद्रं हस्तलाघवम् ॥

सूचिवानक्रिया सूत्रक्रिया सलिलवाद्यकम् ।
सूपशास्त्रपरिज्ञानं शारिकाशुकवादनम् ॥
रसवादो वास्तुविद्या तत्क्षणं सोच्चितोत्करः ।
सजीवनिर्जीवद्यूतशास्त्रं सम्पाठ्य पाटवम् ॥
धारणमात्रका यन्त्रमात्रका काव्यलक्षणम् ।
आकर्षकक्रीडितञ्च निमित्तागमवेदनम् ॥
अग्न्यम्बुसेनादिस्थम्भो विषप्रतिविषागमः ।
पाञ्चालीनृत्तकरणं तण्डुलादिबलिक्रिया ॥
प्रहेलिकादुर्वचकप्रतिमार्यादियोजनम् ।
मन्त्रवादिपरिज्ञानं विशीर्णाक्षरमुद्रिका ॥
सर्वाभिधानकोशोक्तिः पत्रिकाचित्रकर्तनम् ।
रक्तोन्मादिस्थालशास्त्रं दर्पणादिलिपिक्रिया ॥
तिरस्करण्याद्याप्तिः पुष्पशाटकिकागमः ।
अन्यश्चलक्षणज्ञानं तिर्यग्हृदयवेदनम् ॥
परेङ्गितपरिज्ञानं जलयानागमज्ञता ।
परचेतप्रवेशश्च चतुष्षष्टिरिमाः कलाः ॥' इत्यादिना विशदीकृताः ।

पूर्णप्रज्ञः—अहो, अश्रुतपूर्वमेतदस्माभिः । श्रीमत्सुधीन्द्रतीर्थश्रीपादा इमे स्वयं चतुष्षष्टिकलाकोविदा इत्यत्र न कापि संशीतिः । ततः ?

गुरुप्रः—'यशःप्रतापसुभगः धर्मकामार्थतत्परः । धुरंधरो गुणाढ्यश्च नायकः परिकीर्तितः ॥' इत्युक्त नायकसामान्यलक्षणघटकयशःप्रतापशालित्वमुदाहृतम्—

'जैत्रः श्री रघुनाथभूपबिरुदग्रन्थोपलम्भैर्जय-
स्तम्भैस्सम्भृयते धुरुद्धरद्दरिर्दन्तावलालानता ।
येत्वाकस्मिकधालधान्यधवलं मन्ये मुहुः पच्यते
दिक्पालैस्स्वयशःप्रशास्तिरवनीवास्तव्यसौवास्तुकी ॥

इति रघुनाथभूपालीये । धीरोदात्तादिनायकविशेषाः सर्वत्रप्रसिद्धा इत्यस्मिन्काव्ये न निरूपिताः शृङ्गारविषयक नायकाः, रसप्रकरणेऽभिहिताः ।

प्रथमविलासे—विषयप्रयोजनप्रतिपादनमुखेन कृतिनायकगुणा निरूपिताः ।

द्वितीयविलासे—काव्यसामान्यलक्षणं निरूपितम् । तत्राप्यादौ कृतिनायकस्येष्टदेवताभिमुख्यमाशंसितम्—

'वस्तुवस्तात्पुरस्तादक् वैदेहीदृग्वशंवदम् ।
आचन्द्रार्कप्रतिष्ठायामभिषिक्तविभीषणम् ॥' इति (रघुनाथभूपालीयम्)

ततः काव्यस्याऽसाधारणं रूपं निरूपितम् ।
'कविसमयानुरोधेन निबद्धौ शब्दार्थौ काव्य'मिति—(र.भू)

"साहित्यसाम्राज्ये तु"—'अर्थावच्छिन्नशब्दो वा शब्दावच्छिन्नार्थो वा काव्यमिति नियन्तुमशक्यमिति शब्दार्थयोस्समप्राधान्यविवक्षया शब्दार्थौ इत्युक्तम्। रचनाद्वारा शब्दानां कविकर्मत्वसम्भवेऽपि कथमर्थानां कविकर्मता?" इत्याशङ्क्य; 'अर्थोल्लिखस्यापि कविसंरम्भगोचरत्वेनोभयोरपि कविकर्मतोपपत्तेः। अनादित्वन्त्वर्थानामिव शब्दस्याप्यस्त्येव। यदि वर्णानुपूर्व्याः न तथात्वं तदा कविसंरम्भविषयीभूतार्थसंसर्गस्यापि तथात्वमिति न कापि अनुपपत्तिः। ननु तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति दोषरहितसगुणशब्दार्थ-युगलस्यालङ्कारसदसद्भावाऽनादरेण काव्यतोक्ता 'काव्यप्रकाशे', तथा "साहित्यचिन्तामणा-वप्युक्तम्—'शब्दार्थयुगलं काव्यं निर्दोषं गुणसंयुतम्।
अलङ्कृतिरलङ्कारैरनलङ्कृति वा क्वचित्॥' इति॥

तथा च 'एकावल्यां' कविचक्रवर्तिनापि,—'काव्यं हि नाम विशिष्टशब्दार्थात्मक'मित्युक्तमिति॥ कथमेतत्?" इत्याशङ्क्य—

'इहापि वेदपुराणव्यावृत्तनपरेण कविसमयानुरोधेनेत्यनेन दोषाभावगुणयोरपि सङ्ग्रहेण तथैककण्ठ्यात्। अत एवानुपदं वक्ष्यति कवेः सरसशब्दार्थसङ्घटनात्मकं कर्म तत्काव्यमिति॥' सदोषत्वे सरसत्वस्य शब्दार्थसङ्घटनात्मकत्वस्यचासम्भवात्। न हि रसदोषत्वे सरसत्वं, पदवाक्यतदर्थदोषत्वे शब्दार्थयोस्सङ्घटनाय च सम्भवति॥" इति समाहितम्॥

ततः तथाभूतशब्दस्य वा अर्थस्य वा लाघवेन काव्यत्वसम्भवेन तदुभयस्य लक्षणप्रवेशो व्यर्थ इत्याशङ्क्य समाहिता 'मूले'—'अतः कमनीयशब्दोऽर्थो वा काव्यमित्यपास्तम्॥ कुसुमसौरभ्यन्यायेन सम्भूयाऽऽह्लादकारित्वात्। अत एव प्रभुनिर्देश इव शब्दैकप्रधाने वेदे सुहृन्निर्देश इवार्थैकप्रधाने पुराणादौ च नातिव्याप्तिः। कविसमयाननुरोधित्वात्।' इति॥

"साहित्यसाम्राज्ये"—"यद्यप्यस्ति शब्दार्थयोरविनाभावः। तथापि यत्रादोषतया सगुणादितया च शब्द एव कविसंरम्भगोचरः, अर्थस्त्वनीदृशः तथा तत्र तादृशशब्दस्यापि काव्यता प्रसज्येत; अतोऽर्थपदमप्युपादेयम्। तत्र गुणदोषाभावौ च विवक्षणीये। एवं यत्रार्थ एवादोषसगुणादितया कविसंरम्भगोचरः, शब्दस्त्वनीदृशः, तत्र तादृगर्थस्यापि काव्यता प्रसज्येत। अतः शब्दपदमपि उपादेयम्। अतो मिलितयोरेव कुसुमसौरभ्यन्यायेन आह्लादकारितया काव्यत्वमित्याशयवानाह—'कुसुमसौरभ्यन्यायेने'ति॥ कविसमयानुरोधेनेत्यस्य व्यावृत्तमाह—'अत एवे'ति। प्रभुनिर्देशातिलङ्घने प्रत्यक्षो दण्डस्तथा वेदबोधितानुष्ठानेऽपि प्रत्यवाय इति वेदस्य शब्दप्राधान्यं, यथा—सुहृन्निर्देशस्य विहितनिषिद्धप्रवृत्तिनिवृत्त्योराख्यायिकामुखेन इष्टानिष्टरूपार्थप्रवणता तथा इतिहस्मेत्यादिमुखेन बोधयतामितिहासपुराणादीनामप्यर्थप्रधानता। यद्यपि पुराणादावपि विधिसम्भवाच्छब्दप्राधान्यं वेदेऽपि स्तुतिनिन्दाद्यर्थवादसद्भावादर्थप्राबण्यम्। तथापि शब्दार्थयोः प्राचुर्याप्राचुर्याभ्यां तद्व्यपदेशः। अत एव शब्दैकप्रधाने अर्थैकप्रधान इत्येकशब्दः कविसमयाननुरोधित्वादिति कविसमयानुरोधिव्यञ्जकव्यापारप्रावण्याभावादित्यर्थः" इति॥

ततः काव्यविभागः—मूले,—'ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदात्' इति कृतः॥

साहित्यसाम्राज्ये—"ध्वनयति व्यनक्त्यर्थमिति ध्वनिः शब्दार्थयुगलम्। यद्यपि वैयाकरणैः पदवाक्यात्मकस्फोटस्य व्यङ्ग्यस्य व्यञ्जकीभूतेषु—अ-क-उ-प-यादिवर्णेषु ध्वनिशब्दो व्यवहृतः,

नत्वर्थेऽपि, तथापि व्यञ्जकत्वस्य ध्वनिपदप्रवृत्तिनिमित्तस्य शब्द इवार्थेऽपि सत्वेन ध्वनित्वं युक्तम्। उत्तमकाव्ये व्यङ्ग्यप्राधान्यात् ध्वनेनैव चमत्कारकारितया ध्वनिशब्दःप्रयुक्तः।" इत्यर्थस्यापि ध्वनित्वमुपवर्णितम्। ततः अगूढास्फुटव्यङ्ग्यादिषु गुणीभूतव्यङ्ग्यशब्दप्रवृत्तिनिमित्तस्याव्याप्तिमाशङ्क्य—'अत्र गुणशब्देनापकर्षाश्रयत्वस्य विवक्षिततया तस्य च सर्वसाधारण्येन गुणीभूतव्यङ्ग्यशब्दप्रवृत्तिसम्भवाद्यथा प्रधानस्य राज्ञः अगूढत्वे, अस्फुटत्वे भृत्येन सह सन्दिग्धप्राधान्ये तुल्यप्राधान्ये च अन्याक्षिप्तत्वेऽसुन्दरत्वे च नोत्कर्षः। तथा व्यंग्यस्याप्यगूढत्वादिना चमत्कारातिशयकारिताभावनिबन्धेनापकर्षाश्रयत्वेनाऽप्रधानसाधर्म्येण व्यंग्यस्य गुणीभूतत्वोपपत्त्या गुणीभूतव्यंग्यशब्दप्रवृत्तिसम्भवात् चित्रत्वमपि जीवितायमानसहृदयाह्लादव्यंग्यवैधुर्येण भित्तिलिखितचित्रसाधर्म्येणाधमकाव्यस्योपपद्यते।" इति समाहितम्।

तदनु सूक्तानुरोधेन सहृदयचमत्कारकारित्वेन वक्तृविवक्षापर्यवसानसीमत्वरूपवाच्यातिशयत्वोपेतव्यंग्यत्वरूपसाधारणधर्मः ध्वनेः निरूपितः॥

उदाहरणपद्यम् (रघुनाथभूपालीये)—

'राजाद्य मौक्तिकगुणं रघुनाथनामा
स्वप्ने व्यलोकि सखि मामभिषिञ्चतीति।
कस्याः पुरः कथयितव्यमुपानिरुद्ध-
सन्धानसाहसवती न हि चित्रलेखा॥'

अत्र कस्याः पुरः कथयितव्यमिति स्वोक्तस्यैव विचारणात्प्रतिषेधरूपाक्षेपालङ्करणे हे सखि? त्वयापि चित्रलेखयैव नायकसङ्घटनं क्रियतामिति विधिः प्रतीयते। अस्य व्यंग्यस्य वक्तृविवक्षापर्यवसानसीमत्वेन वाच्यातिशयत्वात् ध्वनित्वव्यपदेशः' इति॥

"साहित्यसाम्राज्ये"—'इदञ्च नृपतिलकस्य कस्यचित्कुमारिकायाः केनचिदिति महाप्रयोजनेन कृतिनायकमहिष्या उपदीकृतायाः तया च निजपरिचारिणीत्वेन नियुक्तायास्तदीय रामणीय्यावलोकनचकितचित्ततया निरन्तरनिवारितनायकनिरीक्षणायाः श्रवणादिना प्रथममेव तन्नायकानुरक्तचित्ताया वचनम्—हे सखि? रघुनाथनाम राजमौक्तिकगणैः मामभिषिञ्चतीति राजा अद्य स्वप्ने व्यलोकि। इदं पुनः कस्याः पुरः कथनीयम्? कथने फलाभावादिति भावः। ननु कुतोयं निर्वेद इत्यत आह—'उषे'ति। हि यस्मात् उषाऽनिरुद्धयोस्सन्धानसाहसवती चित्रलेखा त्वं न भवसीति। अत्र राजेति सकलमनोरञ्जकत्वोक्त्या तदीय रमणीयगुणाकर्णनादिना प्रथममेव स्वस्यानुरक्तता स्वानुरागौचित्यञ्च मौक्तिकगणैरिति स्वाप्निकधवलमुक्ताफलावलोकनस्य महाफलहेतुत्वात्, स्वप्नस्य शुभोदर्कता। अद्येति न पूर्वदिनरात्रौ, अद्य प्रातरित्युक्त्या अचिरेण फलप्राप्तिर्द्योत्यते। 'गोविसर्जनवेलायां सद्यस्स्वप्न उदाहृतः' इति वचनात्। रघुनाथनामेति तदनुरक्तयापि नायिकया तन्नामनिर्देशनेन नायकस्याऽभिजात्यादिना स्वानुरूपता, तेन नायिकाया महाकुलीनता। सखीति स्वस्य निभृतत्रपाभरभरितत्वे यतिरहस्यानिजानुरागकथनोपयुक्तमाबाल्यमाश्वस्ततत्वं पूर्वार्धनिबद्धेन नायककृतस्वाप्निकमौक्तिकाभिषेकेण च तत्करग्रहणप्रभृतिभाव्यनन्यसामान्यमान्यतावगम्यते॥ उषाऽनिरुद्धसन्धानेत्यनेन यथा उषाया एव स्वप्नोपलब्धोऽनिरुद्धसमाधिकानुरागो, नानिरुद्धस्योषायां तथा। नायिकाया एव नायकानुरागो न

नायकस्य तस्यां नयनपथमवतीर्णायामिति व्यज्यते। तेन चैवंविधविषयानुरागयोरनयोस्सन्धानमिति गम्यते। साहसवतीति च चित्रलेखयैकबाप्यनासादितसाध्वमिति दुष्प्रवेशाकुशस्थलीस्थितनिरुद्धसन्धानमनन्यविदितमाचरितम्। तथा त्वयाप्येकयैव महिषीजनातिसन्धानेनैव नायकसन्धानमाधेयमिति॥' इति व्याख्यातम्॥

ततः व्यञ्जनाया अतिरिक्तवृत्तित्वसमर्थनम्। तदनु मूले ध्वनेर्लक्षणम्, वृत्तिविभागः, प्रत्येकं तासामुदाहरणादिकञ्च निरुपितम्। इति काव्यस्वरूपनिरूपणं द्वितीयविलासे विशदीकृतम्॥

मुरली:—अहो? एतत्पथं नारोहत्यावयोर्बुद्धिः। असाधारणपाण्डिती अलङ्कारशास्त्रे। अत एव 'साहित्यसाम्राज्य'मित्यभिधा अन्वर्थकी। ततस्ततः?

गुरुः—तृतीयविलासे उत्तमकाव्यलक्षणध्वनिभेदाः निरूपिताः अत्रादिमं पद्यम्—

(मूले)' तिष्ठन्त्वन्ये धनुष्मन्तः शरधौ निहितेषवः।
शरस्य शरधिर्धन्वी शरणं तव जायताम्॥'

इति। तत्र पूर्वोक्तध्वनौ व्यंग्यस्य वाच्यातिशयत्वोपपादनाय लक्षणान्तरमभिहितं ध्वनेः—'बाधाभिधानुबन्धिबोधापिधापिधातिशायिबोधगोचरः शब्दार्थौ ध्वनिः।' इति। तदनु—'लक्षणामूलः शक्तिमूलश्चेति ध्वनिर्द्विविधः' इति ध्वनिविभागः कृतः। 'आद्य ध्वनिः, अर्थान्तरसंक्रमितवाच्या अत्यन्ततिरस्कृतवाच्यतया च द्विविधः' इत्यपि विभागः कृतः। तत अनयोः भेदयोः क्रमेण अजहज्जहल्लक्षणमूलकत्वं प्रतिपादितम्। अर्थान्तरसंक्रमितवाच्यध्वनेः उदाहरणम्—"अन्योप्यञ्चतु विक्रमार्कविरुदाटोपार्भटीकान्भटान्

सङ्गृह्णातु जितप्रभञ्जनगतिश्रिगर्वितानर्वतः।
गाढं शास्तु चलत्कुलाचलकुलाकारेण कारेणवं
भूपश्चेद्रघुनाथभूप इति मे बुद्ध्या निदिध्यास्यते॥"

अत्र द्वितीय भूपपदेन दयादाक्षिण्यादिगुणशालित्वं लक्ष्यते। तेन नराश्वगजपतिभ्योप्यतिशयो व्यज्यते।' इति॥

"साहित्यसाम्राज्ये"—'अन्यो नृपतिः विक्रमार्कस्यासहायशून्यत्वेन यः प्रसिद्धो विक्रमार्कः; तस्य यद्विरुदं श्लाघ्यवचनं, तस्याटोपः, आर्भटी च त इव बिरुदाटोपार्भट्यौ एषान्ते तथोक्ताः सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वा चोत्तरपदलोपश्चेति वहुव्रीह्युत्तरपदलोपात्। अञ्चतु प्राप्नोत् पूजयतु वान्यो अश्वपतिः जितः प्रभञ्जनो यया तया अगतिश्रिया गर्वितानर्वतः, अश्वान् 'अर्णवस्त्वसावनञः' इति शत्रन्तादेशः। तान् संगृह्णातु सम्पादयतु, अन्यो गजपतिश्चलतां कुलाचलानां कुलपर्वतानां 'महेन्द्रो मलयस्सह्यश्शुक्तिमान् ऋक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥' इति शब्दरत्नाकरे। तेषां कुलं समूह इति यावत्। अस्याकारेणोपलक्षितं कारेणवं करेणूनां गजानां समूहं। तस्य समूह इत्यण्। आदिवृद्धिः 'ओर्गुण इति गुणः'। 'करेणुरिभ्यां स्त्रिबभ' इत्यमरः। गाढं दृढं शास्तु तेषु को भूप इति विचार्यते चेत्, रघुनाथभूप एव भूप इति मे बुद्ध्या निदिध्यास्यते। "तिर्धार्यते नीरूत्वाध्यैषचिन्तायाः"मिति धातोः

सन्नन्ताद्यक् । यद्वाचेदितित्वर्थे तथा च भूपस्तु रघुनाथभूप एव चेदित्यवधारणे वा रघुनाथभूप एव भूप इति नरपत्यश्वपतिगजपतीनां भटाश्वगजसङ्ग्रह एव प्रवृत्तिः, न तु न्यायेन भूरक्षणादौ। रघुनाथमहीपालस्य तु प्रवृत्तिः सर्वापि भूरक्षण एवोपयुक्ता धैर्यशौर्यौदार्यादिसद्गुणसम्पत्ति-रस्यैवेति भावः ॥' इति प्रतिपादितम् ॥

अत्यन्ततिरस्कृतवाच्यस्योदाहरणम्—

"मूले" स्फुरत्कलासेचनकस्वरूपं नालोकयन्तो ननु पश्यदन्धाः ।
भवन्ति शृण्वद्बधिरास्त्वदुक्तिनाकर्णयन्तो रघुनाथनेतुः ॥

अत्रान्धबधिरशब्दाभ्यामालोकनश्रवणवैयर्थ्यलक्षकाभ्यां स्वार्थोऽत्यन्तं तिरस्कृतः । तेन त्वामेव पश्यतां नयनं सफलं, त्वत्सूक्तिमेव शृण्वतां श्रवणं सफलमिति व्यज्यते ' इति ॥

तदनु ध्वनीनां त्रिंशद्भेदाः निरूपिताः । शब्दशक्तिमूलो वस्तुध्वनिः एदे उदाहरणम्—

'राजन्वतायै रघुनाथभूपे रजन्ति राजन्यसुवो नवोढाः ।
पूर्वस्थितीनां भृतये नृपालैरुपायशीलैरुपदा वितीर्णाः ॥'

अत्र राजकन्याविवाहे प्रस्तुते कृतिनायकस्य तद्भ्रातिरूपं वस्तु भूपपदेन व्यज्यते' इत्यादयः तृतीयविलासे संलक्ष्यक्रमव्यंग्या निरूपिताः ॥

पूर्णप्र:—ततस्ततः ?

गुरुप्र :—चतुर्थविलासे—असंलक्ष्यक्रमव्यंग्यो निरूपितः । तत्राद्यपद्यम्—

'पट्टाभिषेकमूर्धन्याः पान्तु गङ्गाम्बुबिन्दवः ।
वैवाहमौक्तिकानीव वैदेहीरघुवीरयोः ||' इति । तत्रादौ रसो निरूपितः—

"स्थायीभावोपचयो रसः" (मूले) इति ॥

साहित्यसाम्राज्ये—'स्थायीभावकहृदये चिरकालमनुवर्तमानोऽनुकार्यरामाद्याश्रयत्वेन नाट्या-द्यभिधीयमानैः काव्ये उपनिबध्यमानैर्वा सुखदुःखादिविभवैः सामाजिकानां मनसो भावनं व्यापनं भावः सामाजिकहृदयमभिव्याप्यमानो रतिशोकादिर्भाव इत्यर्थः । एवं विधो यो वक्ष्यमाणो रत्यादि', तस्य च उपचयः, सः रस इत्यर्थः ॥' इत्यभिहितः ॥

तदनु रसविभागः । शृङ्गारकरुणहास्याद्भुतवीरभयानकभीभत्सरौद्र 'भेदेन अष्टधा विभक्तः । किञ्च—'शान्तोऽपि केषाञ्चिन्नवमो रसः' इत्यपि । (रघुनाथभूपालीयम्)

'साहित्यसाम्राज्ये' शान्तरसस्यापि नवमरसत्वं व्यवस्थापितम्—

"यत्तु न शान्तो रसः कश्चिदस्ति सोऽप्यनुपपन्नः रत्यादिस्थायीभावकथनानन्तरं सञ्चारि-भावगणनावसरे अप्रशस्तस्यापि निर्वेदस्य प्राथम्यमुपनिबध्नता भरतेन निर्वेदस्थायिकस्य शान्त-रसस्य नवमस्याभ्युपगतत्वावसायात् ॥ वैराग्यतत्वज्ञानादेर्विभागस्य यमनियमाध्यात्माऽत्म-चिन्तादेरनुभावस्य मतिस्मृतिधृतिहर्षादेस्सञ्चारिणश्च सम्भवाच्च ॥

रसेष्वपरिगणनन्तु—परमपुरुषार्थोपयोगितया सकललोकयात्राऽतिक्रान्ताभिप्रायम्।

न चैवमभिनयाऽनर्हस्य कथं रसत्वमिति वाच्यम्। तावता नाट्यरसत्वाभावेऽपि 'आहारे वा बलवति रिपौ वा सुहृदि वा लोष्टे वा कुसुमशयने वा दृषदि वा। तृणे वाऽस्त्रैणे मम समदृशो यान्तु दिवसा क्वचित्पुण्येऽरण्ये शिव शिव शिवेति प्रलपत॥' इत्यादि श्राव्यकाव्येषूपनिबद्धस्य रसत्वानपायात्। अत एव 'नाट्यरसास्मृता' इति नाट्यरसाभिप्रायेणैवाष्टविधत्वमुक्तं भरतेन। स चाष्टविध इति ग्रन्थकृदुक्तिरपि तदभिप्रायेणैव। 'सङ्कल्पसूर्योदय, प्रबोधचन्द्रोदय, उभयग्रस्तराहूदया'दि (उभयग्रस्तराहूदयस्तु श्रीमत्सुधीन्द्रतीर्थ श्रीमच्चरणानां गुरुपादैः श्रीमद्विजयीन्द्रतीर्थपूज्यपादैर्विरचितः) शान्तिरसप्रधाननाटकदर्शनेन तस्य नाट्यरसस्यापि सम्भवाच्च।

"अष्टौ नाट्यरसास्मृता" इति भरतोक्तिस्तु, शान्तिरसे तथाविधानां सामाजिकानमभिनेतुश्च दुर्लभत्वाभिप्रायेणैव॥ तदुक्तम्—अथवा तादृशान्मर्त्यान्मत्वा जगति दुर्लभान्। शङ्के शान्तिरसोल्लासमशक्यमिति मेनिरे॥" इति॥

यत्त्वनादिकालप्रवृत्तयोः रागद्वेषयोरुच्छेत्तुमशक्यत्वान्न शान्तो रस इति॥ तदसत्। सर्वेषां तदसम्भवेऽपि सुकृतविशेषशालिनां पुरुषधौरेयाणां उच्छिन्नरागद्वेषाणां बहुलमुपलम्भात्। वात्सल्यस्नेहभक्तिनामपि रतिव्यतिरिक्तप्रतिनियतस्थायीभावाभावान्न रसत्वम्, न च तत्प्रतीतितात्पर्यादित्तत्र स्थायित्वं तस्य रतिभानातिरेकात्। उक्तञ्च 'काश्मीराधिपतिना'—

'रतिर्देवादिविषया व्यभिचारितयाश्रितः। भावः प्रोक्त' इति। तस्मान्नवैव रसा इति सिद्धम्।" इति॥

मुरली :—अहो! रसविशेषेष्वसदृशं कौशलमेतेषाम्। ततस्ततः?

गुरुश्च :—मूले—'सजातीयैर्विजातीयैरनभिभूतमूर्तिस्स्थायी' इति स्थायीभावलक्षणमुक्तम्॥

'साहित्यसाम्राज्ये'—'एकस्यां नायिकायामनुरागस्य नायिकान्तरानुरागस्सजातीयः। भीभत्सादिर्विजातीयः। तैरनभिभूतः, अतिरस्कृतत्वेनाविरुद्धत्वेनोपनिबध्यमानः यथा लवणोदधिःस्वानुप्रविष्टं मधुरमपि नादेयमुदकं स्वात्मतां नयति। तद्वदन्यानध्यात्मभावं नयन् भावस्स्थायी' त्यर्थः।' इति निगदितम्॥

मूले—रसोद्देशक्रमानुरोधेन स्थायिनः विभागेनोद्दिष्टाः—'रतिर्दैन्यहास्यविस्मयोत्साहभयजुगुप्साक्रोधभेदादष्टविध' इति। ततः शृङ्गारस्य लक्षणं—'रत्युपचयश्शृङ्गार' इति॥

'साहित्यसाम्राज्ये'—'रम्यदेशकालादिभिः यूनोरन्योन्यमुपचीयमाना रतिश्शृङ्गार' इति॥ ततः मूले—तदालम्बनादीनां निरूपणम्। तदनु शृङ्गारनायकनिरूपणम्। आदौ—'कलावेदी विशेषानुरक्तः' इति तल्लक्षणवर्णनम्॥

'साहित्यसाम्राज्ये'—'कलावेदी सरसकलाभिज्ञः चतुष्षष्टिकलाभिज्ञो वा रतिरहस्याद्विदितचन्द्रकलाभिज्ञो वा विशेषानुरक्तः स्थिरानुरागः, उपलक्षणं चैतत् सौभाग्यादेः, तदुक्तम्—

'स्थिरानुरागः सुभगः कलाभिज्ञो विशेषवान्। चतुरः कामतन्त्रेषु शृङ्गाररसनायक' इति। एवमभिहितम्॥

मुरली :—एषु द्विश्रीणि सोदाहरणानि निरूप्यन्ताम्॥

गुरुप्र :—दक्षिणनायकोदाहरणम्—'तुल्योऽनेकत्र दक्षिणः' तद्यथा—

'स्वामी खेलति केवलं सखिगृहे स्वे सर्वतस्सर्वदो
कर्णाटान्ध्रकलिङ्गगौडमहिभृत्कन्यासु धन्यास्म्यहम्।
एवं ताभिरपि प्रमोदितमतिर्धत्ते बहुप्रेयसी-
क्रीडायां रघुनाथभूपतिरसौ कृष्णावतारोत्सवम्॥' इति 'साहित्यसाम्राज्ये'—

'स्वामीति। नायिकायास्सखीं प्रति वचनमिदम्। हे सखि! सर्वदः-सकलकलावाञ्छित-प्रदः, स्वामी रघुनाथनायकः स्वे गृहे मदीयगृहे, यद्यपि स्वशब्दः प्रायेण कर्तृपरामर्शि दृष्टः। 'चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्षती'त्यत्र तु वीप्सावलात्कर्मभूतचातुर्वर्ण्यपरत्वं युक्तमिति नात्र स्वशब्देन नायिकागृहपरामर्शो युक्तः। तथाऽपि 'कन्यासु धन्यास्म्यह'मित्यादौ वाक्यशेषबलान्नायिकायाः प्रथमान्तनिर्दिष्टत्वानपायाच्चोक्तार्थपरामर्शो युक्त एव। खेलति विहरति। अतः कर्णाटादिदेशानां महिभृतां राज्ञां—'ङ्यापो संज्ञा छन्दसोर्बहुल'मिति मही शब्दस्य ह्रस्वः। 'वैदेहीबन्धोर्हृदय'मितिवत्। तेषां कन्यासु धन्या अहं धन्यास्मीत्येवं ताभि-रभिप्रमोदितरतिश्लाघितविहारस्सन्ननेकप्रेयसीक्रीडायां अनेकाभिरतिप्रियाभिर्नायिकाभिस्सह विहारे कृष्णावतारोत्सवं धत्ते। यथा हि—श्रीकृष्णोऽष्टोत्तरशतसहस्रमहिषीभिस्सहैक-प्रकारेणानुकूल एव विजहार। तथायमपि विहरतीत्यर्थः' इति॥

तदनु मूले—कौशिक्यादिवृत्तयः, वैदर्भ्यादिरीतयश्च निरूपिताः। ततः नायिकानिरूपणम्—'युवानुरञ्जनाकारचेष्टा शृङ्गारनायिके'ति तस्याः लक्षणं तद्विभागश्च॥

'साहित्यसाम्राज्ये' इत्थं निष्कर्षः कृतः—'अयमिह निष्कर्षः। नायिका तावत्त्रिविधा। 'स्वान्या साधारणा' चेति। तत्र स्वीया त्रिविधा; 'मुग्धा, मध्या, प्रगल्भे'ति॥ तत्र मुग्धा धीरा एकरूपैव। मध्याप्रगल्भे तु प्रत्येकं 'धीराधीरा धीराऽधीरा' चेति त्रिविधे। त्रिविधेऽपि 'ज्येष्ठा कनिष्ठा' चेति प्रत्येकं द्विविधे। एवं मध्याप्रगल्भयोर्द्वादशभेदाः। मुग्धा एका एव इति स्वीया त्रयोदशधा। अन्या तु 'कन्या परोढा' चेति द्विविधा। साधारणा तु एकरूपा। एतास्तिस्रः प्रागुक्त त्रयोदशविधाभिस्सह प्रत्येकमष्टविधा इत्यष्टोत्तरशतम्। ताश्च प्रत्येकमुत्तममध्यमाधमभेदेन त्रिविधा इति चतुर्विंशत्युत्तरत्रिशतं भेदाः' इति॥

ततः इयता प्रबन्धेन निरूपितनायिकाद्यालम्बनतद्गुणालङ्काराणामुपयोगं विवक्षुः स्थायीभावो-पचयो रस इत्युक्तः। स्थायीभावोपचयः कथं भवतीत्याशङ्कायां तत्कारणप्रदर्शनेन तन्निष्पत्ति-प्रकारः दर्शितः मूले—

'अयमभिसन्धिः। 'विभावानुभावसञ्चारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रम्। तत्र विभावो नाम ज्ञायमानतया रसपोषकः, आलम्बनोद्दीपनभेदेन द्विविधः। तत्राद्यं नायिकानायकभेदेन द्विविधम्। उद्दीपनं चतुर्विधम्। तदुक्तम्—'आलम्बनगुणश्चैव तच्चेष्टातदलङ्कृतिः'॥ इति॥"

इत्यादि......॥ एवमादि नैकविषयाः प्रतिपादिताः। यथामति सङ्गृहीतं मया एतेषां कविता-कौशल्यम्। किञ्च अत्रमेवामोघमहिमाऽऽदर्शव्यापाराश्शिष्यानुकम्पया प्रदर्शिताः वेदान्तविद्याचार्यैः श्रीमत्पूज्यसुधीन्द्रगुरुपादैः।

पूर्णप्रज्ञः:—तेषु कतिचन कथय कृपया ?

गुरुप्रः:—पुरा विजयपुराधिपतिः (बिजापुर) यवनबादशाहः आदिलशाहो, अनावृष्ट्या द्वादशवार्षिकक्षाम-पीडितस्वप्रजानुकम्पया रिरक्षयिषया च एतान् शरणं ययौ। तत्सेवया परितोषिताः दिनत्रय-पुनश्चरणादिना श्रीशालक्ष्म्यालिङ्गितनारायणं प्रति तपस्तेपुः। लक्ष्मीनारायणप्रसादेनानर्घ्य-वृष्टिः सुभिक्षालम्पच्च समजनि। अनन्यसुकरदुष्कादिव्यापारादिना समुदितो म्लेच्छाधिपः यतिवरानेकदारं संसेव्य स्वीयानात्यमाहूय 'त्वमेतेषामन्तेवासी भूया' इत्यचोदयत्। तदा सोऽप्यमात्यवरः—'यदि दिवापि प्रकाशहीनं भानुं कुर्युरिमे, तदाहमेतेषामन्तेवासी भवेयम्' इति महीपतिं प्रत्युवाच। एवं महीपतिप्रार्थिता इमे स्वतपःप्रभावमहिम्ना मध्याह्नवेलायां प्रचण्ड-किरणं, निगूढप्रकाशं चक्रुः। एतेनामोघानन्दभरितस्स सचिवोऽपि शिष्यस्सञ्जातः॥

मुरलीपूर्णौ:—[सानन्दबाष्पं] सुहृद्वर! अयं सुदिवसः!! अन्यादृशमहामहिमोपेतानां कविसार्वभौम-शिखामणीनां निखिलकर्मान्द्रिनुतपदपाथोजानां षड्दर्शनाचार्यवर्याणां विद्यासिंहासनारोहणैक-दक्षानां महासाहित्यसाम्राज्यसार्वभौमानां सर्वतन्त्रस्वतन्त्राणाममीषां, अपारयशसः जगद्विख्यात-प्रबन्धानाञ्च श्रवणेन पुनीता वयम्। एतादृशसुधापायवितृभ्यो भवद्भ्यः निरवधिकमाधमर्ण्य-मनवरतमास्थितास्स्मः॥ एवमेव मैत्री परस्परमभिवर्धतामिति श्री गुरुसार्वभौमानभ्यर्थयामः॥

गुरुप्रः:—[ तानभिवाद्य सस्मितम् ]—इदानीमुभयतामपण्डितपामरमामोददायि साहित्यमेव खलु भवति!!

मुरलीपूर्णौ—कस्सन्देहः? अश्रुतैतादृशविषया वयं भ्रान्त्या तथाऽवोचाम॥

गुरुप्रः:—(सोत्साहम्) आसेतुहिमाचलं नरीनर्तमानकीर्तिचन्द्रिकाविराजितास्सत्प्राचीनानाममोघमहिमानं सर्वविद्यावैशारद्यञ्च वेत्तृभिरस्मदाचार्याणां प्रभावो विदितो भवेत्।

सर्वे—अमीषां कविताकौशल्यवर्णने सहस्रमुखोऽपि फणिपतिस्समर्थो न भवेत्? का वार्ताऽल्पमतीनाम्?

गुरुप्रः:—सत्यम्। एतत्कवितानैपुणी एवमुपवर्णिता 'राघवेन्द्रविजये'—

"सुधीन्द्रयोगिनं सेवे साधुसत्कृतसम्पदम्।
सगद्यपद्यनिर्माणविद्यायां प्रथमं पदम्॥" इति।

सर्वे—एतत्साक्षीभूतम्—'कविसार्वभौमकविताकौशल्य'मेव॥

[तदानीमेव भेराघण्टादिध्वनिः श्रूयते]

[...]...[...र्य] अहो! श्रीमत्सुयमीन्द्रपूज्यचरणाः डोलोत्सवमण्डितान् श्रीगुरुसार्वभौमान्महा मङ्गलार्तिकादिभिः पूजयन्तो विराजन्त इति भेरीघण्टानिनादाकर्णनेन तर्कयामि।

मुरली:—कथं मन्त्रालयस्समागतः?

गुरवः—अथ किं ? आगम्यतां वयमपि श्री राघवेन्द्रगुरुसार्वभौमसन्दर्शनवन्दनादिना तथा श्रीमत्पूज्य-सुयमीन्द्रगुरुपादानां पादवन्दनानुग्रहसम्पादनादिना चात्मानं कृतार्थयामः ॥

सर्वे :—"तथास्तु" इत्युक्त्वा "श्री मूलरामो विजयते, जय जय सुधीन्द्रकविकण्ठीरव, श्री गुरुराजो विजयते, जीयात् श्री सुयमीन्द्रसंयमिमणिः वेदान्तराज्ये चिरम्" इत्यादि जयघोषपूर्वकं श्री गुरुराजालयं प्रविशन्ति ॥

श्रीमद्वेदान्त साहित्योभयसाम्राज्यशासके ।
सुधीन्द्रसार्वभौमेऽस्मद्भक्तिरस्तु निरन्तरम् ॥

॥ इति कविताकौशल्यनिरूपणं नाम चतुर्थोल्लासः समाप्तः ॥

॥ इति राजा श्री गुरुराजाचार्यकृतकविसार्वभौमकविताकौशल्यं समाप्तिमगमत् ॥

॥ श्री कृष्णार्पणमस्तु ॥



॥ श्रीजानकीजानिर्मूलरामो विजयते ॥

॥ श्रीमन्न्यायसुधापरिमळगुरुराट् भवतु भावुकदः ॥

# दशोपनिषदर्थसंग्रहः

श्री ॥ म ॥ शा ॥ प्र ॥ विद्वांसः अर्चक राघवेन्द्राचार्याः,
(श्रीगुरुसार्वभौमसंस्कृतमहापाठशाला, मन्त्रालय)

वस्तु स्तुतं सुरस्तोमैरस्तु शस्तं मया स्तुतम् ॥
मस्तु हस्तं प्रस्तुताय श्रुतिमस्तकविश्रुतम् ॥
लसतु श्रीमदानन्दतीर्थेन्दुर्नो हृदम्बरे ॥
यद्वचश्चन्द्रिकास्वान्तसन्तापं विनिकृन्तति ॥
मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते ॥
राजराजायते रिक्तो राघवेन्द्रं तमाश्रये ॥
सुधाद्यमलसद्बोधं सुकीर्तिविलसद्दिशम् ॥
सुधीसंस्तुत्यसुगुणं सुशीलेन्द्रगुरुं भजे ॥

अयि भो माननीयमनीषिणः, सुविदितमेवैतत्, निखिलक्षितिवर्तिभिरपेक्ष्यते मोक्ष इति । स च जिज्ञासोत्थज्ञानजातभगवत्प्रसादजः । सा च ब्रह्मजिज्ञासा न हि लक्षणादिज्ञानमन्तरा ॥ श्रुतिततिविलक्षणेन बोभूभवति तल्लक्षणज्ञानम् । 'नावेदविन्मनुते' इति श्रुतेः । समग्रश्रुतिपरिज्ञानाशक्तान् लोकान् समुदीक्ष्य भगवान् बादरायणः व्यभजच्चतुर्धा वेदमपौरुषेयम् । ननु 'अग्निमीळे पुरोहितम' इत्यादीनां ऋचां मधुच्छन्दः, विश्वामित्रः, गौतमः, इत्यादयो ऋषय इत्यनेन तत्कर्तृकत्वं प्रतीयते । अतो वेदस्य अपौरुषेयत्वमेव न, इति चेन्न । श्रीहरिनिश्वसितरूपस्य वेदस्य अपौरुषेयत्वे सन्त्येव श्रुतिप्रमाणानि । निरुक्तिकृतो यास्कादयोऽपि ऋषि शब्दस्य द्रष्टा, साक्षात्कारी, प्रकाशकः इत्येवार्थं समूचुः । तत्तन्मन्त्राः तत्तदृषीणां प्रतीता अभवन्, इत्येवार्थः । न हि मन्त्रकर्तारस्ते । आंग्लभाषायां केप्लरस्य गतिनियमः (Kepler's Laws of motion) न्यूटनस्य आकर्षणनियमः (Newton's Laws of Gravity) इत्यादयः शोधकानां ग्रन्थाः वरीवर्तन्ते । एतेन सूर्यादिगतिनियमाः केप्लरेन कृता इति, भूम्याद्याकर्षणनियमकर्ता न्यूटन्, इति न वक्तव्यम् । किंतु पूर्वं ईश्वरसृष्टा एव नियमाः । सूर्यादिगतेराकर्षणस्य च हेतुमाधुनिकेषु प्रथमत एवाववुध्य सकललोकानां सुखावबोधाय ग्रन्थौ कलयेतेस्म । तथैव ऋषयोऽपि मन्त्रद्रष्टार एव न तु तत्कर्तार इति, श्रुतेः पौरुषेयत्वं दूरतोपास्तमष्टमरस इव । ऋग्वेदादि चतुर्वेदेषु प्रतिवेदं संहिता, ब्राह्मणम्, उपनिषत् इति विधास्तिस्रः । संहिता छन्दोबद्धा वर्तते । संहितासु ऋक्संहिता वरा । यत एतस्यां श्रीश तदनुयायिनां च नुतिरेवाधिका विराजते । एतस्या शाखाश्चतुर्विंशतिः । एतासु शाकलसंहिता समग्रमुपलब्धा । बाष्कलशाखायां कतिचिन्मन्त्रा उपलब्धाः । यजुर्वेदसंहितायां

विशेषतो यज्ञ एव प्रतिपादितः। यजुर्वेदे मन्त्रद्रष्टा ऋषिर्नास्ति। यजुस्संहितायां एकशतधा शाखाः प्रभिन्नाः। तत्रापि कृष्णयजुस्संहितायां पञ्चाशीतिशाखाः, शुक्लयजुस्संहितायां षोडशशाखा इति। कृष्णयजुश्शाखासु १. तैत्तिरीयोपनिषत्, २. मैत्रायणीयोपनिषत्, ३. कठोपनिषत्, ४. कापिलोपनिषत्, ५. श्वेताश्वतरोपनिषत् इति पञ्चैवोपलब्धाः। सामसंहितायां सहस्रशाखा विद्योतन्ते। तत्र साम्प्रतमुपलब्धम् "कैथम्, नारायणीय" इति शाखाद्वयमेव। अथर्ववेदे, द्वादशशाखासु सत्स्वपि पैप्पलेय, शावर इति शाखाद्वयमेवोपलब्धम्। ब्राह्मणमन्त्रः गद्यरूपतया वर्तते। अयं संहितायां दुर्बोधानर्थान् विशदीकरोति। उपनिषत्–आम्नायशीर्षमिति प्रथिता, वेदस्थश्रेष्ठतमविषयप्रतिपादिका, चतुर्वेदेष्वपि प्रत्येकमुपनिषदो विराजन्ते। आत्रेयगोत्रे ऋग्वेदे–ऐतरेयोपनिषत्, कौशीतकी, बाष्कला चेति तिस्रः। भारद्वाजगोत्रे कृष्णयजुर्वेदे तैत्तिरीया, मैत्रायणी, कठोपनिषत्, श्वेताश्वतरा चेति चतस्रः। काश्यपगोत्रे सामवेदे छान्दोग्यतलवकारोपनिषदौ। वैखानसगोत्रे अथर्ववेदे षट्प्रश्न, मांडूक, आथर्वणा इति तिस्रः। अलं प्रपंचितेन। सर्वाभिरुपनिषद्भिरपि श्रीहरिपरतरत्वं जगत्सत्यत्वम्, पारमार्थिकः पञ्चभेदः, चेतनेषु तारतम्यम् इत्यादि तत्त्वरत्नप्रदकमेव प्रपञ्च्यते। सर्वा अप्युपनिषदो लोकैर्दुरवगम्या इति दशोपनिषद एव श्रीमदानन्दतीर्थभगवत्पादाचार्यैः सारतरा उद्धृत्य तासां भाष्याणि व्यरचिषत तेषामामूलाग्रमवलोकने अशक्तानां सङ्ग्रहेण तत्सारबोधनाय समुद्यमो यथामति विधीयते—उपनिषदर्थानुसंधानसमुत्पन्नं ज्ञानं 'यस्य प्रसादात्परमार्तिरूपात्' इति श्रुतेः भगवदत्यर्थप्रसादद्वारा परमपुरुषार्थसाधनं भवति। अतः सर्वैरप्ययं ग्रन्थः सदवलोकनीयः।

अस्या ऐतरेयोपनिषदो महिदास ऐतरेयो मुख्यर्षिः, विरिञ्चोऽप्यवान्तरऋषिः। जीवमोक्षार्थप्रवृत्ता ऐतरेयी श्रुतिः। अस्याः श्रीहरिर्देवता, यथावर्णपरिगणनं छन्दो ज्ञेयम्॥

सङ्कर्षणानिरुद्धवासुदेवप्रद्युम्नाख्यभगवद्रूपचतुष्टयं सर्वदा सर्वैरुपास्यम्। अनुपासकानां पिशाचराक्षसासुरभेदेन त्रिविधानां अन्धे तमसि पात एव फलम्। उपासकानां मनुष्योत्तमर्षिदेवभेदेन त्रिविधानां संसृतेर्मोक्ष एव फलम्। किं च उत्थापनात् (जगतः सर्जनात्) उक्थनामकविष्णोः अधिदैवतमध्यात्मं च रूपविशेषाणां पृथगुपास्त्यर्थमधिष्ठानं वाहनं भोग्यमन्नं च पृथक् पृथक् दर्शयति। उक्थनामा भगवान् स्त्रीरूपेण पृथिव्यां वर्तते। पृथिव्यन्तरिक्षद्युनामकानि तत्स्थानि उक्थनामकानि भगवद्रूपाणि। तेषां अग्निवाय्वादित्यस्था अग्न्यादिगतार्कशब्दवाच्या गरुडा दासाः। तत्राग्निस्थोऽर्कनामा गरुडः पृथ्वीस्थोक्थनामकहरेरधीनः। अन्तरिक्षस्थवायुस्थोऽर्कनामा गरुडः अन्तरिक्षस्थोक्थस्य, द्युलोकस्थसूर्यस्थार्कनामा गरुडः द्युलोकस्थोक्थस्य चाधीनः। इत्यधिदैवतम्। अथाध्यात्मम्। पुरुषनामा भगवानुक्थः। तस्य वाक् नासा चक्षुर्देवताः। परशुरामनरसिंहकपिलाः पुरुषवाङ्नासाचक्षुस्थितवाक्प्राणचक्षुर्देवताख्यदेवस्थित तन्नामकगरुडेषु स्थित्वा वदनघ्राणदृष्टिभिः प्रसिद्धान्नादिकं स्वीकुर्वते। तत्र पुरुषनामको भगवान् पुरुषाकारेण तावत्परिमाणो वर्तते। तस्य मुखं परशुरामः। नासिका नारसिंहः। चक्षुः कपिलः। तस्य मुखं जीवदेहमुखे स्थितमस्ति। तस्य नासिकादीन्द्रियाणि जीवदेहेन्द्रियेषु वर्तन्ते। तस्य जीवमुखगतवागिन्द्रियाभिमानी योऽग्निस्तत्रस्थार्कनामा गरुडस्तन्मुखस्थपरशुरामाधीनः। स तु तदारूढो वर्तते, जीवनासिकागतनासिक्यप्राणस्थोऽर्कनामा गरुडस्तत्रस्थनरसिंहाधीनः। जीवचक्षुर्गतादित्यस्थार्कनामा गरुड स्तत्रस्थकपिलाधीनः, इत्यादि। प्राणदेवोत्तमत्वे आख्यायिकां वभाण। सर्वेषां देवानां प्राणेन सह जाते कलहे सर्वेषुपर्वाणो देहादुत्क्रान्ता अपि सप्राणं शरीरं नापतत्। देहादुत्क्रान्ते प्राणे शरीरं पपात। पुनः प्राणं विना निखिलनिर्जरैरपि प्रविष्टमपि शरीरं नोदतिष्ठत्। पुनः प्राणे प्रविष्ट एव शरीरमुदतिष्ठत्। तं देवा अब्रुवन् 'त्वमेवोक्थमसि' इति। एतेन प्राणस्योत्तमत्वं प्रतिपादितम्॥

सत् इति प्राणः। तीति ब्रह्मा। यमित्यादित्यः। एवं मिलित्वा एते त्रयः सत्यशब्दवाच्याः। एते क्रमेण शुक्लकृष्णकनीनासु वर्तन्ते। एतदवबोधेन अनृतवाग्दोषः परिह्रियते। नारायणो वेदवाङ्रूपया महारज्ज्वा, तद्गतैर्ब्रह्मरुद्रेन्द्ररूपैर्दामभिश्च सर्वमिदं जगत् बध्नाति। इति ज्ञानी मुक्तो स्थावरपूज्यो भवति ॥

अन्यदेवताविषयत्वेन प्रतीयमाना अपि ऋचो मुख्यतो भगवद्विषया एव। अमुख्यतो वाय्वादिविषयाश्च। तथाहि, वृत्रहननानन्तरं इन्द्रकृतमहाव्रताख्ययज्ञे शंसितुमुद्युक्तं हौत्रे नियुक्तं विश्वामित्रं वक्ष्यमाणः पुरन्दरो दृष्ट्वा विष्णुवायुभ्यामाविष्टः शंसेत्युक्त्वा तस्य समीपे निषसाद। स विश्वामित्रस्तदातिप्रीतिहेतुं बृहतीसहस्रं शशंस। तेनेन्द्राविष्टहरेः सालोक्यसाधनं प्रसादं लेभे। इन्द्रोक्तः स द्वितीयवारं तस्यैव शंसनेन भगवत्पुरप्राप्तिसाधनतत्प्रसादं, तृतीयवारं शंसनेन भगवदन्तःपुरप्राप्तिसाधनप्रसादं च लेभे। पुनः 'वरं ददामि वृणीष्वे'ति इन्द्राविष्टविष्णुना अभिहितो महर्षिः इन्द्र, त्वदाविष्टं जानीयाम्, स विष्णुश्चेत् तमेव विशेषतो जानीयाम् इति सञ्जगाद। तदा इन्द्राविष्टो भगवानुवाच। हे ऋषे, 'इन्द्राविष्टोऽहं प्रकृष्टानन्दरूपत्वात्प्राणः, अहेयत्वादहं नामा, ततत्वाद्वेतृत्वाच्च त्वं नामा, विष्णुरेव इति जगाद इत्यादि। एतद्बृहतीसहस्रस्याक्षरपरिगणनेन द्वासप्ततिसहस्राणि भवन्ति। तद्वत् विष्णुरूपाणामपि तावन्ति सहस्राणि भवन्ति। एतदुपासकाः पुरुषाः शतवर्षेषु भगवदुपासनाफलं प्राप्नुवन्ति। यतः एकस्मिन् वत्सरेऽहोरात्रसम्मेलने तेषां द्वासप्ततिर्भवति। शतसंवत्सरं द्वासप्ततिसहस्रं भवति। इति ॥ स्त्रियां यल्लोहितं तत्राग्निगतानि स्त्रीरूपाणि सन्निहितानि। आदित्यगतानि पुरुषरूपाणि पुरुषरेतसि सन्निहितानि। अत एव न जुगुप्सीत परस्परं भार्या भर्ता च। श्रीहरिं केवलं पुंरूपिणम्, केवलं स्त्रीरूपिणम्, अस्त्रीपुरुषरूपिणं च ब्रुवन् अयथार्थवादी। कुतः तस्य स्त्रीपुंरूपात्मकत्वात् स्त्रीरूपिणं पुंरूपिणं च वदेत्। स एव यथार्थवादी। श्रीहरेर्नपुंसकरूपं नास्ति। अतः स्वरूपतो नपुंसकस्य मुक्तिर्नास्ति। (अपक्रामन्तु गर्भिण्यः) अन्नस्थो भगवान् नारायणः पुरुषेऽन्नेन सह प्रविशति। भुक्तमन्नं परिणतं सत् रेतो भवति रेतोगतं भगवन्तं पुरुषस्थो भगवान् यदा स्त्रियां सिंचति तदा स्त्रीलोहितगतभगवत्स्वरूपेणैकीभावं गच्छति। तस्मात् शरीरप्रादुर्भाव एव पुंरेतस्थभगवतः प्रथमं जन्म। ततो नारीस्थितभगवान् गर्भस्थं भगवन्तं बिभर्ति। भूमौ पुत्रगतरूपे प्रादुर्भावो द्वितीयं जन्म। अथानेन परमात्मना पुत्रगतो रूपविशेषः पितृजीवस्य स्वस्य वार्थे पुण्यकर्माणि कर्तुं भूलोके कतिपयकालं निधीयते। तदनु पितृजीवेन सहान्यत्र जायते। पितृजीवस्यान्यत्र यदा पुनर्जन्म तदा तच्छरीरे तेन जीवेन सह प्रादुर्भवनमेव भगवत स्तृतीयं जन्म इति। एवं विद्वानधिकारी चरमदेहाद्ब्रह्मनाड्या उत्क्रम्य वैकुण्ठादौ मुक्तस्सन् स्वयोग्यान् सर्वकामान् भुङ्क्ते। (यथास्थानं गर्भिण्यः) विष्णुशब्दस्तु विशिष्टबलवत्व, प्रणेतृत्व, पूर्णत्व, ताच्छील्यादिमत्ववाचकः विष्णुशब्दार्थानुसन्धानं सर्वपुरुषार्थहेतुर्भवति। एताः संहिता अन्यविद्यासु शिष्यत्वरहिताय शिष्यत्वेऽप्यसंवत्सरवासिने, व्याख्यानशक्तिशून्याय च नाभिवदेत्। इति महिदासाचार्या आचजते। इत्यलं विस्तरेण। एवं च एतस्यां संहितायां श्रीविष्णुसर्वोत्तमत्वं प्राणस्य जीवोत्तमत्वं च विशेषतः प्रतिपादितम्।

॥ इति ऐतरेयोपनिषदर्थसङ्ग्रहः ॥

## अथ तैत्तिरीयोपनिषदर्थसंग्रहः

अस्या उपनिषदो विष्ण्वादिदेवा ऋषयः, श्री हरिर्देवता, अनुष्टुभादिछन्दो यथासम्भवम्। सूर्यमण्डलस्थहरिर्ब्रह्मणे, स वरुणाय, स भृगवे 'शं नो मित्र' इत्यादि मुक्तगीतान्तानि वाक्यानि प्राह।

अथ प्रणवोपास्तिः। विष्णुरोमित्युच्यते। अकारोकारौ अधिकोच्चत्ववाचकौ। योग्यतया गुणानामन्वयः। अधिकोच्चगुणत्वहेतुनेति भावः। सर्वरूपाणामधिकगुणपूर्णत्वम्। तथा च सूत्रम् 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति॥ कुतो विष्णोरोन्नामत्वं ज्ञायते इत्यत आह—विष्णुमुद्दिश्य कर्मादि-कुर्वद्भिर्नियमेन तदातदा 'ॐ' इत्युच्चार्यमाणत्वात्, इति। 'स्वाध्यायप्रवचनयोराधिक्य'मित्यर्थे त्रिशंको-र्मानवनृपस्याख्यायिकामाह। अथ ब्रह्मविद्योच्यते। ब्रह्मज्ञानान्मोक्ष इत्युक्ते कीदृशं ब्रह्म, कीदृशं वेदनम्, कीदृशी ब्रह्मप्राप्तिरिति शङ्कात्रयस्य, सत्यमित्यादिना, यो वेदेत्यादिना, सोऽश्नुते इत्यादिना च अनुक्रम-मुत्तरमभिहितम्। तदनु भगवन्महिमानं प्रतिपाद्य, आनन्दतारतम्यमभिधाय, अन्नमयादिप्राप्तिरूपफलं च अभिहितम्॥ इति ब्रह्मवल्ली॥ अथापत्येन भृगुणा पृष्टो वरुणः 'अन्नं प्राणं चक्षुश्श्रोत्रं मनोवाच'मित्य-भिधाय ब्रह्मलक्षणमप्येष्वस्तीत्याह। अत्र विज्ञानानन्दौ च ग्राह्यौ। ब्रह्मवल्ल्यां चक्षुश्श्रोत्रवाचां ग्रहणम्। एवं च अष्टौ भगवद्रूपाणि। तानि च भृगुर्जन्मादिकारणत्वरूपलक्षणवत्तया मननिदिध्यासमाख्यतपसा सम्यक् ज्ञातवान्। अन्नाख्यं भगवन्तं न दूषयेत्। एतं अयोग्येषु नोपदिशेत्। भगवद्गुणकर्माणि च पूर्णानि मन्येत। गुरुकुलवासेच्छया पृच्छमागतं नेति न ब्रूयात्। एवं अन्नमयादिरूपाष्टकोपासनेन चतुर्मुखः प्राप्तमोक्षः 'हा (३) वुहा (३) वुहा (३) वु' इत्यादि साम गायन्नास्ते इति रहस्यम्॥

॥ इति तैत्तिरीयोपनिषत्॥

# अथ श्री बृहदारण्योपनिषदर्थसंग्रहः

अस्या उपनिषदो ब्रह्मसूर्ययाज्ञवल्क्यकण्वाः क्रमादृषयः, लक्ष्मीशो देवता। आदौ पूर्वाध्यायप्रकृत-अश्वमेधीयाश्वनिष्ठां ब्रह्मविद्यामाह। वागीवाश्वो हि, उच्चैश्श्रवाः तत्राश्वरूपो ब्रह्मा, तत्र च तद्रूपो हरिः सन्निहितः। तत्र सन्निहितयोरश्वरूपयोर्ब्रह्मविष्ण्वोरङ्गेषु जगदाश्रित्यास्तीति क्रमेणाह महिमाधिवयार्थ शब्दान्तराणां वायौ निर्वचनम्। अथ विरिञ्चस्यमहिमा। ब्रह्मा 'पुराणि=पापानि, ओषति=दहतीति, पुरुषः, इति पुरुषशब्दवाच्यः, इत्युक्तम्। स विरिञ्च एकाकी न रेमे। ऐच्छद्द्वितीयं वस्तु भार्यात्मकम्। ततो वाणी समजायत। ब्रह्माणीब्रह्माणौ सम्परिष्वजाते। इदं देहद्वयजन्यसुखमेकपात्रार्धद्वयस्थित-घृतवत्। इति याज्ञवल्क्य आहेति कण्वो वक्ति। विरिञ्चसृष्टा तेनैवानुभूता वाणी विचारयामास स्वयमेव। वेधा मां स्वस्मादेव जनयित्वा कथमिदानीं स्वयमेवानुभवत्याश्चर्यम्, इति। अधर्ममिव दृष्ट्वा तिरोऽभवत्। ततः सा वाणी गौरभवत्। विधाता ऋषभोऽभवत्। सा वडवा अभवत्। स सप्तिरभवत्। इत्थमापिपीलिकाभ्यस्तत्सर्वमजायत। इति। अथ वायुभारत्योर्महिमा प्रतिपाद्यतेस्म। तदनु स्वहृदिस्थ-ब्रह्मविद्याया मोक्षसाधकत्वे समुवाचाख्यायिकाम्। तथा हि—

बलाकपुत्रो गर्गगोत्रीयो वेदाध्ययनसम्पन्नस्त्वत एवाहंकारी च काश्यां भवमजातशत्रुनामक पार्थिवं अभिगम्य 'तुभ्यं ब्रह्म वदानी'त्युवाच। तदा राजा 'यदि त्वं ब्रह्म वदिष्यसि सहस्रं गवां निष्काणां वा दद्मः' इत्युवाच। 'कस्मादेवं मामपहससि' इति विप्रपृष्टः क्ष्माभृत् 'अन्तिकस्थं ब्राह्मणवरं त्वां विहाय जनकराजं प्रति कुतो ब्रह्मजिज्ञासवोऽधावन्' इत्यभाणीत्। त्वं तु केवलं दर्पेणैवं मामात्थ न वस्तुतो ब्रह्म जानासीति भावः। एवमपहासलज्जितो गार्ग्यः स्वाभ्यस्तविद्यामाह। तत्र भानुचन्द्रविद्युदाकाश वाय्वग्न्यबादर्शगच्छत्पाश्चात्यशब्ददिक्छायात्मरूपेषु द्वादशाधिकरणेषु पुरुषो विष्णुरस्ति। तमेवोपासे इति। सम्राट् त्वया ज्ञातादप्यधिकमहं जानामीति प्रोवाच। कथमिति विप्रपृष्टेन भूपेन 'आदित्यादि'स्थो विष्णुर्ब्रह्मेत्येव त्वयाधिगतम् मया तु सहस्रांशुगतो विष्णुरुत्तमत्वदीप्यमानत्वादिगुणविशिष्टः, इति प्रत्यधि-

करणम् तत्तद्गुणविशिष्टतया समुपास्यते, इति कथितम्। अजातशत्रुराजवाक्श्रोतृविप्रेण 'हृदयस्थोपासनाप्रकार वक्तुं शिष्यत्वेनोपगच्छामि त्वाम्' इति समभिहितोभूपः विप्रस्य क्षत्रियो न गुरुः क्षत्रियस्यैव विप्रो गुरुः, तस्मात्त्वां विज्ञापयामि, न त्वाचार्य इवोपदिशामि, इत्यभिधाय गार्ग्याय हृदयस्थब्रह्मविद्योपासनाप्रकारमाह ॥

भगवानेव सर्वदेवोत्तमः, सर्वगुणपूर्णः सर्वमुमुक्षूपास्यो मोक्षदश्चेति ऋषिभिः मीमांसया समर्थितम्, इत्यत्राख्यायिका। जनकः स्वकृतयज्ञे समवेतकुरुपांचालदेशविप्राणां संसदि 'एतेषां मध्ये कोत्यर्थं ब्रह्मज्ञानी' इति जिज्ञासितुं गोसहस्रं यज्ञवाटमध्ये मेलयित्वा एकैक गोशृङ्गयोः सार्धदलद्वयसुवर्णमाबध्य 'भो ब्राह्मणाः, भवतां मध्ये ब्रह्मिष्ठो गोसहस्रं गृह्णातु' इति जगाद। तदा याज्ञवल्क्यस्यानुज्ञया तच्छिष्यः सोमश्रवाः ता गा आचार्यमन्दिरं निनाय। ततः सर्वेषां मन्युमतां मुनीनामनुमतिमनुसृत्य 'अस्मासु त्वमेव कथं ब्रह्मिष्ठोऽसि' इति पृष्टस्य याज्ञवल्क्यस्य 'न वयं ब्रह्मिष्ठाः। ब्रह्मिष्ठाय नमस्कुर्महे। केवलं गोकामनया वयं स्वीकृतम' इत्युक्त्या तस्य धाष्ट्र्याभावं विज्ञाय प्रष्टुं समारेभे। 'केन पुरुषा यजमानो मृत्योरतिमुच्यते' इति पृष्टे आश्वलायनेन 'होत्रर्त्विगग्निवाक्स्थितेन वासुदेवेनोपासितेन यजमानो मृत्योरतिमुच्यते' इत्युवाच याज्ञवल्क्यः इत्यादि॥ तदागतानां ऋषीणां मध्ये याज्ञवल्क्यस्य श्रेष्ठत्वेऽवधारिते सति तं गुरुत्वेन जनको वव्रे। तथा हि। जनकः पदच्छागतं याज्ञवल्क्यम्। किं पशूनिच्छन् अचारीः, उत भगवद्विद्यानिर्णयानुपदेष्टुमचारीः, इति। उभयोद्देशेन चरामीति याज्ञवल्क्यालपितः सम्राट् 'मह्यमुपदिश' इति प्रार्थयामास। मुनिरन्येभ्यः श्रुतादप्यधिकं विवक्षुरन्यैर्यदा विदितमनुवदेत्यालपत्। तदा राजा जित्वानामकमुनिवरेण समुपदिष्टं 'वाग्वै ब्रह्म' इत्युवाच॥ स तच्छ्रुत्वा स्तुत्वा वाङ्नामकहरेरायतनं प्रतिमां च तुभ्यमब्रवीत्किमिति पृष्टवान्। 'न हि, त्वमेव ब्रूहि,' इत्युक्तो मुनिस्सञ्जगाद। वाङ्नामकहरेः प्रसिद्धवागिन्द्रियमेवाधिष्ठानं। आकाशनाम्नी रमा प्रतिमा। वाङ्नामकभगवतैव सर्वाणि ज्ञायन्ते। आयतनादियुक्तत्वेन वाङ्नामकं परमं ब्रह्म विद्वान् य उपास्ते तमधिकारिणं न जहाति वाक्। देवलोकस्थस्सन् देवसायुज्यं प्राप्य स्वावरैः पूज्यते। एवमुपदिष्टः सम्राट् स्वोचितगुरुदक्षिणां दातुं हस्त्यृषभसहस्रं ददामीति प्रतिजज्ञे। तच्छ्रुत्वा मुनिः 'समग्रमनुपदिश्य गुरुदक्षिणां माग्रहीः' इति मत्पितुराज्ञेत्युवाच। तदा षडाचार्योपदिष्टस्य ब्रह्मण आयतनादिकं ज्ञात्वा स्वयोग्योपासनाप्रकारं श्रोतुं सिंहासनादवरुह्योपरुध्य 'मद्योग्यरूपोपासनाप्रकारं शिक्षय' इति राज्ञा पृष्टो मुनिः सर्वेषां दक्षिणाक्षिवर्तमान इन्धोनाम पुरुषः अप्रसिद्धेरवाच्यः, परिमाणविहीनत्वादप्रमेयः, मुक्तौ भवादृशै राजभिः प्राप्यः। अतः स एवोपास्यः, इत्यादि महिमानमुवाच। ननु पुरुषः परमात्मा अप्रसिद्धेरवाच्य इति कुतः सर्वात्मना शब्दावाच्यत्वमेवाङ्गीक्रियताम् श्रीहरेः। इति चेन्न॥ तथासति वेदाप्रतिपाद्यत्वापत्या वेदान्तानाम खण्डार्थनिष्ठताभ्युपगमव्याघातात्। न च निर्गुणे ब्रह्मणि शब्दप्रवृत्तिनिमित्ताभावेन वाच्यत्वाभावेऽपि लक्षणया सर्ववेदप्रतिपाद्यत्वं युज्यते इति वाच्यम्। लोके हि येन केनचित्पदेन वाच्यस्यैव अन्यपदेन लक्ष्यत्वं दृष्टम्। यथा तीरपदवाच्यस्य तीरस्य गंगापदलक्ष्यत्वम्। यः सर्वशब्दावाच्यब्रह्मणो लक्ष्यत्वमुररी करोति स कथं देवानां प्रियो न भवेत्। (ननु इक्षुक्षीरगुडा) ननु ब्रह्म तावन्निर्गुणं 'केवलो निर्गुणश्च' इति श्रुतेः। न सम्भवति तत्र शब्दानांवच्नवृत्तिः प्रवृत्तिनिमित्ताभावात्। न च सर्वथा शब्दाप्रतिपाद्यं ब्रह्म। सत्यज्ञानादिवाक्यानां निर्विषयत्वापातात्, समन्वयसूत्रानुपपत्तेश्च। अतः केनापि शब्देनावाच्यस्यापि लक्षणाङ्गीकार्या इति चेन्न। ब्रह्मणः निर्गुणत्वाङ्गीकारे सत्वस्यैवाभावप्रसङ्गात्। न हि निर्गुणस्य वस्तुनः सत्वं लोके दृष्टम्। अतो निर्गुणश्चेति श्रुतिः सत्वादिगुणाभावपरा। तस्मात् ब्रह्मणः सत्वसिध्यर्थं सगुणत्वमेवाभ्युपेयम्। इति तस्य वाच्यत्वमेवाङ्गीकरणीयम्। न तु सर्वात्मना शब्दावाच्यत्वम्। तादृशपुरुगुणपूर्णः पुरुषो राजप्राप्यो भवति मुक्तौ॥ इत्यादि विस्तरेणालम्॥

॥ इति बृहदारण्यकोपनिषत्सारसङ्ग्रहः॥

## अथ छान्दोग्योपनिषदर्थसंग्रहः

अस्या उपनिषदो हयग्रीवो गुरुर्षिः, क्षीरस्वामी त ऋषिः, शेषशायी देवता ॥

कर्मणा शुद्धान्तःकरणं सुविरक्तं प्रति ब्रह्मस्वरूपं निरूप्यते । तत्रोद्गीथरूपप्रणवैकदेशप्रतिपाद्यस्य सर्ववेदार्थप्रणवप्रतिपाद्यस्य च भगवत उपासनमाहोवाह । ॐमित्येतदक्षरमित्यादिना । ॐमितिनामकमक्षरम् । न क्षीयत इत्यक्षरम्, रतिहेतुत्वाद् रम्, अक्षं च तत् रं च अक्षरम् । उच्चत्वात्–उत्, गीतत्वात्–गीः, सर्वस्थानत्वात्–थः । उच्चासौ गीश्चासौ थश्चेत्युद्गीथः एतादृशगुणवन्तं भगवन्तमुपासीत ॥

संवर्गविद्यां वक्तुमारभ्याख्यायिका अभिधीयते तथा हि । गोदावरीतीरे प्रतिष्ठानपुरे जानश्रुतिः पौत्रायणो विराजमान आस । एकदा राजन्सुखसौधस्थिते सति मृणालचंचवो देवास्तावत् अन्तरिक्षमार्गेण विनिर्गताः सन्तः अन्योन्यमभिजजल्पुः । 'जानश्रुतेः ज्योतिरतिक्रम्य गमने वो दहेत्' इति पाश्चात्यहंसानां वचः श्रुत्वा पुरोहंसैरभिलपितम् । 'सर्वज्ञातव्यवेत्तरि सशकटे रैक्वे एतदुक्तं स्थाने नैतस्मिन् राज्ञि' इति तद्वचः श्रुत्वा हंसरुतज्ञानादरः शयनादुत्तिष्ठन् सारथिमाहूय 'स युग्वा रैक्वस्तूर्णं मृग्यः' इत्यादिदेश । स क्षत्ता बहुधा विमृश्य काश्मीरनगरराजद्वारि शकटाधस्तात् कण्डूयमानं रैक्वं निश्चित्य राज्ञे न्यवेदयत् । स राजा अश्वतरीरथं गोषट्शतं निष्कं च रैक्वाय गुरुदक्षिणात्वेन पुरतो निधाय 'भगवन् मामनुशाधि त्वदुपास्यदेवतामनुशाधि' इति प्रार्थितो मुनिः 'नेष्टं मे सर्वमपि तवैवास्तु' इत्यभाषीत् । तदा राजा अल्पं धनमिति मुनिश्चुकोप, इति मन्वानस्सन् पुनर्गवां सहस्रं निष्कमश्वतरीरथं कन्यां भार्यार्थिनमात्मदुहितरं ग्रामञ्च गुरुदक्षिणात्वेन व्यतरत् । तदा मुनिः 'विरक्तस्य मे सर्वमप्यनिष्टम्, परिचारको वटुरेव मदिष्टः' इत्युवाच । तदा रैक्वं राजा प्रीणयामास । प्रीतेन मुनिना संवर्गविद्योपदिष्टा । आधिदैवं वायुः संवर्ग इति विद्यात् । प्रलयकाले अग्निसूर्यादीन् संवृङ्क्ते संहरतीति संवर्गः । यदा पुरुषः स्वपिति तदा वाक्चक्षुःश्रोत्रमनोऽभिमानिदेवान् संवृङ्क्ते—ग्रस्तव्यापारान् करोति इति द्वौ संवर्गौ । देवेषु वायुरेव, इन्द्रियेषु प्राण एवेति । वायुमाहात्म्यमाख्यायिकया दर्शितम् ॥

अभेदप्रसक्तिनिराकरणपूर्वकं भेदं समर्थयते । तथा हि । श्वेतकेतुः पित्रोद्दालकेनाज्ञप्तो द्वादशवत्सरान् गुरुसन्निधावध्ययनं लब्धस्सन् आगतः । तस्य गर्वपरिहाराय पञ्चविधं भेदं श्रीभगवतः सर्वोत्तमत्वादिकं च पितोपदिदेश सदृष्टान्तम् । तत्र रमाकलत्रस्य प्राधान्यज्ञापनार्थं जगदुत्पादकत्वादिकमभिहितम् जीवेश्वरयोरत्यंतभेदबोधनाय सहायस्यैव भगवतस्तेजोऽन्नादिसमस्तजगन्निमित्तकारणत्वादिरूपं जीवेश्वरसंसाधकमानं महामाहात्म्यमनुवर्णितम् । तत्तु आगममात्रवेद्यम्, न पुनरनुभवसिद्धम्, इत्यतः स्वापे जीवस्य भगवदाश्रयत्वमनुभवारूढं कर्तुं शकुनिसूत्रदृष्टान्तमाह । तच्छ्रुत्वा श्वेतकेतुः जीवानां भगवदाश्रयत्वमनुपपन्नम् । मच्छरीरे मदन्यविषयकोपलब्ध्यभावात् इति यदा अशंकत तदा सञ्जगदे पिता दृष्टान्तमुखेन । तथा समुद्रप्रविष्टाः सर्वा नदीदेवताः समुद्रेऽहं गंगास्मि, अहं यमुनास्मि, अयं समुद्रः, इत्येवं न विदुस्तथा सर्वाः प्रजाः परमेश्वरादुत्पन्ना अपि परमात्मानमाश्रित्यैव विद्यमाना अपि न विदुरिति सूनुमुपदिदेश पिता । ननु ईश्वरः जीवाद्भिन्नोऽस्तु भेदः किं पारमार्थिकः आहोस्वित् अनिर्वचनीयः, इति शंकायां, प्रश्न एव नावकल्पते संदेहमूलत्वात्प्रश्नस्य । संशय एव न युज्यते, कुतः—संशयो हि स्थाणुपुरुषाद्यनेकविशेषसम्बन्धितयानुभूतेनोर्ध्वतादिसाधारणधर्मेणालिङ्गितस्य पुरोवृत्तिवस्तुनोऽवभासे संस्कारोद्बोधद्वारेण प्रागनुभूतस्थाण्वादिविशेषविषयस्मृतौ प्रयोजनानुसन्धाने विशेषजिज्ञासायामन्यतरनिश्चायकप्रमाणमनुसरतोऽपि तदलाभे किमयं स्थाणुस्स्यात्पुरुषो वेति जायते । तथा भेदः अनिर्वचनीयः

उत पारमार्थिकः, इति संशये जननीये अनिर्वचनीयादिस्मृतिरावश्यकी। अनिर्वचनियभेदस्यैवा-प्रसिद्धत्वात् तादृशस्मृतेरेवानुपपत्तेः संशयस्यैवानुदयेन तन्मूलकशङ्कोऽपि न घटते। अतः पारमार्थिक एव भेदोऽङ्गीकार्यः इति। पुत्र, जीवस्य भगवदधीनत्वात् जीवस्य तदभिन्नत्वशंका कार्या। अन्यमपि हेतुमाह। 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति। अस्यार्थः—

सारत्वात्सः, यमनात् ज्ञानरूपात्वाद्वा यः, सर्वस्येष्ट इति एषः, अणीयसा सूक्ष्मेण ज्ञानेन, मीयते विषयीक्रियते, इत्यणिमा। इदं सर्वं जगत्, येनदात्म्यम्—एतदात्मवशम्। ततस्वात्तत् सदानन्दज्ञान-स्वरूपत्वात्सत्यम्। सादनात्सः। पूर्णगुणत्वादात्मा। अतत्त्वमिति तत्त्वमिति च पदच्छेदः। हे पुत्र, तत्त्वं तत्वतः त्वं अतदसि, तस्मादन्यद्वस्त्वसि इत्यर्थः। शंकराचार्यैः 'सम्भूतिं च विनाशं च' इति ईशावास्य-मन्त्रव्याख्यातृभिः सम्भूतिपदस्य कल्पितेनाकारेण संयोज्य 'असम्भूतिम्' इति पदं विभज्यार्थो वर्णितः। अस्मदीयैर्व्याकरणानुसारेण अतत्, इति पदं विभज्यार्थेऽभिहिते आक्षेप्ता मायावादी कथं वा न भवे-देवानां प्रियः। तस्मात् भगवदधीनजीवस्य तदभिन्नत्वं न शङ्कनीयम् इत्युपदिष्टेन तनुजेन 'एवं सति जीवसत्तादिप्रदं अत्रैव शरीरे वर्तमानं कमलाकलत्रं जीवः कुतो नावलोकयति, इति पुनः पृष्टे पिता सञ्जगाद न्यग्रोधफलदृष्टान्तेन इति दिक् ॥

॥ इति छान्दोग्योपनिषत्सारसङ्ग्रहः ॥

## अथ षट्प्रश्नोपनिषदर्थसंग्रहः

इह खलु सम्सारपारावारे निपतितमधिकारिणं जनं जननी तनयमिव परमात्मतत्त्वज्ञानप्लवेनोद्धर्तुं प्रवृत्तेयमाथर्वणी ब्राह्मणोपनिषत्। अस्या उपनिषदो मुख्यतया प्रतिपाद्यो देवो वासुदेवः, प्राणादयस्तु तच्छेषतया, ऋषिः पिप्पलादः, यथायथं छन्दः॥ अत्र 'सुकेशा' इत्यादिकाख्यायिका विद्याप्रशंसया श्रोतॄणां श्रद्धाजननार्था। एवं महद्भिरपि भारद्वाजप्रभृतिभिरियं विद्या संवत्सरब्रह्मचर्यादिनोपगतेति प्रशस्ततमेयम्। अतोस्माभिरपि तादृशैर्भाव्यमित्यवगन्तव्यम्॥

भरद्वाजापत्यं सुकेशाः, शिबेरपत्यं सत्यकामः, सूर्यात्मजो गर्गगोत्रीयः, अश्वलतनयः कौसल्यः, भृगुसूनुर्विदर्भदेशभवः, कत्यसुतः कबन्धी इति ब्रह्मनिष्ठा मुनयः षट् कदाचित् क्वचित्समवेताः परं ब्रह्म वासुदेवमन्वेषमाणा जिज्ञासवस्सन्तः 'अस्मत्प्रश्नानां विपश्चिदपश्चिमः पिप्पलाद एवोत्तरदः, इति निर्णीय समित्पाणयः पिप्पलादमुपसन्नाः। तानागतान् किल पिप्पलादोऽब्रवीत्। 'यूयं यमनियमादि-सम्पन्ना एव। तथापि पुनः सर्वेन्द्रियनिग्रहलक्षणेन तपसा ब्रह्मचर्येण श्रद्धया युक्ताः संवत्सरमेकं नः परिचरन्तः सम्यग्वसथ। ततो यथेष्टं पृच्छथ। वयं प्रतिवक्तुं विज्ञास्यामो यदि वक्ष्यामः सर्वं युष्मभ्यम्, इति। ततस्तदुक्तनियमानुष्ठानानन्तरं तेषां मध्ये कबन्धी कात्यायनः पिप्पलादं पप्रच्छ। 'भगवन् विश्रुत-मेतत् प्रजानां प्रजननम्। न चैतदन्तरा कारणमुपपन्नम् सर्वदापि प्रसङ्गात्। न ह्यचेतनेभ्यः, चेतनानधि-ष्ठितानां तेषां कर्तृत्वादर्शनात्। न च जीवोऽधिष्ठाता, अस्वतन्त्रत्वात्। नापीश्वरः तदनुपलम्भात्। अतः कुतः सर्वाः प्रजा उत्पद्यन्ते इति। पिप्पलादः सञ्जगाद। विरिंचादिपः परमेश्वरः कल्पादावात्मनो देवादि-प्रजावत्त्वमिच्छन् सर्वज्ञोऽपि लोकविडम्बनाय कर्तव्यमन्वालोच्य स्त्रीपुरुषद्वन्द्वमुदपादयत्। रयिं वित्ता-भिमानिनीं भारतीं मुख्यप्राणं चेति। एतदुभयद्वारेण सर्वं ससर्ज। मन्दैरनुपलब्धोऽपि भगवान् कृतिनां चेतसि समुल्लसत्येव। स एव सर्वहेतुरित्यादि ॥ १ ॥

अथ भार्गवो वैदर्भिः पप्रच्छ। 'भगवन् कति देवाः प्रजा विधारयन्ते। मेशः कान् देवान् निमित्तीकृत्य विषयप्रकाशं प्रजानां स्थितिं च करोति। धारणप्रकाशहेतूनां देवानां मध्ये को वरिष्ठः' इति। पिप्पलादोऽवदत्। देवस्तत्तद्देवान्निमित्तीकृत्य प्रजानां स्थितिविषयप्रकाशौ च करोति। एतेषु प्राणस्य वरिष्ठत्वावधारणायाख्यायिकाप्यभिहिता इत्यादि ॥ २ ॥

मुख्यप्राणस्य महतो जन्म भगवतः कथम्। प्राणः केन प्रेरितस्सन् शरीरमाप्नोति। कथं पञ्चधा विभक्तो भवति। केनोत्क्रमते। कथं बाह्यमध्यात्मञ्च धत्ते? इति कौसल्याश्वलायनेन पृष्टे भणितम् पिप्पलादेन।

श्रीहरेरत्युत्तमत्वात् प्राणस्योत्पत्तिस्तस्मादुपपद्यते। तेनैव प्रेरितस्सन् शरीरमाप्नोति। प्राणापानादिरूपेण पञ्चधा भूत्वा स्वदासभूतान् प्राणादीन् सम्राट् स्वदासानिव नियोज्य तेषु स्वयं प्रेरकत्वेन स्थित्वा, पायूपस्थेऽपानम्, चक्षुश्श्रोत्रमुखनासिके प्राणम्, मध्ये समानम्, नाडीषु व्यानम्, ब्रह्मनाड्यामुदानम् संस्थाप्य बाह्यमादित्यादिषुस्थितप्राणादीन्, अध्यात्मं चक्षुरादिषु कृत्वा सर्वकर्माणि कलयति, इति। ३ ॥

अथ सौर्यायणिगार्ग्यः पप्रच्छ। भगवन्, पुरुषे स्वपति सति कानि दैवानि स्वपन्ति। कानि दैवानि स्वस्वकर्माणि कुर्वन्ति। स्वप्ने कतरः स्वप्नस्थपदार्थान् पश्यति। सुषुप्तौ सुखं कस्य। परार्धीनाः सर्वे कस्मिन् सम्प्रतिष्ठिता भवन्ति? इति ॥

तदा समगाद पिप्पलादः। सुप्तिकाले वायुव्यतिरिक्तानां देवानामुपरमः। वायुरेव प्राणादिरूपैः व्यापारं करोति। जीवं ब्रह्म प्रापयति। स्वप्ने मनोमानिदेवव्यतिरिक्तानामुपरमः। तस्माज्जीवस्य मनसा स्वप्नदर्शनं युक्तम्। जीवो यदा भगवन्तं प्रविशति तदा स्वरूपसुखमनुभवति इत्यादि ॥ ४ ॥

मनुष्येषु यः प्रायणपर्यन्तमोङ्कारमुपास्ते स कं लोकमाप्नोति इति शैब्यसत्यकामेन पृष्टे पिप्पलादेन 'ॐकारे मात्रामेकामेवोपास्ते यस्तं ऋग्वेदाभिमानिन्यो देवताः पृथिव्यां द्विजाग्र्यलक्षणमनुष्यशरीरं प्रापयन्ति। द्विमात्रोपासकं यजुर्वेदाभिमानिदेवताः सोमलोकं प्रापयन्ति। तस्मिन्सम्पदमनुभूय पुनरावर्तते सः। त्रिमात्रेणोमित्यनेनाक्षरेणोपासकः सामवेदाभिमानिदेवताभिः सत्याख्यं ब्रह्मलोकमुन्नीयते। तत्र च सकलजीवोत्तमविरिंचोपदेशेनोत्तमोत्तमं वासुदेवमीक्षते। तं प्राप्नोति चेति समवर्णि ॥ ५ ॥

भगवन्, षोडशकलो नाम कश्चित्पुरुषोऽस्तीति सामान्यतो मया श्रुतम्। स पुरुषः कः, क्व चास्ते, का नाम षोडशकलाः, तासामाश्रयः कः, इत्यादि ब्रूहि इति कौसल्यराजपुत्रहिरण्यनाभेन पृष्टोऽहं 'न जाने' इत्यवदम्। अतस्तत्कृतप्रश्नस्योत्तरवाक् का वद इति सुकेशा भारद्वाजो यदा पप्रच्छ तदाभाणि पिप्पलादेन—यस्मिन् पुरुषे वक्ष्यमाणाः प्राणाद्याः प्रतिष्ठिताः, मुक्तास्सत्यो यमाश्रित्य वर्तन्ते स पुरुषः शरीरस्यैवान्तरास्ते। स पुरुषः प्राणं जीवकलाभिमानिनमसृजत्। तं प्राणं निमित्तीकृत्य जीवस्यास्तिक्यनिष्ठाभिमानिनीं भारतीमसृजत्। तथा मनोभिमानिरुद्रादयः, इन्द्रियाभिमानीन्द्रादयः, अन्नाभिमानी सोमः, वीर्याभिमानी वरुणः, तपोभिमानी वह्निः, आकाशदेवता गणेशः, वाय्वभिमानी वायुसुतो मरुत्, ज्योतिरभिमानी पावकात्यग्निपुत्रः, लोकाभिमानी पर्जन्यः मन्त्रदेवता स्वाहा, उदात्मको बुधः, नामात्मकोषा, पृथिव्यात्मा शनिः, कर्मात्मा पुष्करः, इत्युद्भूता एते षोडशकला देवाः। तेषां पुरुषो भगवानाश्रयः। मुक्तिकाले तमेव स्वनामरूपापरित्यागेन देवाः प्रविशन्ति। अतस्सर्वैर्मुमुक्षुभिरवश्यमुपास्यो जगज्जन्मादिकर्ता भगवान् श्रीहरिः इति ॥ ६ ॥

॥ इति षट्प्रश्नोपनिषदर्थसङ्ग्रहः ॥

## अथ ईशावास्योपनिषत्सारसंग्रहः

अस्या उपनिषदः स्वायम्भुवमनुः ऋषिः। यज्ञनामा हरिर्देवः। अस्याम् स्वायम्भुवमनुः स्वमनः सम्बोध्य विषयवैराग्यं, सत्कर्मकरणं, तदकरणे प्रत्यवायः, हरेः सर्वकर्तृत्वाधिकारं निरूप्य यज्ञनामकभगवतः स्तुत्या भगवज्ज्ञानं मोक्षसाधनमिति व्युत्पाद्य न तावन्मात्रं मोक्षसाधनं किं त्वन्यथाज्ञाननिराकरणसहितं अन्यथा विशिष्टमोक्षानुपपत्तेः, इत्युक्त्वा, प्राप्तपरोक्षज्ञानिनोऽपि भगवत्प्रार्थनां विना अपरोक्षज्ञाना-भावादवश्यं प्रार्थनीयो भगवान् इत्यभिप्रेत्य सूर्यान्तर्गतभगवत्प्रार्थनाप्रकारं समभिधाय ततः प्रणवप्रतिपाद्य-भगवदुपास्तिमुक्त्वा प्राप्तपरोक्षज्ञानस्यापि ईश्वरप्रसादेनैव मोक्ष इत्यभिप्रायेण मोक्षार्थं भगवतः प्रार्थना-प्रकारमाहान्तिमेन मन्त्रेण इति ॥

॥ इति ईशावास्योपनिषत्सारसङ्ग्रहः ॥

## अथ तळवकारोपनिषदर्थसंग्रहः

केन प्रेरितमिन्द्रियाद्यभिमानिदेवताजातं स्वकार्यं करोतीति रुद्रेण पृष्टो ब्रह्मा 'भगवानेवेन्द्रियादि-प्रेरकः। तेन ते ज्ञाताः। तैः स एव न ज्ञातः। तं साकल्येन जानातीति यो वेद सोऽज्ञः। तं साकल्येन न जानामीति यो वेद स ज्ञानी' इत्युवाच। ततः ब्रह्मस्थितजयस्य स्वकर्तृकत्वं मन्यमानान् इन्द्राद्यभिमानिनो देवान् सम्यग्ज्ञापयितुकामो भगवान् यक्षरूपी सन् अग्निना वायुना च अज्ञातस्सन् इन्द्रे आगते स्वय-माकाशे जगाम। उमा तदुपदेशं चकार। भ्रान्तिग्रस्त्वादज्ञात्वा उत्तमाः। तत इन्द्र उत्तमः प्रथमं ज्ञातत्वात्। तत अध्यात्मं इत्याख्यायिकामुक्त्वा अधिदैवं क्षीरसमुद्रस्थं कपिलनामकमुपास्यरूपमुक्त्वा अनिरुद्धाख्यं मनोनियामकं तद्वननामकमुक्त्वा सप्रतिष्ठां सायतनां ब्रह्मविद्यामभिधाय तद्वेत्तुर्मोक्षाख्यं फलं चाह ॥

अस्या उपनिषदो विरिञ्चिशिवसंवादरूपत्वात्तावत्र ऋषी ज्ञेयौ। देवता तु ब्रह्मशब्दोदितो विष्णुः। छन्दस्तु अक्षरपरिगणनया त्रिष्टुभादि यथायोग्यम्। आनन्त्युमापतिर्विशेषज्ञानार्थं वा, ज्ञातस्य दार्ढ्यार्थं वा, लोकानुग्रहार्थं वा सर्वेन्द्रियप्रेरकं पृच्छति ब्रह्माणम् ॥

॥ इति तळवकारोपनिषदर्थसङ्ग्रहः ॥

## अथ काठकोपनिषत्सारसंग्रहः

अस्याः काठकोपनिषदो यमदेवो ऋषिः, वामनाख्यो हरिर्देवता, यथासम्भवं छन्दः। ब्रह्मविद्यां वक्तुं श्रोतुः श्रद्धाजननायाख्यायिकामाह वेदपुरुषः ॥

वाजश्रवसेनोद्दालकेन ब्राह्मणेभ्यः सर्वस्वे दत्ते सति तन्मध्येऽप्रयोजकगोदानेऽपि कृते सति तत्पुत्रो नचिकेताः तादृशगोदानादनर्थज्ञानी मां दत्वापि एतादृशगावो न दातव्या इत्युक्तवान्। ततः कोपात्तं पिता शशाप किमिति—यमगृहं गच्छेति। तेन शप्तः पुत्रस्तद्गृहं गतः। तत्र यमो नासीत्, अन्यलोकं गत्वा स्थितोऽभूत्। यमभार्यया क्रमामतिथिपूजां यजमानाभावात् गृहाणेत्युक्तो दिनत्रयमुपवासेन स्थितवान्। ततो यम आगत्य तं संपूज्य 'हे ब्रह्मन्, भवान् अभुक्तानः सन् मे गृहे दिनत्रयं वासमकार्षीत् तस्य प्रतीकाराय त्रीन् वरान् वृणीष्वे'त्युवाच। तदा प्रथमं पितृसौमनस्यं वरं याचितवान्। स वरो दत्तश्च यमेन। स्वर्ग्याग्निस्वरूपज्ञानलक्षणं द्वितीयं वरं ययाचे। तदनु स्वर्ग्याग्निस्थभगवत्स्वरूपमुक्तवान्।

ततस्तदनुवादसंन्तुष्टो यमः पुनरग्निस्वरूपं इष्टकादेवतास्वरूपमुक्त्वा स्वर्णमयीं कण्ठमालां च वितीर्य तत्सम्बन्धादग्नेर्नाचिकेतसाग्निरिति प्रसिद्धिर्भूयादित्युक्त्वा तृतीयं वरं याचयेत्युक्ते मुक्तनियामकभगवत्स्वरूपे पृष्टे इदं मया वक्तुं न शक्यते । एतत्प्रतिनिधित्वेन शतायुषः पुत्रपौत्रान् ददामि बहून् पशून्, हस्तिहिरण्याश्वान्, अतिविस्तीर्णभूखण्डं, चिरजीविकां च ददामीति परीक्षार्थमुक्ते यमेन तत्सर्वं तवैवास्तु इदमेव मे ब्रूहीत्युक्त्या सन्तुष्टः तत्प्रशंसनपूर्वकं स्वस्यापीयं विद्या भगवदनुग्रहेण प्राप्ता, इत्येतद्वचनपूर्वकं तत्फलप्रतिपादनपूर्वकं च मुक्तनियामकभगवत्स्वरूपमादरादाह यमः समग्रोपनिषदा ॥

॥ इति काठकोपनिषत्सारसङ्ग्रहः ॥

## अथ माण्डूकोपनिषदर्थसंग्रहः

अस्या उपनिषदो मण्डूकरूपी वरुणऋषिः, चतूरूपी हरिर्देवता, अक्षरगणनया छन्दो ह्येदम् । मुमुक्षोरधिकारिणोऽखिलक्लेशनिवृत्तिविशिष्टपरमानन्दावाप्तये समस्तव्यस्तप्रणवप्रतिपाद्यभगवदुपासनां वक्तुं प्रवृत्तेयमुपनिषत् । आदौ समस्तप्रणवप्रतिपाद्यमक्षरं ब्रह्म, इत्याह । ओतं जगदस्मिन्निति व्युत्पत्त्या ओमित्युक्तं यद्ब्रह्म एतदक्षरमुच्यते । तदनु प्रणवैकदेशैरकारोकारमकारनादैः प्रतिपाद्यानां विश्वादिभगवद्रूपाणां उपासनमुत्तरत्र वक्तुं तानि रूपाण्याह । चक्षुस्स्थानो बाह्यार्थप्रज्ञापकः, 'चत्वारो हस्ताः द्वौ पादौ गजमुखत्वाद्गजहस्त एकः' इति सप्ताङ्गः । 'मध्यममुखं गजमुखाकारं, पार्श्वद्वये तु नव नव मुखानि पुरुषमुखाकाराणीति' एकोनविंशतिमुखः । शुभभोगभुक्, सर्वज्ञानविषयः, नाशरहितः, विश्वरूपी हरिः । आत्मनः प्रथमं रूपमेतत् इत्यर्थः ॥

कंठस्थः वासनामयपदार्थप्रज्ञाजनकः सप्तांग एकोनविंशतिमुखः तैजसः । द्वितीयं रूपमित्यर्थः । हृत्कर्णिकाग्रस्थ, वैश्वानरतैजसाभ्यां संश्लेषविश्लेषरूपैकीभावं प्राप्तः सुषुप्तिवेलायां जीवस्वरूपाज्ञानोपलक्षितकालविषयकज्ञानजनकः पूर्णानन्दः ज्ञानरूपसर्वावयवः प्राज्ञनामकः तृतियं रूपमित्यर्थः ॥

स्वाप्नार्थानां जाग्रदर्थानां च अप्रदर्शकं, बाह्याभ्यन्तररूपार्थप्रज्ञाजनकत्वशून्यम्, मुक्तानां स्वस्वयोग्यसर्वज्ञानप्रदानरूपव्यापारकर्तृ, निर्दुःखसुखस्वरूपं, मिथ्याध्यवसायनिर्वर्तकत्वादिगुणविशिष्टं, आत्मनः चतुर्थं रूपमित्यर्थः । तुरीयनामको विष्णुः द्वादशान्ते व्यवस्थितः । चतूरूप आत्मा अवश्यं ज्ञातव्यः । इति प्रतिपादितम् । तेषां रूपाणां अकारादिप्रणवांशप्रतिपाद्यत्वमभिहितम् । तथा हि–अकारो विश्वः । उकारस्तैजसः । मकारः प्राज्ञः । नादबोध्यस्तुरीयः । अ इत्याक्रियमाणो विश्वः स्वात्मोपासकं विश्वं स्वात्मानं प्रापयति । उकारश्च तैजसम्, मकारश्च प्राज्ञम् प्रापयति इति दिक् । संसारभयं तितीर्षुणा ॐकारो भगवान् सर्वथा ध्येयः । ॐमित्याक्रियमाणं सर्वनियामकं ईश्वरं मत्वा मुक्तो भवति । एवं समस्तव्यस्तप्रणवाभिधेयभगवदुपासना अभिहिता ॥

॥ इति माण्डूकोपनिषत्सारसङ्ग्रहः ॥

## अथाथर्वणोपनिषत्

अस्या उपनिषदो ब्रह्मा अथर्वा अङ्गिरनामको मुनिः, सत्यवहः, अङ्गिराश्चेति क्रमादृषयः ॥

शौनकः पप्रच्छाङ्गिरसम्। कस्मिन्विज्ञाते सर्वं विज्ञातं भवतीति। तस्मै सहोवाच। ऋग्वेद-यजुर्वेदसामवेदाथर्ववेदशिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषनामिका विद्या अमुख्यार्थबोधकत्वोपाधिना अपरेत्युच्यते, अक्षरज्ञप्तिहेतुत्वोपाधिना परेत्युच्यते। इत्युक्त्वा अक्षरमहिमानमभिधाय तस्य जगत्संहार-कारणत्वादिकमभिदधे। तथा सत्यविषयत्वेन कृतकर्मणामक्षयफलमभिधाय तदविषयत्वेन कृतकर्मणा-मनिष्टफलमप्युच्यते। ॐ प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः, इति सूत्रोक्तदिशा काम्यकर्म तत्फलादौ वैराग्य-जननद्वारा ब्रह्मज्ञानसम्पादनेच्छाजननेन ब्रह्मज्ञानार्थं भवत्परमपुरुषार्थहेतुर्भवतीति तद्बोधकऋगादिविद्या-प्यल्पास्थिरफलादिबोधनेन तत्राधिकारिणो वैराग्यजननद्वारा नित्यानल्पफलकब्रह्मज्ञानकामोत्पादनेन ब्रह्मज्ञानोपयोगिनीति परविद्या च भवतीति प्रतिपादयति। विष्णुलोकेतरान् काम्यकर्मोपार्जितान् असारानित्यतया विचार्य ब्राह्मणनरूपब्रह्मज्ञानयोग्यः काम्यकर्मणि तत्फले च वैराग्यं प्राप्नुयात्। मोक्षः कर्मणा नास्ति। तस्मात्स च मोक्षादितरत्र निर्विण्णः मोक्षफलकब्रह्मज्ञानार्थं गुरुमेवाभिगच्छेत् छन्दोऽ-ध्येतारं भगवद्भक्तम्। तदनु तत्त्वमुपदिशति इत्यभिहितम्। 'एकमेवाद्वितीयं, नेह नानास्ति किंचन' इति श्रुतिभ्यां 'ॐ प्रतिषेधाच्च' इति सूत्राच्च धर्मधर्मिणोर्भेदो भगवति न मन्तव्य इत्याह। ब्रह्म जीवाभिन्नं नेति च प्रतिपादितम्। तथा हि सदा वियोगरहितौ जीवेशौ देहाख्यमेकमश्वत्थवृक्षं परिषस्वजाते। सुपर्णयोर्मध्ये जीवः अश्वत्थफलरूपं देहजनितं कर्मफलमस्वाद्वेव स्वादुवदत्ति। अन्यः ईश्वरोऽनश्नन् जीवाद्यं कर्मफलम् अभितः प्रकाशते इत्यादिना ब्रह्मजीवभेदः साधु समर्थ्यते। ज्ञान-प्रसादादेव श्रीहरिं पश्यन्ति नान्यैः साधनैरिति प्रतिपाद्यते। यस्य जीवस्य सम्सारे नियामकतया स्थिताः ताः कलादेवता एव तज्जीवमुक्त्यवसरे मुक्तास्सत्यः मुक्तस्यापि तस्य नियामकाः। आपगाः समुद्रं प्राप्य स्वकीयं गंगागोदावर्यादिनाम गंगादिरूपं च अत्यक्त्वा यथा अदर्शनं गच्छन्ति तथा ब्रह्मज्ञानी नामरूप-युक्त एव सर्वोत्तमं भगवन्तं प्राप्नोति इत्यादयो बहवो विषयाः प्रतिपादिताः ॥

|| इत्याथर्वणोपनिषत्सारसङ्ग्रहः ||

## उपसंहारः

॥ किंचिदवहिताः स्त ॥

केचित् श्रुतीः द्वेधा विभजन्ति कर्मकाण्डज्ञानकाण्डभेदेन। यागादीन् तत्फलानि च बोधयन्ती कर्मकाण्डाभिधा। ब्रह्मविद्यां मोक्षमार्गं च प्रतिपादयन्ती ज्ञानकाण्डाभिधेति॥ श्रीमदाचार्यैरेतन्निराकृत्य सर्वासां श्रुतीनां विष्णुप्रतिपादकत्वसाम्यं समर्थितम्। कर्मकाण्डे यागादीनां तत्फलानां च बोधकानां श्रुतीना मपि भगवन्माहात्म्यप्रतिपादकत्वं वरीवर्तते। श्रुतीनां अर्थत्रयं। अतः कृत्स्नश्रुतिषु भगवान् विष्णुरेव प्रति-पाद्यते। अतः पुरुषार्थमुख्यसाधनब्रह्मज्ञानं उपदिशन्तीः उपनिषदः अधिकारी विशेषतोऽभ्यसेत् इति स्कान्दे च अभिहितम्। किं च संहिता एव श्रुतयः। ब्राह्मणोपनिषदश्च न श्रुत्यन्तर्गताः। पौरुषेया एव इति आर्यसमाजप्रतिष्ठापनाचार्याणां, दयानन्दसरस्वतीनाम्नामाशयस्य मूलं न लभ्यते। श्रीवेदव्यासदेवः उपनिषदर्थनिर्णायकब्रह्मसूत्ररचनायां प्रवृत्तः उपनिषदः कथमिति मनुतेस्म। तत्सूत्राणां वेदान्तसूत्राणीति

नाम च कथम्। शंकराचार्यप्रभृतयोऽपि उपनिषदः श्रुत्यन्तर्गता एवेत्यजीगणन्। सर्वसम्मतविषये तेषां विरुद्धप्रचारकरणे न पश्यामो हेतुम्। आस्तां तत्। अद्वैतिभिः महावाक्यत्वेन परिगणितानि, 'अहं ब्रह्मास्मि, तत्त्वमसि, सोऽहमस्मि, सर्वं खल्विदं ब्रह्म' इत्यादीनि उपनिषत्स्वेव उपलभ्यन्ते। न संहितासु। यदि वेदस्य मुख्यतात्पर्यं अद्वैते तर्हि श्रुतेः सर्वभागेषु किंचित्किंचिदप्यद्वैतं प्रतिपाद्येत। न हि तथा। किं च पाश्चात्यानामाशयोऽपि ब्रह्मसूत्रेषु अद्वैतवादो न प्रतिपादित इत्येव। (Dr G. Thibart) महाशयेन शंकरसूत्रभाष्यपरिवर्तनप्रस्तावनायां शंकराचार्याणां भाष्यं समुचित-रीत्या ब्रह्मसूत्रार्थं न बोधयति इति प्रतिपादितम्॥

सर्वा अप्युपनिषदः ब्रह्मज्ञानोपदेशाय प्रवृत्ता अपि ब्रह्मणो गुणानां धर्माणां च पृथक् पृथक् बोधने एकैकस्या उपनिषदः मुख्योद्देशः इति प्रतिभाति। तथा हि, (मुख्यप्रयोजनम्) ईशावास्योपनिषदि मुख्यतः परमात्मा निखिलजगद्व्यापी, सर्वान्तर्यामी, सर्वजगत्प्रवर्तकः, सर्वसृष्टिसम्हारकर्ता, सर्वज्ञः, इति प्रतिपादितम्। तळवकारे च—परमात्मा अस्मदिन्द्रियादिषु स्थित्वा सर्वकर्माणि कारयित्वा इन्द्रियादीनां तदभिमानिदेवतानां च शक्तिप्रदस्सन् आस्ते इति॥ काठके, श्रीहरिः सांसारिकाणां मुक्तानां च जीवानां नियामकस्सन् तैः स्तुत्यस्सन् सर्वदा तेभ्योऽभिन्नस्सन् वर्तते इति॥ माण्डूके, ओँकारप्रतिपाद्यः परमात्मा रूपचतुष्टयेन जीवस्य चतुरवस्थासु प्रेरको रक्षकश्च सन् राराजते इत्यादि॥ एकैकस्यामुपनिषदि एकैको विशेषः प्रतिपादितः। ईशावास्य प्रथममन्त्रे विरक्तेन यदृच्छालाभसन्तुष्टेन भाव्यमित्यभिहितम्। काठके च यमेन ब्रह्मज्ञानोपदेशात्प्राक् नाचिकेतसो वैराग्यं पर्यैक्षत। एतेन ब्रह्मज्ञानेच्छूनां वैराग्यमादावावश्यकमिति ज्ञायते। एवञ्च सर्वासामुपनिषदां मुख्यतात्पर्यं तु परमात्मा सकलकल्याणगुणपूर्णः अशेषदोषवर्जितः सर्वतन्त्रस्वतन्त्रः सर्वज्ञः सर्वशक्तः ज्ञानानन्दस्वरूपः सर्वेभ्योऽपि भिन्नः मुक्तैरपि पूज्यः असमाभ्यधिकः जीवोत्तमवायुना संसेव्यः इत्यादि। एतादृशभगवतो जीवस्य च अभेदसाधकानि निरवकाशप्रमाणानि न सन्त्येव। ईशावास्ये, 'योसावसौ पुरुषस्सोऽहमस्मि', काठके, 'यथोदके शुद्धे शुद्धमासिक्तं तादृगेव भवति', आथर्वणे, 'परेऽव्यये सर्व एकीभवन्ति, ब्रह्मैव भवति', छान्दोग्ये, 'तत्त्वमसि' इत्यादीनि कानिचित् वाक्यानि उपनिषत्सु आपाततः अद्वैतपरतया प्रतीयन्ते। द्वा सुपर्णा सयुजा, निरंजनः परमं साम्यमुपैति इत्यादीनि भूरिवाक्यानि घण्टाघोषं भेदमुद्गिरन्ति। एतद्वाक्यानां अभेदपरतया वर्णनमशक्यमिति पूर्वापरविरोधपरिहारार्थं पूर्वोक्तवाक्यानामेव भेदपरतयैवार्थो वर्णनीयः। अतः सर्वोपनिषदां भेद एव तात्पर्यमिति निर्णीयते। तस्मात् एतं संसारपारावारं सुखं लङ्घितुकामैः 'दासोऽहम्' इत्येवोपासना कर्तव्या। न 'सोऽह' मिति श्रीमदानन्दतीर्थभगवत्पादाचार्याणां परमाभिमतः पन्थाः इति दिक्॥

॥ इति शम्॥

मन्दमतिना मया श्रीपादपुत्राणां विद्वच्छिरोमणीनामनुज्ञानुसारेण परिक्लृप्तकाले नियमितपत्रेषु च लिखिते एतद्वाक्यसमूहे कृतिनो गुणानल्पानपि परिगृह्णन्ति इति विश्वस्य अभ्यर्थयिता

अर्चक राघवेन्द्राचार्यः,

मन्त्रालयः.

# अथ श्रिमत्साधनदीपिका

श्रि॥ विद्वच्चक्रचूडामणि, दोड्डबल्लापुरं, गोविन्दकृष्णाचार्याः



॥ श्रीगुरुभ्यो नमः हरिः ॐ ॥

पद्मालयापतिं वन्दे भविष्यत्पद्मजं तथा । टीकार्यं व्यासराजादिटिप्पण्याचार्यसन्ततिम् ॥ १ ॥

नत्वा मन्त्रालयाचार्यं निखिलापन्निवारकं । मद्गुरूंश्च यथाशक्ति कुर्वे साधनदीपिकाम् ॥ २ ॥

तत्रादौ सर्वाधिकारिप्रार्थनीयमोक्षसाधनभूतेषु ज्ञानभक्तिवैराग्येषु ज्ञानस्वरूपं निरूप्यते । परापरतत्त्वविषयकमनोवृत्तिविशेष एव ज्ञानम् ॥ तच्च परोक्षापरोक्षज्ञानभेदेन द्विविधम् । तत्र परोक्षज्ञानं अपरोक्षज्ञानकारणं भवति । शास्त्रावमर्शध्यानधारणातत्त्वनिश्चयमननश्रवणादिभेदेनानेकविधं परोक्षज्ञानं। अयमत्र विवेकः । अपरोक्षज्ञानसाधनभूता उपासना द्विविधा । शास्त्रावमर्शध्यानभेदात् ॥ शास्त्रावमर्शपदेन तत्त्वनिश्चयानन्तरं वैष्णवशास्त्रस्य मन्त्रोपनिषद्भारतादेर्ब्रह्मसूत्रन्यायैः स्वयमेवादरनैरन्तर्याभ्यामभीक्ष्णं भगवदुत्कर्षपर्यवसायितयावधारणं । ध्यानशब्देन समाधिर्विवक्षितः । यथोक्तमनुव्याख्याने—

'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी । ध्यानरूपा परा चैव तदङ्गं धारणादिकं ॥' इति ॥ सुधायां च—ध्यानसमाध्योरनतिभिन्नत्वाद्ध्यानशब्देन समाधिर्गृह्यत इति । अभ्यासपाटवादनायासेन प्राप्तं ध्यानं समाधिरित्युच्यते । अप्रयत्नात्समाधिस्तु दर्शनं चिरयानयेति तन्त्रसारोक्तेः । अत्र द्वयोरुपासनयोरधिकारिभेदेनापरोक्षज्ञानहेतुत्वं बोध्यम् । अखण्डस्मृतिलक्षणध्यानादेस्तु परम्परया अपरोक्षहेतुत्वम् । तथा हि । श्रवणदर्शनजनितवासनामयवस्तुनो मनसावलोकनं हि स्मृतिः । सा च द्विविधा। खण्डस्मृतिरखण्डस्मृतिश्चेति ॥ तत्राद्या एकैकावयवस्मृतिरूपा धारणेत्युच्यते । तदुक्तं द्वितीयस्कन्धे—'एकैकशोऽङ्गानि धियानुभावयेत्पादादियावद्धसितं गदाभृत' इत्यादिना । द्वितीया समग्रावयवस्मृतिरूपा प्रयत्नसदसद्भावाभ्यां ध्यानसमाधिभेदेन द्विविधा भवति । तत्र ध्यानं समाधिहेतुः । ध्यानं प्रति एकैकावयवस्मृतिरूपधारणा कारणं । ध्यानस्य षडङ्गानि । यमनियमासनप्राणायामप्रत्याहारधारणा इति। चत्वार्यङ्गानि तस्य चेति तन्त्रसारे चतुर्णामङ्गानामुक्तावपि चशब्देनानुक्तसमुच्चायकेन धारणप्रत्याहारयोर्ग्रहणात् ॥ एवं च शास्त्रावमर्शध्यानयोरपरोक्षज्ञानसाधनत्वे स्थिते तयोः पूर्वं तत्त्वनिश्चय आवश्यकः॥ ध्यानं विश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनमिति तन्त्रसारोक्तेः । तत्त्वनिश्चयस्तु संशयविपर्ययनिरासकेन युक्त्यनुसन्धानात्मकमननेन विना नोपपद्यत इति मननमावश्यकम् । तत्र युक्तायुक्तसंशयवत एवाधिकारात्तादृशसंशयार्थं वाक्यार्थग्रहणलक्षणश्रवणस्याप्यावश्यकतेति ॥

नन्वेवं शास्त्रावमर्शरूपोपासनायाः साक्षादपरोक्षहेतुत्वे उपासनापादीयतत्त्वप्रकाशिकाविरोधः । तत्रोपासना द्विविधा । समस्तशास्त्राभ्यासरूपा यामाहुः श्रवणमनने इति ध्यानरूपा चेति ॥ तत्राद्याया ध्यानाङ्गत्वात्सैव प्रथमाधिकरणे विधीयत इत्युक्त्या ध्यानाङ्गत्वस्य श्रवणमननरूपत्वस्य च प्रतीतिरिति चेन्न । अथवा सततं शास्त्रविमर्शेन भविष्यतीति तन्त्रसारवाक्यानुरोधेन मननसाध्यतत्त्वनिश्चयानन्तर-

भाविशास्त्रावमर्शस्य साक्षादपरोक्षसाधनत्वौचित्यात्। तत्त्वप्रकाशिकावाक्यस्य समस्तसच्छास्त्रश्रवणमननाभ्यां दूरोत्सारिताज्ञानसंशयविपर्ययस्यैव ध्यानाधिकारित्वादित्युत्तरवाक्यानुरोधेन तत्त्वनिश्चयपूर्वभाव्यज्ञानसंशयविपर्ययनिरासकश्रवणमननरूपशास्त्रावमर्शस्य तत्त्वनिश्चयद्वारा ध्यानाङ्गत्वाभिप्रायकत्वात्॥ उक्तञ्च सुधायां—शास्त्राभ्यासस्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वञ्चास्ति। ब्रह्मसाक्षात्कारहेतुत्वाच्चित्तवृत्तिनिरोधत्वाच्चेति। अथैवमपि उक्तद्विविधोपासनस्यापरोक्षं प्रति साक्षाद्धेतुत्वे दर्शनसाधनं चानुग्रह इति भगवत्प्रसादस्यापरोक्षसाधनत्वोक्तिपरसुधाविरोध इति चेन्मैवम्। अधिकारिसम्बन्धिसाधनेषु उपासनस्यैव साक्षादपरोक्षहेतुतया विवक्षितत्वेन प्रसादस्येश्वरसम्बधितया विरोधाभावात्। ननु श्रवणमनननिदिध्यासनानां ज्ञानरूपत्वमेव कथमिति चेत्। इत्थं। श्रवणं शब्दजं ज्ञानमुपपत्त्यनुचिंतनं। मतिर्निरन्तरा चिंता निदिध्यासनमुच्यत इत्यादि न्यायामृतोक्तरीत्या आपातदर्शनभिन्नं कृतिसाध्यत्वेन विधानार्हं प्रतिवाक्यमयमस्य वाक्यार्थ इति सिद्धार्थोक्तिरूपेण गुरूपदेशेनानेकशाखास्थवाक्यार्थग्रहणमात्रं श्रवणं। तच्चाज्ञानमात्रविरोधि। न तु मननमिव संशयादिविरोधि। मननरूपन्यायावतारानङ्गसंशयधर्मिज्ञानरूपत्वात्। मननं तु अयमेव वाक्यार्थो युक्तः नान्य इति निर्णयहेतुयुक्त्यनुसन्धानं। तच्च संशयादिविरोधि। निरन्तरं ध्यानं निदिध्यासनं तच्चापरोक्षज्ञप्तिसाधनं॥ इत्थं च कथं न ज्ञतिरूपता। एतच्च तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेवेत्यादिना भाष्ये स्पष्टम्।

नन्वेवं श्रवणादेर्ज्ञानत्वे विध्यनर्हत्वेन श्रोतव्यो मन्तव्य इत्यादिना कथं तद्विधानमिति चेत्, अनुपपत्तिरेषा परमत एव। नास्मन्मते॥ उक्तञ्च न्यायामृते, श्रुत्यादेर्धीस्वरूपत्वाद्विध्यनर्हत्वतो धियां। परपक्षे नैव युक्तः श्रवणादिविधिः क्वचित् इति॥ सूक्ष्मशास्त्रार्थबुद्धेश्च कृतिसाध्यत्वदर्शनात्। ज्ञानस्वरूपमपि च श्रवणादि विधीयते॥ इति च निपुणतरमुपपादितमेतन्न्यायामृते॥ तस्मात्परोक्षज्ञानस्योक्तविधयानेकरूपत्वं युक्तम्। यत्तु तारतम्यविशिष्टोत्कर्षपर्यन्तअभेदसत्यत्वादिज्ञानं सच्छास्त्रश्रवणादितः पूर्वतनं किंचित् तज्जन्मान्तरसंस्कारवशात्सत्संगत्या वा जातमधिकारिविशेषणतयोपयुक्तं॥ न तु तावतैव निर्वाहः। अयस्शकलारोपितस्यैवाग्नेः रोगदाहकत्वाच्छ्रवणादिसंस्कारसंस्कृतस्यैव ज्ञानस्यापरोक्षद्वारा बन्धनिवर्तकत्वात्। अपरोक्षज्ञानं तु स्वयोग्यबिंबापरोक्षज्ञानं बिंबेतररूपापरोक्षज्ञानं चेति द्विविधम् तत्राद्यं बाह्यस्वरूपभेदेन द्विविधम्। तत्र बाह्यं हृदयगतबिंबापरोक्षज्ञानं। स्वरूपं तु स्वरूपचक्षुषा स्वरूपहृदयगतापरोक्षज्ञानं॥ तत्र स्वयोग्यबिंबेतररूपापरोक्षस्य न मोक्षसाधनत्वं। किं तु तस्य कारणान्तरसहकारेणस्वर्गादिलोकप्रापकत्वमेव। तथा हि। स्थूलदेहप्राप्तिमारभ्य नियतगुरूपदेशपर्यन्तं अनुष्ठित योग्येतररूपापरोक्षसहितसत्कर्माद्युद्भूतावमप्रसादात्स्वर्गलोकप्राप्तिः॥ उक्तञ्च भाष्ये, कर्मणात्वधमः प्रोक्तः प्रसादः......प्रसादात्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तित इति॥ नियतगुरूपदेशानन्तरं योग्यापरोक्षपर्यन्तमनुष्ठितयोग्येतररूपापरोक्षसहितश्रवणादिजन्यमध्यमप्रसादान्महरादिलोकप्राप्तिः। यथोक्तम्। प्रसादः श्रवणादिभिः। मध्यमाज्जनलोकादिरिति। सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादिति च॥ उक्तञ्च तत्त्वप्रकाशिकाराघवेन्द्रतीर्थीये, स्वयोग्येतररूपापरोक्षसहिताच्छ्रवणादि जन्यमध्यमप्रसादान्महरादिलोकं प्राप्नुवन्तीति॥ एकादशतात्पर्येऽपि ज्ञानेन ब्रह्मलोकस्स्यान्महाज्ञानाद्धरेर्गतिः पादयोगान्महर्लोको जनोलोकस्तु योगतः॥ तपसस्तु तपोलोक इति॥ पादयोगयोगतपोज्ञानमहाज्ञानानि क्रमेण महर्जनस्तपस्सत्यलोकहरिलोक(अमुक्तस्थान)प्राप्तिसाधनानि। तल्लक्षणन्तु, मात्राचतुर्भागकालीनसामान्यभगवद्रूपापरोक्षयुक्ताखंडितध्यानं पादयोगः। मात्राकालीनसामान्यापरोक्षयुक्ताखण्डितध्यानं योगः। षण्मात्राकालीनसामान्यापरोक्षयुक्तपरोक्षज्ञानं तपः। सामान्यरूपस्य मुहूर्तापरोक्षेणसहितं परोक्षज्ञानं ज्ञानं। मुहूर्ताधिकापरोक्षसहितं परोक्षज्ञानं महाज्ञानमिति॥ तदुक्तमेकादशतात्पर्ये—निरंशो भगवद्रूपस्यापरोक्षेणदर्शन

इत्यादिना । स्वयोग्यबिंबापरोक्षज्ञानादेव सर्वेषामधिकारिणां मोक्षः ॥ तदुक्तम् भाष्ये ॥ न सामान्यदर्शनमात्रेण मुक्तिरिति । दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केनचिदिति च ॥ तट्टीकायामपि । न भगवद्रूपाणां साम्येन सामान्यतो दर्शनेन मुक्तिः । किं नाम स्वबिंबदर्शनादेवेति ॥ एतादृशापरोक्षज्ञानोत्तरभाविश्रवणादिकं मुक्तावानन्दोद्राहकारणं भवति । नन्वत्र यदुक्तम् ध्यानादेः परोक्षज्ञानस्यापरोक्षहेतुत्वमिति ॥ तदयुक्तम् । ध्यानादेर्वासनामयवस्तुविषयकत्वेनापरोक्षज्ञानस्य तदन्यज्ञानानन्दात्मकब्रह्मविषयकत्वेन भिन्नविषयकत्वादिति चेत्सत्यम् । पश्यन्ति परमं ब्रह्म चिंतयेत्प्रतिबिंबितम् । ब्रह्मैव प्रतिबिंबे यदतस्तेषां फलप्रदं॥ तदुपासनञ्च भवति प्रतिमोपासनं यथेति वचनानुरोधेन प्रतिबिंबस्यान्यत्वेऽपि तत्रत्यबिंबमादाय ब्रह्मविषयत्वं फलप्रदत्वमेकविषयत्वं च युज्यत इति ।

॥ इति ज्ञाननिरूपणम् ॥

## अथ भक्तिनिरूपणम्

एवं ज्ञानस्वरूपं निरूप्य भक्तिस्वरूपं निरूप्यते ॥ माहात्म्यज्ञानपूर्वकस्नेहो भक्तिः ॥ उक्तञ्च तत्त्वप्रकाशिकायां । महात्म्यज्ञानपूर्वकस्नेहो हि भक्तिः ॥ न हि माहात्म्यानुक्तौ तदज्ञानं भवति स्नेहोवेत्यादि ॥ तन्त्रसारेऽपि परमस्नेहसंयुक्ता यथार्थज्ञानतो भवेत् । सा भक्तिरिति विज्ञेयेति ॥ अत्र स्नेहो भक्तिरित्येवोक्ते पुत्रादावपि स्नेहसद्भावाद्भक्तिव्यवहारः स्यादित्यतो माहात्म्यज्ञानपूर्वकत्वविशेषणं ॥ माहात्म्यज्ञानं भक्तिरित्येवोक्ते जरासन्धदुर्योधनादेर्भीमे माहात्म्यज्ञानसत्वेन भक्तिस्स्यादित्यतः स्नेह इति विशेष्यम् ॥ एषा भक्तिर्द्विविधा । अपरोक्षात्पूर्वभाविनी तदनन्तरभाविनी चेति ॥ तत्राद्या अध्ययनाङ्गभक्तिः ब्रह्मविद्याधिकारिविशेषणभूतभक्तिः दृढभक्तिरिति त्रिविधा । अपरोक्षज्ञानानन्तरभाविपरमभक्तिविषये प्रमाणन्तु । अपरोक्षज्ञानिनोऽपि स्वयोग्यपरमानन्दहेतुपरमकाष्ठापन्नभक्तयभावे तत्साध्यमोचकप्रसादस्याभावेनेति न्यायामृतवाक्यम् ॥ मोचकेश्वरप्रसादस्तद्भक्त्येकसाध्यः । भक्त्यैव तुष्टिमभ्येति विष्णुर्नान्येन केनचिदिति वचनात् । परमेश्वरभक्तिर्नाम निरवधिकानन्तानवद्यकल्याणगुणत्वज्ञानपूर्वकस्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकोंतरायसहस्रेणाप्यप्रतिबद्धनिरन्तरप्रेमप्रवाहः । यमधिकृत्य यत्र नान्यत्पश्यति, सा निशा पश्यतोमुनेरित्यादिश्रुतिस्मृतयः । न चासौ तत्साक्षात्कारमन्तरेणोपपद्यत इति सुधावाक्यञ्च । निरवधिकाः प्रत्येकमनवधिका अनन्ता निस्सङ्ख्याः कालादितोपरिच्छिन्ना वा अनवद्या दोषास्पृष्टाः कल्याणाः शुभा तमाः एतादृशगुणा यस्य हरेः तस्य भावस्तत्वं तदज्ञानपूर्वकत्वमाद्यं प्रेमप्रवाहविशेषणं । स्वात्मनि स्वात्मीयसमस्तवस्तुषु च यः स्नेहस्ततोऽनन्तगुणाधिक इति द्वितीयम् । अन्तरायसहस्रेणाप्रतिबद्धत्वादेव निरन्तरोऽविच्छिन्न इति तृतीयम् ॥ अत्र तृतीयविशेषणमात्रनिवेशे वाय्वादेः भारत्यादौ तथाविधप्रेमप्रवाहस्य सत्वेऽपि न भक्तिरित्यतो द्वितीयविशेषणम् ॥ तथापि रुद्रादीनां जगद्गुरौ वायुदेवे तथाविधप्रेमप्रवाहसत्वेऽपि तस्य न परमभक्तित्वमित्यत आद्यं विशेषणम् । एतादृशप्रेमप्रवाहस्यासम्भावितत्वशंकायां तादृशप्रेमप्रवाहकार्यप्रतिपादिका यत्र नान्यं पश्यतीति श्रुतिः, सा निशा पश्यतो मुनेरिति गीतास्मृतिश्चोदाहृता, न चासावित्यनेनापरोक्षज्ञानानन्तरभावित्वमुच्यत इति ज्ञेयम् । ब्रह्मविद्याधिकारिविशेषणभूत भक्तिविषयेऽध्ययनाङ्गभक्तिविषये च प्रमाणं । विष्णुभक्तिरपि ब्रह्मविद्यायामधिकार इति श्रुत्याहेति ॥ अध्ययनलब्धापि भक्तिरन्यायाध्ययननिवृत्त्यर्थं पृथगुक्तेति च तत्त्वप्रकाशिकावाक्यम् , यस्य देवे परा भक्तिः । विष्णुपादैकसंश्रयः । भक्तिमान्परमेविष्णावित्यादि भाष्यञ्च । उक्तञ्चाभिनवचन्द्रिकायां । अध्ययनेन लब्धा अध्ययनाङ्गमिति यावत् । या तु भक्तिर्विष्णुपादैकसंश्रय इत्यनेनोक्ता साधिकार एव न तु तदध्ययनविशेषणमिति ॥

दृढभक्तिविषये तु यद्दार्ढ्यार्थं वैराग्यं निरूपितमिति तत्त्वप्रकाशिकावाक्यम् ॥ वैराग्यतो भक्तिदार्ढ्यं दार्ढ्यं भक्तेरवाप्य च ॥ यतेतोपासनायेत्यनुव्याख्यानवाक्यम् । प्रागेव भक्तेर्भाव्यत्वाद्दार्ढ्यमित्युक्तं । भक्तिदार्ढ्येन चोपासा भवेदिति सुधावाक्यञ्च प्रमाणम् । एषा तु वैराग्याज्जायते । किं च हरिभक्तिवद्गुरुदेवभक्तिरपि भाव्या । सा च यथायोग्या । न पुनर्भगवद्भक्तिवत्सर्वोत्कृष्टा । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति श्रुतेः । एतदर्थस्तु, यस्याधिकारिणः देवे हरौ परा सर्वोत्कृष्टा भक्तिः । देवे देवेषु ब्रह्मादिषु यथा योग्यतानुसारेण गुरावपि तथा योग्यतानुसारेणैव भक्तिः । तस्याधिकारिण एतेऽर्थाः प्रकाशन्त इति ॥

॥ इति भक्तिनिरूपणम् ॥

## अथ वैराग्यनिरूपणम्

एतावता भक्तिस्वरूपं निरूपितमिदानीं तु वैराग्यं निरूप्यते । वैराग्यं नाम इहामुत्रफलभोगविरागः । अनित्यत्वासारत्वादिसाम्यादैहिके पारत्रिके च विराग आवश्यकः । फलभोगः फलानुभवः । तत्र रागराहित्यं विराग इत्युच्यते । एतादृशवैराग्यं त्रिविधम् । अल्पाधिकाधिकतरभेदात् । अल्पवैराग्यं अधिकारिविशेषणभूतम् । अधिकवैराग्यं भक्तिदार्ढ्यादेरङ्गम् । अधिकतरवैराग्यन्त्वपरोक्षानन्तरभावि ॥ तत्राद्यद्वये मानम् । आब्रह्मस्तम्बपर्यन्तमसारञ्चाप्यनित्यकं । विज्ञाय ज्ञातवैराग्यः, परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायादित्यादि भाष्यं, वैराग्यतो भक्तिदार्ढ्यमित्यनुव्याख्यानम्, मीमांसासाध्याद्वैराग्यादिति सुधा, मीमांसासाध्यादिति सारासारवस्तुज्ञानाधीनो ह्यसारे वस्तुनि विरागः । स च तदन्तरेत्यादिप्रथमपादप्रकृतमननापरनामकमीमांसासाध्य इत्येवमुक्तम् । मीमांसातः प्राक्तनविरागस्तु श्रद्धामात्रसिद्धो न भक्ति दार्ढ्यहेतुरिति भाव इति परिमलवाक्यञ्च बोध्यम् । अपरोक्षानन्तरभाविवैराग्ये तु—इत्यच्युतांघ्रिं भजतोऽनुवृत्त्या भक्तिर्विरक्तिर्भगवत्प्रबोधः । भवन्ति वै भागवतस्य राजन् ततः परां शान्तिमुपैति साक्षात् ॥ इत्येकादशस्कन्धोक्तिर्मानं ॥ व्याख्यातश्चायं श्लोकस्तट्टीकायां । प्रीत्या भजतोऽन्वनन्तरं भगवत्प्रबोधः भगवदपरोक्षज्ञानमनन्तरं पूर्वस्मादधिका संसारविरक्तिः अनन्तरं अधिका भक्तिरित्येतानि साधनानि भागवतस्य भवन्ति इति ॥ अत एव गीताभाष्ये, तव ज्ञानिनो न फलकामकर्तव्यता किम्वान्येषामित्यनेनापरोक्षज्ञानिनोऽपि वैराग्यमावश्यकमित्युच्यते । यथोक्तम् प्रमेयदीपिकायां, कुतोऽपि फलकामो ज्ञानिनो नात्यन्तबाधकः । तत्प्रतिबन्धनीयस्य ज्ञानस्याप्तत्वात् मोक्षस्य च नियतत्वात् । तथापि मोक्षविलम्बहेतुत्वात्तस्यापि न कर्तव्यः । किम्वन्येषां ज्ञानिनामिति । यद्यप्यत्र वैराग्यादौ न व्यक्तिभेदः । तथापि तत्तत्कारणायत्तविशेषवत्वमाश्रित्यावान्तरप्रभेदोक्तिरित्यदोषः । एतेन श्रवणादिसाध्यस्य वैराग्यादेरधिकारिविशेषणतया श्रवणादिसाधनत्वेऽन्योन्याश्रयः स्यादिति चोद्यम् निरस्तम् । उक्तञ्च सुधायां—सात्विकप्रकृतेः सत्सङ्गवशादीषद्वैराग्यादिमतः श्रवणेन तदभिवृद्धौ कृतमननादेर्भूयः तदभिवृद्धिरिति ॥

॥ इति वैराग्यनिरूपणम् ॥

एवं निरूपितानां ज्ञानभक्तिवैराग्याणां त्रयाणामप्यावश्यकतैव । भाष्ये आब्रह्मस्तम्बपर्यन्तमित्यादिना वैराग्यस्योत्तमाधिकारिलक्षणत्वेनोक्तावपि उत्तरोक्ताप्राचुर्येणासाङ्कर्यादिति टीकारीत्या सर्वेषां सर्वाधिकारिसाधारण्यस्याभिप्रेतत्वात् ॥ उक्तञ्च चन्द्रिकायां—

समानाधिकरणानां वेदाध्ययनशमादिविष्णुपादैकसंश्रयत्वादीनां मध्ये दस्य शमादिविष्णुपादैकसंश्रयत्वादिकेऽप्रचुरे अध्ययनन्तु प्रचुरं सोधम इत्यादि। किं च वैराग्यभक्ती विना केवलोपासनया अपरोक्षज्ञानं नोत्पद्यते॥ यथोक्तम् सुधायां, दर्शनसाधनञ्चानुग्रहः स्वयोग्यगुणोपेतस्य भगवद्विग्रहविशेषस्यादरनैरन्तर्याभ्यां विषयवैराग्यतद्भक्तिसहिताद्बहुकालोपचिताद्दिध्यासनापरनामकाच्चिन्तनादृते न लभ्यत इति॥ न ह्यन्यत्र रागवतस्तत्र भक्तिरहितस्यादरनैरन्तर्याभ्यामनुचिन्तनमुत्पद्यत इति च॥ अपरोक्षानन्तरमपि पूर्वोक्तपरमभक्तिसम्पत्तिं निरीक्ष्यैवात्यर्थप्रसादो भवतीति भक्तेः प्राधान्यम्। किं च ज्ञानं भक्तिभाग एव। भक्त्यंशकं यतो ज्ञानं ज्ञानस्नेहात्मिका च सेत्यैकादशतात्पर्योक्तेः॥ वैराग्यन्तु भक्तरङ्गम्। न हि वैराग्याभावे दृढभक्तिस्सम्भवति। यथोक्तम् सुधायाम्—आदौ वैराग्यम् साध्यम्। तेन भक्तिः। न हि हेये रागवत उपादेये प्रेमोत्पत्तिरस्ति दृश्यते तावदिति नेत्यसौ दृढः प्रेमा। अत एवोक्तं भक्तिदार्ढ्यमितीति। नात्यात्यन्तिकवैराग्याभावे स्वात्मात्मीयसकलस्नेहाधिकगुणत्वविशेषितपरमभक्तिसंभवः॥ किं चोपासनमपि वैराग्याभावे न युज्यते। वैराग्यस्य तदङ्गत्वात्। अत एव तन्त्रसारे अहिंसासत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ यमा इत्यत्रापरिग्रहशब्दितवैराग्यस्याङ्गत्वमन्तर्भाव उक्तः॥ तस्माद्वैराग्यं भक्तिर्ज्ञानञ्चेति त्रयमप्यपरिहार्यमधिकारिणां। प्राधान्यं च त्रिषु भक्तेरेव। उक्तञ्च तन्त्रसारे—परमस्नेहसंयुक्ता यथार्थज्ञानतोभवेत्। सा भक्तिरिति विज्ञेया साधनं भोगमोक्षयोः॥ मुख्यमेषैव नान्यस्स्यात्सर्वं व्यर्थं तया विना। सैका ह्यभीष्टफलदा मोक्षो दर्शनयुक्तया दर्शनञ्च तया हीनं व्यर्थमन्यत्किमुच्यते। योग्यन्तु दर्शनं नैव तया हीनं भविष्यति इति॥ अत्र छलारिटिप्पणी। अपरोक्षज्ञानस्य निदिध्यासनाऽमुख्यं साधनं। मुख्यन्तु श्रीहरिभक्तिरेवेति भावेनाह परमेति॥ सुदृढस्नेहयुतयथार्थमाहात्म्यज्ञानादित्यर्थः। भगवद्दर्शनमित्यनुवर्तते। न केवलं दर्शनस्यैव मुख्यसाधनं भक्तिः। किं तु तत्साध्यमोक्षस्य तद्गतानन्दस्यापीत्याह साधनमिति॥ एषैव भक्तिरेव भोगमोक्षयोर्मुख्यं साधनमित्यन्वयः। मुख्यत्वमेव व्यतिरेकेणान्वयेन विवृणोति, नान्यदिति॥ भक्तेरन्यन्मुख्यं साधनं न। तद्विवृणोति सर्वमिति। तया भक्त्या विना भक्त्यभाव इति यावत्। सर्वं कर्मादिकं व्यर्थं निष्फलं भवेदिति शेषः। सा भक्तिरेकाह्यभीष्टफलदा स्यात्। भक्तेर्मुख्यसाधनत्वं यदुदितं तत्केवलायाः किमित्यतो नेति भावेनाह, मोक्ष इति। अपरोक्षज्ञानयुक्तया भक्त्या मोक्षो भवेदित्यर्थः। भक्तियुक्तदर्शनस्यैव मोक्षसाधनत्वं न केवलस्येत्याह, दर्शनञ्चेति। तया भक्त्या हीनं दर्शनं चापरोक्षज्ञानमपि द्वेषिणामवतारापरोक्षदर्शनमिव व्यर्थमन्यत्कर्मादिकं व्यर्थमिति किं वक्तव्यमित्यर्थः॥ ननु भक्त्यभावेऽपरोक्षज्ञानमेव नोत्पद्यते। तत्कथमुच्यते, दर्शनं तया हीनं व्यर्थमिति। तत्राह योग्यमिति। तया भक्त्या हीनं चेद्योग्ययावद्भक्त्यभाव इति यावत्। योग्यं दर्शनं योग्यापरोक्षज्ञानं नैव भविष्यतीत्यर्थः। तथा च सामान्यदर्शनं स्वयोग्ययावद्भक्त्यभावे अपि सम्भवतीति भावः॥ यद्वावतारदर्शनमिव योग्यदर्शनमपि तया भक्त्या विना भवति किं। नेत्याह, योग्यन्त्वितीति॥

अत्र निदिध्यासनव्यतिरेकेण भक्तिमात्रेणापरोक्ष इति नाभिप्रायः। किं तु तस्याप्रधानसाधनत्वं भक्तेः प्रधानसाधनत्वमिति। न ह्येककार्यनिरूपितकारणतापन्नानामेकस्याप्राधान्योक्तिरन्यस्याकारणत्वमाक्षिपति। अन्यथा पूर्वोक्तसुधाविरोधः इत्थञ्चेतरसाधनकदम्बस्य यदभावे वैयर्थ्यं, यत्सत्वे च सार्थक्यं तस्या भक्तेरेव प्राधान्यमिति स्थितं। यथोक्तम् सूत्रभाष्ये—प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यत इति। उक्तञ्च बृहद्भाष्ये, ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः। तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम्॥ द्वादश्यादिव्रतञ्चैव तुलस्यादेरथार्चनं। सर्वं भक्त्यर्थमुद्दिष्टं निष्फलं तत्तया विना॥ विष्णुभक्तियुतो मुक्तिं याति नान्यः कथञ्चनेति। गीताभाष्येऽपि। आधियज्ञानार्थं भक्त्यभ्यास इति। तट्टीकायाञ्च

यो मद्भक्त इति भक्तिः पुनःपुनरुच्यते। तत्प्रयोजनमाह, आधिक्येति। अद्वेष्टेत्यादिनोक्तेषु सर्वधर्मेषु भक्तेरिति शेष इति॥ ज्ञानवैराग्ययोर्मध्ये ज्ञानस्यैव प्राधान्यम्। उक्तञ्च गीताभाष्ये, सर्वाधिकं ध्यानमुदाहरन्ति ध्यानाधिके ज्ञानभक्तीपरात्मन् कर्माफलाकाङ्क्षमथो विरागस्त्यागश्च न ज्ञानकलाफलार्हश्चेति च काषायणशाखायामिति। श्रेयो हि ज्ञानमभ्यासाद्ज्ञानाद्ध्यानं विशिष्यते। ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरमित्यत्र गीतायां कर्मफलत्यागस्य ध्यानाधिक्यप्रतीतावपि न तत्र तात्पर्यम्। किं तु त्यागस्य प्रशस्तत्वे। यथोक्तम् गीताभाष्ये, ध्यानात्कर्मफलत्याग इति तु स्तुतिरिति॥ तट्टीकायाञ्च, त्यागस्य प्रशस्तत्वमेवानेन लक्ष्यते, न प्रतीतार्थतात्पर्यमित्यर्थ इति॥ त्यागो हि ध्यानज्ञाननिवृत्तकर्मानुष्ठानप्राप्तौ कारणत्वेन परीक्ष्य लोकानित्यादावुच्यते। न च फलात्साधनं श्रेय इति च। एवञ्च वैराग्यस्य ज्ञानकारणत्वेन ज्ञानादवरत्वमेव। पूर्वोक्तज्ञानप्रभेदेषु श्रवणमननतत्त्वनिश्चयधारणाध्यानसमाधिशास्त्रावमर्शेषु उत्तरोत्तरप्राधान्यं बोध्यम्। श्रेयो हि ज्ञानमभ्यासादित्यत्राभ्यासपदेन श्रवणमननात्मकतत्त्वनिश्चयपूर्वभाविशास्त्राभ्यासो ग्राह्यः। न तु तत्त्वनिश्चयानन्तरभावि निदिध्यासनावान्तररूपशास्त्राभ्यास इति उम्मर्जीये स्पष्टम् ज्ञानपदेन तत्त्वनिश्चय उच्यत इति सर्वमवदातम्॥

इदानीं ज्ञानादेरावश्यकत्वे भक्तिप्राधान्ये च साधकत्वेन श्रीमद्भागवतवाक्यानि तत्सङ्गतविजयध्वजीयटीकावाक्यानि चोदाह्रियन्ते॥ तथा हि। प्रथमस्कन्धे—

यदनुध्यायिनो युक्ताः कर्मग्रन्थिनिबन्धनम्। छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम्॥ इति श्लोकव्याख्यानावसरेऽतः श्रवणादिफलं अपरोक्षद्वारा मुक्तिरेवेत्युक्तम्। अतो वै कवयो नित्यं भक्तिं परमया मुदा। वासुदेवे भगवति कुर्वत्यात्मप्रसादनीमित्यत्र अतो निश्शेषदुःखनिवृत्त्यलंबुद्धिगोचरसुखानुभवलक्षणमोक्षाख्यपुरुषार्थलाभाद्धिकवयःपरया मुदात्मप्रसादिनीं भक्तिं कुर्वन्तीत्येकान्वय इत्युक्तम्। यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा। अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनमित्यत्र जीवस्यैवंविधानादिबन्धनिवर्तकं ब्रह्मज्ञानमेव। न कर्मादिकमित्यभिप्रेत्याहेति टीका। इत्थं शरत्प्रावृषिकावृतहरेर्विशृण्वतो मेऽनुसवं यशोऽमलं। सङ्कीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिप्रवृत्तात्मरजस्तमोपहेत्यत्र भक्त्युपासनयोरन्योन्यनिमित्तभावोस्तीत्युक्तम्। तत्रैव कर्मणा शुद्धान्तःकरणस्य विषयविरक्तिद्वारा भगवति तीव्रभक्त्या जनितापरोक्षज्ञानेन तापत्रयात्मकः संसारो निवर्तत इत्युक्तम्॥

द्वितीयस्कन्धे॥ तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः। श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयमित्यत्र टीकायां श्रीनारायणश्रवणादिना विना न संसारनिवृत्तिः। तस्माच्छ्रवणादिः कर्तव्यः। श्रवणेनाज्ञानं कीर्तनापरपर्यायमननेन संशयविपर्ययौ निरस्य स्मरणलक्षणध्यानेन ब्रह्मापरोक्षज्ञानं लभत इत्युक्तम्। तं सत्यमानंदनिधिं भजेत सर्वात्मनातोऽन्यत आत्मघात इत्यत्र गुणोपसंहारपूर्वकं भजनापरपर्यायोपासन या अकरणे बाधकमुच्यते। केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्। चतुर्भुजं कंजरथाङ्गशंखगदाधरं धारणया स्मरन्तीत्यत्राधिकारिणां योग्यतातारतम्येनात्मोपासनायोग्यानां तदुपासना विहिता। एकैकशोऽङ्गानि धियेत्यादौ खण्डस्मृतिर्विहिता। न कर्मभिस्तां गतिमाप्नुवन्ति विद्यातपोयोगसमाधिभाजामित्यत्र पादयोगादिप्राप्यत्वं महदादेरभिहितम्। विचक्षणा यच्चरणोपसादनात्सङ्गं व्युदस्योभयतोऽतरात्मन इत्यत्र वैराग्येण दृढीभूतया भक्त्या भगवच्चरणनिषेवणं ब्रह्मज्ञानसाधनं भवतीत्युक्तं टीकायाम्॥

तृतीयस्कन्धे—अत्र मुमुक्षूणां स्वस्वयोग्यभगवत्परोक्षज्ञानोत्पत्तौ प्रधानं भक्तिरेव, तत्साधनमितरत्सर्वमिति प्रपंच्यत इति स्कन्धाभिप्रायवर्णनेन भक्तिप्राधान्यं सूचितम्। पानेन ते देवकथासुधायाः

प्रवृद्धभक्त्या विशदाशया ये। वैराग्यसारं प्रतिलभ्यबोधं यथाञ्जसान्वेयुरकुण्ठधिष्ण्यम्। तथापरे चात्मसमाधियोगबलेन जित्वा प्रकृतिं बलिष्ठाम्। त्वामेव धीराः पुरुषं विशन्ति तेषां श्रमस्यान्न तु सेवया ते॥ इत्यत्र टीकायां एवं विधस्य हरेरपरोक्षज्ञानसाधनोपासना द्विविधा। ध्यानरूपा वेदान्तशास्त्रश्रवणादिलक्षणा च॥ तत्र क्षिप्र प्रवृत्त्यर्थं प्रथमा क्लेशसाध्या। द्वितीया सुखसाध्येत्युक्तम्। अनेनाधिकारिभेदेनोपासनाभेद इत्येतत्सिध्यति। ज्ञानवैराग्ययुक्तेन भक्तियोगेन चात्मना। परिपश्यत्युदासीनां प्रकृतिं च हतौजसमित्यादिना ज्ञानवैराग्ययुक्तभक्तियोगस्य प्राशस्त्यं निरूपितम्। ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः। क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयमित्यत्रापि तस्यैव मुख्यताभिप्रेता। परमात्मज्ञानमेव निर्विचारं मुक्तिसाधनमित्यादिना सप्तविंशाध्यायाभिप्रायो निरूपितः। योगस्य लक्षणं वक्ष्ये सबीजस्य नृपात्मज इति श्लोकस्यावतरणग्रन्थे एवंतावद्विरक्तस्य भगवद्भक्तिसम्पन्नस्य परमात्मोपासनया जनितज्ञानेन स्वरूपाविर्भावलक्षणं कैवल्यं भवतीत्युक्तमित्युक्तम्। विरागो येन पुरुषो भगवन् सर्वतो भवेदित्यत्र न केवलं भक्तियोगमार्गेणालम्। वैराग्याभावे तस्य चंचलत्वसम्भवादतो विरक्तिमताभाव्यमित्युक्तम्। भक्तियोगो बहुविधो मार्गैः भामिनि भाव्यत इत्यत्र पुरुषार्थसाधनेषु भक्तियोगस्य प्राधान्यादित्युक्तम्॥ भक्तियोगश्च योगश्च मया मानिन्युदीरितः। ययोरेकतरेणैव पुरुषः पुरुषं व्रजेदित्यत्रैतद्द्वयमेव पुरुषार्थसाधनं नान्यदिति निर्धारयति। ययोरिति ययोर्ज्ञानभक्त्योरेकतरेणैव ज्ञानयोगेनैव पुरुषः पुरुषं परमात्मानं व्रजेदित्यन्वयः। एकतरोऽलं चेदितरविधानं व्यर्थं स्यात्। एकभावेऽन्यतरस्य नियतत्वात् एकतरेणैवेत्युक्तम्। धूमाग्न्योरिवाविनाभावादिति व्याख्यातम्। तात्पर्यदीपिकायां च ज्ञानभक्त्योः समनियमत्वाभिप्रायेणैकतरेणेत्यवधारणमुक्तम्। न त्वन्यतरव्यावृत्त्यभिप्रायेणेत्यभिहितम्। वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानं यद्ब्रह्मदर्शनमित्यत्र वैराग्यस्य भक्त्यनन्तरभावित्वोक्तावपि न क्षतिः। उक्तं च टीकायां—वैराग्यस्य भक्तेः पूर्वभावित्वेऽपि कार्यकारणभावो न दूषणम्। भक्तिः प्रागुत्पन्नवैराग्यं प्रचिनोतीति॥

चतुर्थस्कन्धे—कृच्छ्रो महानिह भवार्णवमप्लवेशाः षड्वर्गनक्रमसुखेन तितीर्षयन्तीत्यत्र संसारोत्तारहेतुत्वाद्भक्तेरेव सर्वगुणोत्कृष्टत्वमित्यभिप्रेत्याह, कृच्छ्र इति॥ अप्लवेशा भक्तिलक्षणतरीरहिता इति टीकायामुक्तम्। श्रेयसामिह सर्वेषां ज्ञानं निश्श्रेयसं स्मृतमित्यत्र ज्ञानस्यावश्यकतोक्ता॥ पुरंजनोपाख्यानावतरणग्रन्थे च वैराग्यरसानुभावितनिपुणबलभक्तिप्रदीपानुगृहीतापवर्गलक्षणपुरुषार्थसाधनभगवदपरोक्षज्ञानसाधनललनाकटाक्षप्रसन्नगुरुमथनप्रसादपरशुमन्तरेण संसारतरूच्छेदो न स्यादिति तादृशी साधनसामग्री निरूप्यत इत्युक्तम्। वासुदेवे भगवति भक्तियोगः प्रयोजितः। सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यतीत्यत्र यद्यपि भक्तेः पूर्वभावि वैराग्यं तथापि पश्चाद्दृढं कृतवतीत्यतो वैराग्यं ज्ञानञ्च जनयिष्यतीति ज्ञानं द्विविधमित्युक्तम्। द्विविधं परोक्षमपरोक्षञ्चेत्यर्थः॥

पञ्चमस्कन्धे—प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावदित्यत्र बन्धध्वंसि भगवत्प्रसादान्तरङ्गभक्तिं विना न कदाप्यभिमतमुक्तिस्स्यादित्युक्तम्॥ मुक्तेषु वीरुद्भय उत्तमा ये सरीसृपास्तेषु सुबोधनिष्ठा इत्यत्र तारतम्यज्ञानमेव मुक्तिसाधनं नान्यदिति भावेन तदाहेत्युक्तम्। प्रायो वैराग्यसाधनसामग्रीसम्पन्नस्यापि ब्राह्मणशरीरस्य सतः पुरुषस्य ज्ञानान्मुक्तिरित्यभिप्रेत्यास्मिन्नध्याये निरूप्य इत इति नवमाध्यायाभिप्रायो निरूपितः। अस्मिन्नध्याये संसारविरक्तस्य हरौ सुदृढा भक्तिः, तया तदपरोक्षज्ञानं जायत इत्यादिना त्रयोदशाध्यायाभिप्रायो निरूपितः॥

षष्ठस्कन्धे—अजामिलोपाख्याने भक्तिपूर्वकनामसङ्कीर्तनस्य पापनिवर्तकस्य भगवद्ज्ञानद्वारा मुक्तिसाधनत्वोक्त्या भक्तिज्ञानयोरावश्यकता सूचिता। यथोक्तम् तात्पर्ये। अभक्त्योदाहृतं नैव फलदात्

भविष्यति। अजामिलोऽपि स्मरणाद्भक्त्या मृत्योरमुच्यतेत्यादि ॥ मूलेऽपि। भक्तिमान्भगवत्याशु माहात्म्यश्रवणाद्धरेरित्यादि ॥ चित्रकेतुविषयेतिहासोक्त्या च संसारविरक्तिभूयिष्ठतया श्रीनारायणचरणारविंदेभक्तिः कार्येति सूचितम्। दृष्टश्रुताभिर्मात्राभिर्विमुक्तस्स्वेन तेजसा। ज्ञानविज्ञानसंतृप्तो मद्भक्तः पुरुषो भवेदित्यत्र ज्ञानभक्तिवैराग्याणामावश्यकता बोध्यते ॥

सप्तमस्कन्धे—कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मन इत्यत्र भक्तिगर्भकामादीनां भगवत्प्राप्तिसाधनत्वोक्तावपि प्रथमतः कामादियुक्तया भक्त्या हरौ मन आवेश्य पश्चाद्यथाभूतया भक्त्याद्यं हित्वेत्यर्थ इति टीकोक्त्या भक्त्यैव पुरुषार्थः। उक्तश्च तत्रैव। भक्तिमन्तरेण उपायो नास्तीत्यर्थः। चैद्यादयः स्वतो भक्ता असुरावेशाद्द्वेषिण इति। श्रुतेषु सत्सु साधनानां भक्तेरेव प्राधान्यं हरेर्मुख्यप्रसादजनकत्वाद्भक्तिरेव पुरुषेणापाद्येत्यादिकं निरूप्यतेऽस्मिन्नध्याय इति सप्तमाध्यायाभिप्रायो निरूपितः। एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे। वासुदेवे भगवति यया संलभते रतिमित्यत्र यया भक्त्या रतिमुपासनां लभते तया स्वरूपानन्दानुभवलक्षणां रतिं लभत इति परम्परया योज्यं। वैराग्याद्यङ्गोपाङ्गरुचिरभक्तिसुन्दरीसुन्दरावयवसन्निवेशलक्षणपरमपुरुषार्थकारणं यदुत्तरचरितमित्येतन्निदर्शयितुं नरसिंहावतारो निरूप्यतेऽस्मिन्नध्याय इति अष्टमाध्यायाभिप्रायो निरूपितः। नैवोद्विजे भवदुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः। शोचे नु ते विमुखचेतस इन्द्रियार्थमायासुखाय भरमुद्वहतो विमूढानित्यत्र संसारभीरूणां संसारवैतरण्युत्तरणोपायः क इत्याशङ्क्य निरन्तरवेदान्तशास्त्रश्रवणमननादिर्येषामस्ति तेषां तद्भयं नास्ति अन्यथा न कदापि तत उत्तरणमित्याशयेनाहेत्युक्तम्। श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनं ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणेत्यत्र भक्तिचिह्नानां नवविधत्वमुच्यत इति नानुपपत्तिः ॥

अष्टमनवमस्कन्धयोः—भगवन्माहात्म्यवर्णनेन भक्तिरेव विधीयते ॥ यथोक्तम् टीकायां। अत्रापि हरिभक्तिरेव भगवन्मनःकर्षणनिपुणेति विधातुमनन्तोपनिषदर्थभूतस्य हरेर्जगद्रक्षणादिमाहात्म्यं निरूप्यत इति अस्मिन् स्कन्धे राजवंशवर्णनेन श्रीनारायणे भक्तिविधानार्थं भगवन्माहात्म्यमेव प्रपंच्यत इति च ॥

दशमस्कन्धे—श्रीकृष्णमहिमावर्णनेन भगवद्भक्तिरेव विधीयते। किं च श्रुतिगीतादौ सदसदुपासनयोरर्थानर्थहेतुत्वोक्त्या भक्तिपूर्वकोपासनादेः कर्तव्यता ज्ञायते ॥

एकादशस्कन्धे तु—यन्मायया तो बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मेति श्लोके भक्तिज्ञानयोरावश्यकता प्रतीयते। यथोक्तम् टीकायां।...तो गुरौ देवतायां चात्मा मनो यस्य स तथा तस्मात्तद्ज्ञानवान्यथायोग्यं गुरुपरमपुरुषयोर्भक्तिं कुर्वाणो बुधस्तं हरिमाभजेत्सर्वसमर्पणपूर्वकमुपासीतेत्यर्थ इति ॥ यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतोमलानि विधमेद्गुणकर्मजानि। तस्मिन्विशुद्ध उपलभ्यत आत्मतत्वं साक्षाद्यथामलदृशो सवितृप्रकाश इति श्लोकेऽपरोक्षार्थं भक्तेरावश्यकता प्रतीयते। प्रायेण भक्तियोगेन सांख्येन च विनोद्धव। नोपायो विद्यते सध्र्यक् प्रायणं हि सतामहमित्यत्र ज्ञानभक्तिव्यतिरेकेणोपायांतरनिषेधेन तयोरत्यावश्यकता प्रतीयते। अत्र प्रायेणेत्यस्य टीकायामवधारणार्थकत्वमुक्तम्। भगवद्गुणोत्कर्षपूर्विकाभक्तिरेव परमपुरुषार्थान्तरंगमिति इममर्थं समर्थयत इति टीकायां द्वादशाध्यायाभिप्रायः कथितः। न रोधयति मां योगो न सांख्यं धर्म एव च। न स्वाध्यायस्तपस्त्यागो नेष्टापूर्तं च दक्षिणाः ॥ व्रतानि यज्ञाश्छन्दांसि तीर्थानि नियमा यमाः। यथावरुन्धे मत्सङ्गः सर्वदुःखापहो हि मामित्यत्र सङ्गस्तु गुणसम्प्रीतिरित्यादितात्पर्यानुसारेण मयि सङ्गः गुणसम्प्रीतिः भक्तिपूर्विका सर्वपूर्णगुणत्वमतिः यथा

मामवरुन्धद्वशीकरोति तथा न योगादय इति व्याख्यानम्। नन्वत्र भागवते न सांख्यमिति ज्ञानस्य मोक्षकारणत्वाभावोक्तिः कथमिति चेत्सत्यम्। ज्ञात्वापि हरिविद्वेषी तमो याति न संशयः। विशेषरूपस्याज्ञोऽपि गुणवत्त्वेऽतिनिश्चितः। गुणसम्प्रीतिमत्यन्तं तं दृष्ट्वा मुक्तिमेष्यतीति तात्पर्यानुसारेण पारोक्ष्येण भगवद्ज्ञानमपि भगवद्द्वेषिणस्तमःप्रापकमिति भक्त्यभावे परोक्षज्ञानमपि व्यर्थमिति भावेन न सांख्यमित्युक्तम्। भक्तिरहितभगवद्दर्शनमप्यप्रयोजकमेव। उक्तञ्च तात्पर्ये। हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि। न मुच्यतेऽखिलज्ञोऽपि तमो याति च निश्चयात्॥ गुणैरन्यैर्विहीनोऽपि तद्भक्तेष्वपि च क्रमात्। सङ्गवान् सुखभागेव स्याद्गुणैर्मुक्तिमेति वेति एवञ्च भक्त्यभावे ज्ञानस्याप्रयोजकत्वोक्त्या भक्तिसत्त्वे विशेषरूपस्याज्ञोऽपीति ज्ञानन्यूनतायामपि गुणपूर्णत्वनिश्चयसहकृतभक्तिमात्रेण मोक्षोक्त्या च ज्ञानापेक्षया भक्तेरेव प्राधान्यमिति निश्चीयते॥

यन्न योगेन सांख्येन दानव्रततपोऽध्वरैः। व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपीति श्लोकस्य भक्तिरहितं ज्ञानमपि न मत्प्रापकं किमुतान्यत्साधनजालमिति भावेनाहेत्यवतरणग्रंथेनाप्ययमर्थो बोध्यते। भगवत्साक्षात्काराय सर्वस्मादुत्तमसाधनं भक्तिरेव। तद्भता चेत्थं ध्येयो हरिरिति द्वयमस्मिन्नध्याये विधत्त इति चतुर्दशाध्यायाभिप्रायकथनपरटीकावाक्येनापि भक्तेः प्राधान्यं प्रतीमः। भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः। इत्यत्राखिलसाधनोत्तमो भक्तियोग उदाहृत इति टीका। भक्त्याहमेकया ग्राह्यः श्रद्धयात्मप्रियस्सतां। भक्तिः पुनाति मन्निष्ठा सकाममपि सम्भवादित्यत्र भक्तिप्रधानधर्मादीनां अपरोक्षसाधनत्ववद्भक्तेरपि तत्सहिताया एव तत्साधनत्वमत्राहेति टीका। धर्मस्सत्यदयोपेतो विद्या वा तपसान्विता। मद्भक्त्यपेतमात्मानं न सम्यक् प्रपुनाति हि॥ इति श्लोके स्पष्टं भक्तेः सकलसाधननायकत्वं। तस्मान्मनो वचो प्राणान्नियम्त्वेन्मत्परायणः। मद्भक्तियुक्तया बुध्या ततः परिसमाप्यत इति श्लोको मत्सर्वोत्तमत्वज्ञानमेव मुक्तिसाधनं भवतीत्येव तात्पर्यं व्याख्यातः॥ परिसमाप्यते संसार इति शेषः॥ भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरं। सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति स इति श्लोकस्य मत्प्राप्तौ भक्तिरेव प्रयोजिकेत्याहेत्यवतारिका दत्ता। ज्ञानवैराग्यसम्पन्नो विरक्तः समुपैति मामित्यत्र ज्ञानवैराग्ययोरावश्यकता बोध्यते। हरेः प्रसादजनकं ज्ञानमेव तस्य भक्तिस्तस्या यमादयः कृष्णो ब्रह्मेति यच्च ज्ञानं तत्सर्वमस्मिन्नध्याये निरूप्यत इति एकोनविंशाध्यायाभिप्रायो निरूपितः। ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मामित्यत्र ज्ञानावश्यकता प्रतीयते। ज्ञानविज्ञानसहितं ज्ञात्वा स्वात्मानमुद्धव। ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावित इति श्लोको यतः सर्वश्रेयःप्राप्तौ ज्ञानस्योत्तमसाधनत्वमतस्त्वयापीदमेव सम्पादनीयमित्याहेत्यवतार्य व्याख्यातः। कर्मणां फलरूपत्वादाविरिञ्चादमङ्गलं। विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवदिति श्लोके वैराग्यप्रकारो निरूपितः। भक्तियोगः पुरैवोक्तो प्रीयमाणाय तेऽनघेति श्लोकस्य विरक्तो मयि भक्तिं कुर्यादिति भावेनाहेत्यवतारिकया वैराग्यस्य भक्तिदार्ढ्याङ्गत्वं ज्ञायते। योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचिदित्यत्र ज्ञानयोगिनां भक्तिकर्मणोरभावः, कर्मयोगिनां ज्ञानभक्त्यभावः, भक्तियोगिनां ज्ञानकर्मणोरभाव इति भाति। तादृशान्यथा प्रतीतिनिरासाय तात्पर्याचार्यैरुक्तं सर्वेषां सर्वयोगैश्च प्राप्या मुक्तिर्न संशयः। तथापि तु विशेषेण स तेषामभिधीयत इत्यादि। उक्तञ्च विजयध्वजीये—ज्ञानादिगुणानां त्रिषु सत्वेऽपि सामान्यविशेषविवक्षया विभागो युज्यत इति। त्रिविधयोगिष्वपि वैराग्यमस्त्येव। ईषद्वैराग्यमल्पन्तु पूर्वं देवेषु जायते। पश्चाद्विरागोऽभ्यधिको देवानां नात्र संशयः। ज्ञानाधिक्यन्तु देवानां भक्त्याधिक्यं तथैव च। विरागोऽभ्यधिकस्तेषां सदैव सनकादिनामिति तात्पर्योक्त्या वैराग्यस्य योगित्रयगतत्वप्रतीतेः। तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यात्प्रायश्श्रेयो भवेदिहेत्यत्र टीकायां, नन्वेवं तर्हि ज्ञानवैराग्याभ्यां

किं च प्रमाणपद्धतितत्त्वसंख्यानादिप्रकरणस्थैः तदेवंभूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्य शमादिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत्साक्षात्कारे सत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्तिविशिष्टस्वरूपानन्दाविर्भावलक्षणा मुक्तिर्भवतीति। मुमुक्षुणा खलु परमात्मा जगदुदयादिनिमित्तत्वेनावश्यमवगन्तव्यः । यथैतत्परतन्त्रन्तु सर्वमेव हरेः सदा । वशमित्येव जानाति सम्सारान्मुच्यते हि सः ॥ इह हि विविधसांसारिकदुःखदर्शनेन विरक्तस्य, न चाविदितस्वरूपः शक्यः साक्षात्कर्तुम् । विष्णुभक्तिर्हि सर्वेषां सद्गुणानां स्वलक्षणम् । प्रीतिश्च गुणोत्कर्षज्ञानादेव विशेषतो दृष्टेत्यादिवाक्यैर्ज्ञानादेरावश्यकत्वं बोध्यते । अपि च तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् । नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ । ओमित्येतदक्षरमुद्गीथमुपासीत । नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः । न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वः । ब्रह्मविदाप्नोति परं यो वेद निहितं गुहायां । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते । तमेवं विदित्वातिमृत्युमेति । भक्तिरेवैनं मोचयति । आत्मा वारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । तद्विजिज्ञासस्व तद्ब्रह्म यस्तं न वेद किमृचा करिष्यति । अन्यच्छ्रेयोऽन्यदुतैव प्रेयः तयोः श्रेय आददानस्य साधु भवति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति । नाविरतो दुश्चरितान्नाशान्तो नासमाहितः नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात् । विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं ॥ उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधतेत्यादिश्रुतिभिर्ज्ञानभक्तिवैराग्यानि सर्वैरधिकारिभिः सम्पाद्यानीति ज्ञायते । तदेतदुक्तम्

सूत्रकारैः—ॐ विद्यैव तु निर्धारणात् ॐ, ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ, ॐ अनुबन्धादिभ्यः ॐ इत्यादिसूत्रेषु । तत्र विद्यैवेत्यत्र कर्मादेर्मुक्तिसाधनत्वं निषिध्य ब्रह्मज्ञानस्य मुक्तिहेतुत्वमुच्यते । अम्बुवदित्यत्र मोक्षस्य भक्तिसाध्यत्वमनुबन्धादिभ्य इत्यत्र भगवद्दर्शनस्य भक्तिसाध्यत्वमिति विवेकः । भक्तिदार्ढ्यापादकत्वाद्वैराग्यमप्यवश्यं संपाद्यमिति प्रागेवावेदितम् । तदेवं श्रुतिसूत्रपुराणादिभिर्ज्ञानभक्तिवैराग्यानि मोक्षसाधनानि, तेष्वपि भक्तिरेव प्रधानं साधनमिति सिद्धम् ॥

श्री वेंकटार्यशिष्येण कृता साधनदीपिका । कृष्णेन विदुषा भूयात्प्रीत्यै माधवमध्वयोः ॥

इति श्रीमदांदोळिकोपाह्व वेंकटाचार्य शिष्येण गोविंदकृष्णाचार्येण रचिता
साधनदीपिका समाप्ता ॥

ग्रन्थोयं जगद्गुरु श्रीमन्मध्वाचार्य मुख्यसंस्थान श्री राघवेंद्रमठाधीश श्रीमत्सुधर्मेंद्रतीर्थ गुर्वंतर्गत
भारतीरमण मुख्यप्राणांतर्गत श्री मूलरामार्पितो विजयतां
॥ श्री कृष्णार्पणमस्तु ॥



# SRI RAGHAVENDRA CHARITAM

(*By V. Raghavendra Rao, M.A., B.T., University of Mysore*)

## PART—I

Sri Madhvacharya, the propounder of Dwaita philosophy, was born in the village of Pajaka, near Udipi, in S.K. about 1200 A.D. His father, Madhyageha Bhatta, (Middle house pandit) was well known for his learning and his spiritual life. His mother was known as Vedavathi. Before Madhva was born the holy pair had two male children both of whome died young. Then the Bhatta and his wife sent up earnest prayers to heaven, and in response God sent His favourite son. The boy was named Vasudeva and the usual ceremonies of *Chaula* and *Upanayana* were celebrated for the gifted son of Madhyageha Bhat in due course, the boy came to study under Achyuta preksha Acharya, also called purushothama Tirtha. Possessed with spiritual power as he was, the boy showed early his preference for sanyasa and thus came in to conflict with his father. An agreement was reached that Vasudeva should postpone his asceticism until the birth of a younger brother to him, and he became Sanyasin probably in his 15th year. Henceforth he was known as Purnapragna or Ananda Tirtha or Madhva Acharya.

Purnapragna was of a reflective type of mind and could not accept the Advaitic interpretation of the Badarayana Sutras as given by his Guru and had decided views of his own about them. Now that he was appointed as the successor of the Achyuta Preksha Acharya, he could expound his views with authority. As the head of a Mutt and as the exponent of a system of thought or a ways of life, Sri Ananda Tirtha started on a tour of South India and visited Travancore, Rameswaram, Srirangam, Srimushnam etc. It was in the first place, Sri Ananda Tirtha had his bout with Sri Vidya Sankara who lived from 1228 A.D. to 1333 A.D. (1)

After resting awhile at Udipi, the Acharya started on a pilgrimage to the hermitage of Sri Veda Vyas at Badari (In Badari, he learnt from

the sage the correct views on his own Sutras) and returned to his country through Vanga and Kalinga. In Kalinga he met a redoubtable champion of Advaita, in Sobhana Bhatta and won him over. This could not go unchallenged. The great minister of the King, Sami Sastri, alias Narasimha Mahabhattopadhyaya, took up the challenge; he was also untimately converted to the views of the Acharya and became a Sanyasi, giving up all his wealth and power. (2)

One day our Acharya was sitting on the sea shore of Udipi, saying his prayers. He saw a ship in distress and his unbounded mercy overflowed. He brought the ship safe to the shore by his own spiritual powers. The grateful captain begged of his benefactor to accept something in return and Ananda Tirtha, Chose a clod of earth (Gopichandana) of Dwaraka for his share. He, the Acharya, broke open the earth and found in it the priceless image of Sri Krishna, who was soon installed in Udipi. For the regular pooja of Sri Krishna, he instituted the eight Mutts with Sanyasins as the worshippers of the Lord.

Some time after, the King of Orissa, Ananga Bhima died and the people sought for their old and trusty prime minister, Narasimha, now known as Narahari Tirtha. Unwilling to leave the Guru beloved, he was commanded by the master to accept the office of the prime minister just to secure the two priceless images of Sri Rama and Sita lying uncared for in the treasuary of the Orissa King. Narahari Tirtha acted as regent of Orissa for twelve years and as minister later on.

Meanwhile Madhvacharya undertook a second pilgrimage to Badri (Badari). After a hearty talk with his guru, he returned home by the west coast. Our Acharya took his abode at Vishnu Mangalam and here he finished almost all his commentaries.

In Vishnumangalam another event took place; his meeting with Padma Tirtha, a redoubtable Advaita scholar. Madhvavijaya says that on being defeated by the Acharya, he stole away all the valuable books of his opponent, but he was caught by the local chieftain Jayasimharaja and the library was restored to the Acharya. It was

here also the Kurukshetra, eighteen days war of words, took place between Sri Madvacharya and Trivikrama Pandita, great Advaita scholar who was forced to become an admirer and disciple of Sri Purna Pragna. Soon Ananda Tirtha admitted to Sanyasa Ashrama his younger brother, who became known as Sri Vishnu Tirtha.

Then Narahari Tirtha Came from Orissa with the images of Sri Rama and Sita and offered them to his Guru. The Acharya worshipped them for just 80 days at Udipi; and suddenly disappeared from sight of his disciples, while he was expounding the Aitareya Bhashya. This event is said to have taken place in the year Pingala. As Sanyasi, he lived for 80 years.

Opinions vary regarding the date Sri Madhvacharya. The Acharya himself says that he was born about 1199 or 1200 A.D. (3) Then his final exit to Badari must be about 1294 A.D. Messrs C. M. Padmanabhachar and Salem Subba Rao and C. R. Krishna Rao believe that Acharya lived between 1238 and 1316 (4). H. Krishna Sastri, Government Epigraphist support them (5). The third view as given by the venerable Asthana Vidvan Madhura Srinivasa Acharya, is that the Acharya was born in 1205 A.D. and disappeared in 1293 (6). The only contemporary direct epigraphical reference to the Acharya comes from Kadur District, inscribed on a big boulder lying by the river, near Kalasa (Ec. VI, Mg. 89, p. 293). The editor has tentatively fixed the date as 1240 A.D. (7). For a proper chronology of Sri Madhvacharya, Narahari Tirtha's inscription form our sheet anchor. It is accepted on all hands that the Acharya's exit coincided with the return of Sri Narahari Tirtha after his regency of Orissa. Sri Narahari Tirtha's inscriptions in Kalinga range from 1264 A.D. to 1294 A.D., a period of thirty years (8).

The departure of Sri Madhvacharya from Udipi must coincide with the termination of Sri Narahari Tirtha's connection with Kalinga, which must be placed about the year 1294 A.D., as it is known that in 1294 A.D. Sri Narahari Tirtha was still on Orissa. According to Mahabharatha Tatparya Nirnaya, the Acharya was born in 1198 A.D. This will give him about 95 years of activity in South India; whereas the tradition gives him only 79 and odd years. The period of 79 years

must be taken as the period of his ministry as a Sanyasin, and not from the time of his birth. He must have assumed the yellow robe in his 15th year, i.e. about the year 1215 A.D. Thus, the dates of Narahari's epigraphs and the Acharya's own statement stand vindicated and reconciled. So Sri Madhvacharya must have been born in 1198 A.D., consecrated in the year 1215 A.D.; and departed to Badari in the year 1294 A.D. A word a about the year Pingala associated with his *aradhana.* Generally the aradhana of the Madhva coincides with their date of death. But in the case of Sri Madhvacharya, his death is nowhere even hinted at; so that there is no date for his death. People remembered only the date of his birth and this came to be celebrated. In fact the year Pingala coincides with the Christian year 1197 A.D. to 1198 A.D. This corresponds to the date of birth as given by the Acharya himself i.e. Kali year 4300 or 1198 A.D. The tradition of the Palamaru Mutt also says that the Acharya was born in the year Pingala (Epi. Ind. VI, p. 293).

Sri Madhvacharya was successively followed by four generations of his immediate disciples the first Sri Padmanabha Tirtha, the author of *Sanyaya Ratnavali* (Com. on Br. Sutra) held the office for 7 years and his brindavanam is in Hampi; Sri Padmanabha Tirtha was followed successively by Sri Narahari Tirtha, Sri Madhava Tirtha, and Sri Akshobhya Tirtha. The tenth Guru from Sri Madhva was Sri Ramachandra Tirtha, who had two disciples, the elder Sri Vibhudendra Tirtha, the founder of the present Sri Raghavendra Swami Mutt, and the younger Sri Vidyanidhi Tiitha, the founder of the Uttaradi Mutt.

The founder of Sri Raghavendra Swami Mutt was an intellectual genius and attractive personality. He travelled all over India and won the admiration of every body. His *Brindavana* at Tinnavelli is an evidance of his gubernatorial virtues. Two epigraph of different dates mark his influence on his contemporaries and successors. An inscription of SS. 1435 says, that Rama Raya, the grand father of Aliya Rama Raya (who died in 1565 A.D.) regranted to Sri Surendra Tirtha 6 villages which had been previously granted by his own ancessors to Sri Surendra Tirtha Sripada (9). [Another of S.S. 1412, makes a grant to Sri Vibhudendra Tirtha, worshipper of Digvijaya Rama etc. This

